BIBLIOTHECA INDICA:
A
**Collection of Oriental Works**
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, NOS. 1169.

# ॥ शतपथब्राह्मणम् ॥

## ॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRAHMAṆA
## OF THE WHITE YAJURVEDA,
WITH THE
## COMMENTARY OF SAYAṆA ÂÇÂRYA.




EDITED BY
ÂÇÂRYA SATYAVRATA SÂMAS'RAMI.

VOL. V, FASCICULUS I.

CALCUTTA:
PRINTED BY HITAVRATA CHATTERJI, SATYA PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET,
1907.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## Asiatic Society of Bengal,

No. 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS MR. BERNARD QUARITCH, 15, PICCADILLY, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.



*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

*Sanskrit Series.*

| | | |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2,4 @ /10/ each ... Rs. | 1 | 4 |
| Advaitachintā Kaustubhe, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| *Agni Purāṇa, Fasc 3-14 @ /10/ each ... | 7 | 8 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc 1-5, Vol, IV, Fasc. 1-8 @ /10/ ... | 14 | 6 |
| Aitareyālochanum, (the preface of the Ditto) by Ācārya S.V. Sāmasrami ... | 2 | 0 |
| *Anu Bhāshya, Fasc 2-5 @ /10/ each ... | 2 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... | 3 | 2 |
| *Atharvana Upanishad, Fasc. 2-5 @ /10/ each ... | 2 | 8 |
| Avadāna Kalpalatā, (Sans. and Tibetan) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-5 @ 1/ each ... | 11 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-2 @ 1/ each ... | 2 | 0 |
| Bālam Bhaṭṭi, Vol. I, Fasc. 1-2 @ /10/ ... | 1 | 4 |
| Baudhāyana Srauta Sutra, Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| *Bhāmati, Fasc 4-8 @ /10/ ... | 3 | 2 |
| Bhaṭṭa Dīpikā Vol. I, Fasc. 1-5 @ /10/ ... | 3 | 2 |
| Brahma Sutra, Fasc. 1, @ /10/ ... | 0 | 10 |
| Bṛhaddēvatā, Fasc. 1-4 @ /10/ each ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntidevi, Fasc. 1-4 ... | 2 | 8 |
| Çatadusani, Fasc. 1-2 ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I Fasc 1-7, Vol II Fasc 1-5, Vol III Fasc 1-7... | 11 | 14 |
| Çatasāhasrikā-prajñapāramitā, Part I, Fasc. 1-12 @ /10/ each ... | 7 | 8 |
| *Caturvarga Chintāmani, (Text) Vols. II, 1-25; III. Part I, Fasc. 1-18, Part II, Fasc. 1-10 @ /10/ each; Vol. IV, Fasc. 1-5 ... | 36 | 4 |
| Çlokavārtika, (English) Fasc. 1-5 @ 1/4/ ... | 6 | 4 |
| *Çrauta Sūtra of Āpastamba, Fasc. 6-17 @ /10/ each ... | 7 | 8 |
| Ditto Açvālāyan, Fasc 1-11 @ /10/ each ... | 6 | 14 |
| Ditto *Çānkhāyan, (Text) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4, Vol IV Fasc. 1 @/10/ each ... | 10 | 0 |
| Ditto Lātyāyan Fasc. 1-9 @ /10/ each ... | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1-3 @ /10/ each ... | 1 | 14 |
| Dān Kriyā Kaumudi, Fasc. 1-2 ... | 1 | 4 |
| Gadādhara Paddhati Kālasāra, Vol I, Fasc. 1-7... | 4 | 6 |
| Ditto Ācārasāra, Vol II, Fasc. 1-2 ... | 1 | 4 |
| Gobhilīya Gṛhyo Sutram, Fasc. 1-12 @ /10/ ... | 7 | 8 |
| Kāla Viveka, Fasc. 1-7 ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc 1-14 @ /1/4/ each ... | 17 | 8 |
| Kūrma Purāṇa, Fasc. 1-9 @ /10/ each ... | 5 | 10 |
| Lalita-Vistāra, (English) Fasc. 1-3 @ 1/ each ... | 3 | 0 |
| Ditto Fasc. 3-6 @ /10/ each ... | 2 | 8 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... | 6 | 14 |
| Mahā-bhāṣya-pradīpōdyota, Vol. I Fasc. 1-9 & Vol. II, Fasc. 1-12, Vol. III, Fasc. 1-4 @ /10/ each ... | 15 | 10 |
| Manuṭikā Sangraha, (Text) Fasc 1-3 @ /10/ each ... | 1 | 14 |
| Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/ each ... | 9 | 0 |
| * Ditto (Text) Fasc. 4-7 @ /10/ ... | 2 | 8 |
| *Mīmāṁsā Darcaṇa, (Text) Fasc. 3-19 @ /10/ each ... | 10 | 10 |

# ॥ शतपथब्राह्मणम् ॥



॥ अथ ॥

## पञ्चमकाण्डम् ।

### ॥ अथ प्रथमः प्रपाठकः ॥

॥ प्रथमं ब्राह्मणम् ॥

॥ अपित्वा प्रथमाध्याये प्रथमं ब्राह्मणम् ॥



॥ हरिः ॐ ॥

देवाश्च वा ऽसुराश्च । उभये प्राजापत्याः * ऽस्पृधिरे ततो ऽसुरा अतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु † जुह्वतश्चेरुस्ते ऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य हैतन् मुखं यदतिमानः ‡ ॥ १ ॥

* 'उभयप्राजापत्याः'—इति क ।

† स्वेष्वेवास्येषु'—इति क । ‡ 'नः'—इति ग, घ ।

अथ * देवाः । अन्यो ऽन्यस्मिन्नेव जुह्वतश्चेरुस्तेभ्यः प्रजापतिरात्मानं प्रददौ यज्ञो हैषा मास यज्ञो हि देवाना मन्नम् ॥ २ ॥

ते होचुः । कस्य न इदं भविष्यतीति ते मम † ममेत्येव न सम्पादयाञ्चक्रुस्ते हासम्पाद्योचुराजि मेवास्मिन्नजामहै स यो न उज्जेष्यति तस्य न इदं भविष्यतीति तथेति तस्मिन्नाजि माजन्त ॥ ३ ॥

स बृहस्पतिः । सवितार मेव प्रसवायोपाधावत् सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत इद मुज्जयानीति तदस्मै सविता प्रसविता प्रासुवत्तत् सवितृप्रसूत उदजयत् स इदꣳ सर्व्व मभवत् स इदꣳ सर्व्व मुदजयत्प्रजापतिꣳ ह्युदजयत् सर्व्व मु ह्येवेदं प्रजापतिस्तेनेष्ट्वैता ‡ मेवोर्ध्वा दिश मुदक्रामत्तस्मादाश्च व्वेद यश्च § नैषोर्ध्वा बृहस्पतेर्दिगित्येवाहुः ॥ ४ ॥

तद्वो ह स्म पुरा व्वाजपेयेन यजन्ते । एताꣳ

* 'अथ'—इति क। † नास्त्येतत् पदं ख-पुस्तके।

‡ 'नेष्ट्वैता'—इति ख, 'नेष्ट्वैवैता'—इति घ।

§ 'यश्च'—इति ग, घ।

ह स्मैवोर्ध्वां दिश मुत्क्रामन्ति तत सौपाविनैव जानश्रुतेयेन प्रत्यवरूढं ततो ऽर्वाचीनं प्रत्यवरोहन्ति ॥ ५ ॥

तेनेन्द्रो ऽयजत। स इद सर्व्वमभवत् स इद सर्व्वमुदजयत् प्रजापतिं ह्युदजयत् सर्व्व मु ह्येवेदं प्रजापति स्तेनेष्ट्वा* मेवोर्ध्वां दिश मुदक्रामत् ॥ ६ ॥

तद्ध ह स्म पुरा व्वाजपेयेन यजन्ते। एताः ह स्मैवोर्ध्वां दिश मुत्क्रामन्ति तत सौपाविनैव जानश्रुतेयेन प्रत्यवरूढं ततो ऽर्वाचीनं प्रत्यवरोहन्ति ॥ ७ ॥

स यो व्वाजपेयेन यजते। स इद सर्व्वं भवति स इद सर्व्व मुज्जयति प्रजापतिं ह्युज्जयति सर्व्व मु ह्येवेदं प्रजापतिः ॥ ८ ॥

तदाहुः। न व्वाजपेयेन यजेत सर्व्वं वा ऽएष इद मुज्जयति यो व्वाजपेयेन यजते प्रजापतिं ह्युज्जयति सर्व्व मु ह्येवेदं † प्रजापतिः स इह न

* स्तेनेष्ट्वा — इति ख, 'स्तेनेष्ट्वैवा' — इति भ।

† ह्येवेदं — इति ग, भ

किञ्चन परिशिनष्टि तस्मादीश्वरः प्रजा पापीयसी भवितोरिति ॥ ९ ॥

तदु वै यजेतैव*। य ऽएव मेतं यज्ञं कृत्स्नं व्विद्युर्ऋक्तो † यजुष्टः सामतो ये प्रज्ञातयस्त ऽएनं याजयेयुरेषा ह त्वेवैतस्य यज्ञस्य समृद्धिर्यदेनं व्विद्वाᳬसो याजयन्ति तस्मादु यजेतैव ‡ ॥ १० ॥

स वा ऽएष ब्राह्मणस्यैव यज्ञः §। यदेनेन बृहस्पतिरयजत ब्रह्म हि बृहस्पतिर्ब्रह्म हि ब्राह्मणो ऽथो राजन्यस्य यदेनेनेन्द्रो ऽयजत क्षत्रᳬ ‖ हीन्द्रः क्षत्रᳬ राजन्यः ॥ ११ ॥

राज्ञ एव राजसूयᳬ ¶। राजा वै राजसूयेनेष्ट्वा भवति न वै ब्राह्मणो राज्यायाल मवरं वै राजसूयं परं व्वाजपेयᳬ ॥ १२ ॥

राजा वै राजसूयेनेष्ट्वा भवति। सम्राड्वा-जपेयेनावरᳬ हि राज्यं परᳬ साम्राज्यं काम-

* 'व'—इति क, 'व'—इति ग, घ।

† 'व्विद्याहक्तो'—इति मा॰ मम्मत इति डा॰ वेबरः।

‡ 'व'—इति ग, घ।

§ 'ज्ञः'—इति ग, घ।

‖ 'क्षत्रᳬ'—इति ग, घ।

¶ 'सूयᳬ'—इति घ।

येत वै राजा सम्राड् भवितु मवरꣳ हि राज्यं परꣳ साम्राज्यꣳ ॥ १३ ॥

स यो व्वाजपेयेनेष्ट्वा सम्राड् भवति । स इदꣳ सर्व्वꣳ संवृङ्क्ते स कर्मणः-कर्मणः पुरस्तादेताꣳ सावित्री माहुतिं जुहोति देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति ॥ १४ ॥

तद्यथैवादो बृहस्पतिः । सवितारं प्रसवायोपाधावत् सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत इद मुज्जयानीति तदस्मै सविता प्रसविता प्रासुवत्तत् सवितृप्रसूत उदजयदेव मेवैष एतत् सवितार मेव प्रसवायोपधावति सविता वै देवानां प्रसवितेदं मे प्रसुव त्वत्प्रसूत इद मुज्जयानीति तदस्मै सविता प्रसविता प्रसौति तत् सवितृप्रसूत उज्जयति ॥ १५ ॥

तस्मादाह । देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगाय । दिव्यो गन्धर्व्वः केतपूः केतं नः पुनातु व्वाचस्पतिर्व्वाजं नः स्वदतु स्वाहेति प्रजापतिर्वै व्वाचस्पतिरन्नं व्वाजः प्रजापतिर्न इदमन्नꣳ स्वदत्वित्येवैतदाह स एता मेवाहुतिं

जुहोत्या श्वःसुत्याया एतद्वास्यैतत् कर्मारब्धं भवति प्रसन्न एतं यज्ञं भवति ॥ १६ ॥ १ ॥

॥ इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् [१.१.] ॥

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १ ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ २ ॥
काण्डे संस्थाः समुदितास्तुर्येऽग्निष्टोमपूर्विकाः ।
काण्डे तु पञ्चमे वाजपेयः प्रस्तूयते ततः ॥ ३ ॥
राजसूयः सम्प्रपन्नो * मन्त्राम्नानक्रमेण तु ।
प्रक्रान्तावुपदिष्टत्वादङ्गजातस्य नो वचः ॥ ४ ॥
वैशेषिकास्तु वक्ष्यन्ते यज्ञद्वयगता गुणाः ।
व्याख्यायते तन्निपुणं ब्राह्मणं तद्विधायकम् ॥ ५ ॥

तत्र वाजपेयं † विधातुं प्रस्तौति —"देवाश्च वा असुराश्चेति ।

* 'सम्प्रपन्न'—इति ङ, च ; 'सम्प्रपन्नं' क । 'सम्पन्न(च)'—इति ज ।

† तैत्तिरीयसंहितायां प्रथमकाण्डे सप्तमे प्रपाठके सप्तमादिषु षट्स्वनुवाकेषु वाजपेयमन्त्रा आम्नाताः, तैत्तिरीयब्राह्मणे द्वितीयकाण्डे तृतीये प्रपाठके द्वितीयादिष्वष्टस्वनुवाकेषु वाजपेयब्राह्मणमाम्नातम् । तत्र, "य एवं विद्वान् वाजपेयेन यजते गच्छति स्वाराज्यम्, अग्रं समानानां पर्येति, तिष्ठन्तेऽस्मै ज्यैष्ठ्याय"—इति वाजपेयविधिः । "स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः"—इति अधिकारिविशेषविधिः । "तं वा एतं वाजपेय इत्याहुः, वाजाप्यो वा एष वाजꣳह्येतेन देवा ऐप्सन्"—इति तन्नामनिर्वचनम् । तदिदं सर्वं तै० ब्रा० १. ३. २. ३ द्रष्टव्यम् ।

'प्राजापत्याः' प्रजापतिना सृष्टाः 'उभये' द्विविधाः 'देवाश्च असुराश्च' 'पस्पृधिरे' स्पर्द्धाञ्चक्रुः । 'ततोऽसुराः' स्वतोऽन्यः प्रबलो नास्तीति 'अतिमानेन' (अभिमानेन *) भूयिष्ठेन दर्पेण 'कस्मिन्नु' खलु होमाधिकरणे 'वयं' 'जुहवाम' होमं कुर्याम 'इति' धिक्कृत्य स्वकीयेषु आस्येषु होमं चक्रुः । 'ते' असुराः अत्यन्तगर्वेण पराजिताः । 'तस्मात्' अद्यापि कश्चिदपि नातिमानं कुर्यात् ; 'अतिमानः' अभिमानं 'यत्', तत् 'पराभवस्य' प्रापकमिति ॥ १ ॥

देवानां तद्विपर्ययं दर्शयति— अथ देवा इति । 'देवाः' खलु 'अन्योऽन्यस्मिन्' जुहुवुः ; इन्द्रः अग्नौ, अग्निः इन्द्रे, इत्यादिक्रमेणेत्यर्थः । 'तेभ्यः' देवेभ्यः , अन्योऽन्यस्मिन् देवतात्वेन होमकरणात् प्रीतः † 'प्रजापतिः' , 'आत्मानं' शरीरं दत्तवान् । "यज्ञो हैषा मिति । 'हि' यस्मात् 'देवाना मन्नं यज्ञः' , अतोऽत्रान्योऽन्यस्मिन् हविःप्रदानेनान्नमध्यत्वात् प्रजापतिशरीरं यज्ञ एव तेषा मासीदित्यर्थः । यज्ञशब्देन वाजपेय उच्यते, प्रकरणबलात् । तथाच तैत्तिरीयके--"एष वाव यज्ञो यद् वाजपेयः"-इति ‡ ॥२॥

तत्र वाजपेये सर्वदेवानां पुरस्ताद् वाजपेयस्यानुष्ठानेन इदमन्तरेव श्रैष्ठ्यं वक्तु माभिधावनं दर्शयति— "ते होचुरिति । 'ते' देवाः आगच्छन्तं यज्ञं दृष्ट्वा 'नः' अस्माकं मध्ये 'इदम्' इति सामान्येन निर्देशः , अयं वाजपेय-यज्ञः 'कस्य भविष्यति ?' 'इति' 'ऊचुः' । ततः 'ते' सर्वेऽपि ममैवायं यज्ञो ममैवायं यज्ञ इति § विवदमानाः 'न सम्पादयाञ्चक्रुः' अस्यैवायं यज्ञ इति न निश्चित-

* नास्त्येतत् पदं क-पुस्तके। † 'प्रतीतः'—इति च।

‡ तै० ब्रा० १. ३. २, ५ § अयं द्विरुक्तिर्नास्ति च-पुस्तकादर्शम्।

वन्त: । 'ते' देवा: 'अस्मिन्' विषये 'आजिम्' 'अजामहै' गच्छाम इति समयञ्चक्रु: । 'न:' अस्माकं मध्ये आजिधावनेन 'य:' कश्चित् 'उज्जेष्यति' 'तस्य' अयं यज्ञो भवत्विति सर्वैरङ्गीकृत्य 'तस्मिन्' वाजपेयविषये विजयार्थम् 'आजिम्' 'आजन्त' अधावन् । "अज गतिक्षेपणयो: *" । आजिर्नाम धावनप्रदेशस्यावधिर्भूमिविशेष: † ॥ २ ॥

उत्तरत्र वाजपेयस्य सकलकर्मप्रारम्भे सावित्रहोमो विधास्यते ‡, तदर्थं बृहस्पतेरपि प्रथमं सवितृविषय मुपधावनं दर्शयति— "स बृहस्पतिरित्यादिना । तत्राजिं प्रधावन् 'बृहस्पति: 'सवितार मेव' 'प्रसवाय' अनुज्ञानाय 'उपाधावत्' । इतरदेववद् धावनप्रदेश मेव लक्षीकृत्य गत इत्येवकारार्थ: । सवितुरुपधावने कारण माह— "सविता वा इति । 'प्रसविता' अनुज्ञाता । "इदं म इति । बृहस्पते: प्रार्थनावाक्यस्याय मर्थ:— हे सवित: ! मह्यम् 'इदं' वक्ष्यमाणं कार्यं 'प्रसुव' अनुजानीहि । "षू प्रेरणे"–इति § धातु: । 'त्वत्प्रसूत:' त्वयानुज्ञात: 'इदम्' 'उज्जयानि' साधयामि । सर्वदेवेभ्य: पुरस्तात् तेनानुज्ञात: 'उदजयत्' । यत उदजयत: 'स:' 'इदं' परिदृश्यमानं 'सर्वं' जगत् 'अभवत्' । सर्वोज्जयेन प्रजापति मेव जितवान् भवति । अनेन वाजपेयस्य सर्वजगदात्मक-प्रजापतिरूपप्राप्ति: फल मित्युक्तं भवति । "तेने-

* धा० प० १३० धा० ।

† तै० ब्रा० १.३.२.१ ; ऐ० ब्रा० ४.१.१ ; षा० ब्रा० २.४.१३.४ इत्यादि द्रष्टव्यम् । काष्ठाशब्दश्च प्रयुज्यते तत्र । तदाह यास्क:— "आज्यन्तोऽपि काष्ठोच्यते ; क्रान्त्वा स्थितो भवति"—इति निरु० २.५.१ ।

‡ इहैव ब्राह्मणे चतुर्दशकण्डिकायां द्रष्टव्यम् । कात्यायनेन च १४.१.११ सूत्रे विहितम् । § तु० प० १२७ धा० ।

माहैक मिदं ब्राह्मण मित्याह— "तद् ये ह स्मेति । अक्षरार्थस्तु— 'तत्' तस्माद् बृहस्पतिनानुष्ठितत्वाद् 'ये' 'पुरा' पूर्वं 'वाजपेयेन यजन्ते', ते सर्वे ऊर्ध्वं गच्छन्ति , 'ततः' ऊर्ध्वदिशः सकाशात् 'आनसुतेयेन' आनसुतेः पुत्रेण 'शौपाविना' तन्नाम्ना 'एव' एकेन राजर्षिणा 'प्रत्यवरूढं' प्रत्यवरोहः कृतः । भावे निष्ठा । "इतश्चानिञः"—इति * आनसुतेर्ढक् प्रत्ययः । 'ततः' आरभ्य इदानीमनुष्ठातारोऽपि 'अर्वाचीनम्' अवाङ्मुखं 'प्रत्यवरोहन्ति' इति ॥ ५ ॥

एवं वाजपेये ब्राह्मणस्याधिकारविधि मुक्त्वा बृहस्पति-वृत्तान्तं प्रदर्श्य क्षत्रियस्यापि तं समर्थयितु मिन्द्रवृत्तान्तं दर्शयति—"तेनेन्द्रोऽयजतेति । निगदव्याख्यातोऽर्थः । अस्मिन् पर्यायेऽपि 'तद्ध स्म'—इति वाक्यसन्दर्भः पूर्ववद् व्याख्येयः ॥ ६, ७ ॥

इत्थ माख्यायिकया वाजपेये ब्राह्मणराजन्ययोरधिकारिणौ प्रदर्श्य , इदानीं तं वाजपेयं विधत्ते— "स यो वाजपेयेन यजत इत्यादिना † ॥ ८ ॥

सर्वजयेन विराडात्मकप्रजापतिजयस्यानुचितत्वात् तत्साधन-भूतो वाजपेयो न कर्तव्य इति पूर्वपक्ष मुद्भावयति— "तदाहुर्न वाजपेयेनेत्यादि ‡ । "इह न किञ्चनेति । सर्वात्मकप्रजा-पतिजयेन 'इह' लोके 'न किञ्चन' परिशिष्टम् ; तस्मात् 'तस्य' यजमानस्य 'प्रजा' 'पापीयसी' अतिशयेन दारिद्र्यवती 'भवितोः'

* पा० सू० ४.१.१२२ ।

† 'उभयतः शुक्लपक्षौ बृहस्पतिसवेन यजते, ज्योतिष्टोमेन वा' —इत्यादि कात्यायनीयसूत्रोऽत्र निरीक्षणीयः ( १४. १. २—८ सू० ) ।

‡ 'अनिरिष्टो वाजपेयेन'—इति का० श्रौ० सू० १५. १. २ ।

अपितु मीश्वराः समर्थाः, 'इति' अतो हेतोः वाजपेयो न कर्त्तव्य इति ॥ ९ ॥

तन्निषेध मधिकारिविशेषनिरूपणेन परिहरति— "तदु वै यजेतैवेति। सर्वथा वाजपेययागः कर्त्तव्य इत्यवधारणार्थः। तत्र विदुष एव यष्टृत्वं विदुषा मेव याजयितृत्व मित्युभय मेवोपपादयति— "य एव मिति। 'यः' पुमान् 'एतं' वाजपेयं यज्ञम्, ऋगादिवेदत्रयेण 'क्लृप्तं' चेतिकर्त्तव्यत्वेन विहित इति 'विद्यात्' जानीयात्, 'ये' च 'प्रजज्ञयः' प्रज्ञातवन्तः साङ्गोपाङ्गं कर्म ज्ञातवन्त ऋत्विजः, 'ते' 'एनम्' यज्ञादिष्टं विद्वांसं यष्टारं 'याजयेयुः'। अतः साधारणैर्वाजपेययागो न कर्त्तव्य इत्यभिप्रायेण "न वाजपेयेन यजेत"-इत्युक्तम्। "एषा ह त्वेवैतस्येति। क्रियाकुशलानां मृत्विजां याजयितृत्व मेव यज्ञसमृद्धिः; अङ्गवैकल्याभावेन यज्ञसम्पूर्त्तेः सम्भवात् ॥ १० ॥

तत्र वाजपेये अधिकारिविधि सूचयति— "स वा एष ब्राह्मणस्येति। यतो बृहस्पतिनानुष्ठितः, यतो देवानां मध्ये बृहस्पतिः ब्राह्मणजात्यभिमानी, ब्राह्मणबृहस्पत्योर्ब्रह्मसम्बन्धाद् ऐकरूप्यम्; 'ब्रह्म अधीते वेद वा ब्राह्मणः'-इति व्युत्पत्तेः। इन्द्रेणाप्यनुष्ठितः, यतो देवानां मध्ये इन्द्रः क्षत्रियजात्यभिमानी। इन्द्रराजन्ययोः क्षत्रसम्बन्धादैकरूप्यम्; क्षत्रं नाम बलम्, तत्सद्भावात् उभयोः। अतो मनुष्येष्वपि ब्राह्मणराजन्ययोरेवाधिकारो न तु वैश्यस्य *। अत एव कात्यायनेनोक्तम्— "वाजपेयः शरदावृतः"-इति † ॥ ११ ॥

* "स वा एष ब्राह्मणस्य चैव राजन्यस्य च यज्ञः"—इति तै० ब्रा० १. ३. २. १

† का० श्रौ० सू० १४. १. १।

वाजपेयस्य साम्राज्यफल मिति वक्तुं प्रक्रमात् राजसूयस्याधिकारिभेदेन फलभेदेन वा अवरत्वं दर्शयति— "राज्ञ एव राजसूय मित्यादिना *। एवकारोऽन्ययोगव्यवच्छेदार्थः। राजशब्देन क्षत्रिय उच्यते, न तु राज्ययोगाद्राजेति व्युत्पत्त्या ब्राह्मणादिर्विवक्षितः। "अवरं वा इति। राजसूयाख्यं कर्म 'अवरं' निकृष्टम्; कतिपयदेशाधिपतित्वलक्षणराज्यफलमात्रसाधनत्वात्। वाजपेयाख्यं कर्मैव 'परम्' उत्कृष्टम्; सर्वदेशाधिपतित्वरूपसाम्राज्यफलसाधनत्वात्। राज्यात् साम्राज्यस्याधिक्य माह— "कामयेत वै राजेति ॥ १२, १३ ॥

अथ वाजपेयस्य साम्राज्यफलं दर्शयति— "स यो वाजपेयेनेति। 'सः' सम्राट् वाजपेययाजी 'इदं' परिदृश्यमानं 'सर्वं' जगत् 'संवृङ्क्ते' संवर्जयति, वशीकरोतीत्यर्थः †। एवं साम्राज्यफलं वाजपेयं विधाय तत्र कर्मादौ सावित्रहोमं विधत्ते— "स कर्मणः कर्मण इति। वीप्सया सर्वकर्मादौ कर्त्तव्यत्व मभिधीयते। येषां कर्मणा मादौ सावित्रहोमः कर्त्तव्यः, तानि कर्माणि कात्यायनेन सङ्गृहीतानि— "देव सवितरिति जुहोति यजत्यादिषु, सकृद् दीक्षारम्भे कर्मकत्वात्, क्रयप्रवेश्यारम्भणप्रवर्ग्योत्सादनाग्निप्रणयनहविर्धानाग्नीषोमाणां सदआग्नीध्रधिष्ण्यनिवपनवसतीवरीग्रहणपरिहरणेषु च कर्मान्तरत्वात्"—इति ‡। तत्र मन्त्रं विधत्ते—"देव सवितरिति §। तस्य मन्त्रस्याय

* 'राज्ञो राजसूयः'—इति का० श्रौ० सू० १५. १. १।

† मीमांसाया न्यायमालायां ( १अ० ४पा० ) द्रष्टव्यम्।

‡ का० श्रौ० सू० १४. १. ११, १२, १३।

§ वा० सं० ९. १. १।

अर्थः ;— हे 'सवितः देव' प्रेरक ! अन्तर्यामिन् ! 'यज्ञं' वाजपेयं 'प्रसुव' प्रवर्त्तय, 'यज्ञपतिं' यजमानं 'भगाय' अनुष्ठानरूपायैश्वर्याय 'दिव्यः' दिवि भवः यो 'गन्धर्वः' सवितुरनुग्रहात् 'केतपूः' केतान् पुनाति, प्राणिनां विज्ञानानि शोधयन् भवति, सः 'नः' अस्माकं 'केतं' वाजपेयविज्ञानं 'पुनातु' शोधयतु। 'वाचस्पतिः' प्रजापतिश्च सवित्रानुज्ञातः 'नः' अस्मदीयं 'वाजं' हवीरूपमन्नम् 'अद्य' अस्मिन्नहनि 'स्वदतु' स्वदयतु ॥ १४ ॥

सवितुरुपधावनं बृहस्पतिसम्बन्धेन स्तौति— "तद्यथैवाद इति। 'अदः' अस्मिन् विप्रकृष्टे पूर्वस्मिन् काले यथा 'बृहस्पतिः सवितारम्' 'उपाधावत्', ततः तस्मै सविता आनुज्ञां ददौ, एवम् 'एषः' इदानीमनुष्ठातापि त मेव 'उपधावति', तस्मै च 'प्रसविता' प्रेरयिता प्रसौति, अनुजानातीत्यर्थः ॥ १५ ॥

"तस्मादाहेति। सावित्रहोमस्य सकृदवृत्तितां दर्शयति— "आ प्रःसुत्याया इति। आङ् मर्यादायाम्। 'प्रः सुत्यायाः' सुत्यादिनात् पूर्वम्, नोत्तरत्रेत्यर्थः। अत एव कात्यायनः— "प्राक् सुत्यायाः"-इति * ॥ १६ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे प्रथमाध्यायस्य प्रथमं ब्राह्मणम् ॥

---

* का० श्रौ० सू० १४. १. १३ अ।

( अथ द्वितीयं ब्राह्मणम्. )

अꣳशुं गृह्णाति। सर्व्वत्वायैव तस्माद्वा अꣳशुं गृह्णात्यथैतान् प्रज्ञातानेवाग्निष्टोमिकान् ग्रहान् गृह्णात्याप्ययथात् * ॥ १ ॥

अथ पृष्ठ्यान् गृह्णाति। तद्यद्देवैतैर्देवा उदजयंस्तद्वैष एतैरुज्जयति † ॥ २ ॥

अथ षोडशिनं गृह्णाति। तद्यदेवैतेनेन्द्र उदजयत्तद्वैष एतेनोज्जयति ‡ ॥ ३ ॥

अथैतान् पञ्च वाजपेयग्रहान् गृह्णाति। ध्रुवसदं त्वा नृषदं मनःसद मुपयामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतम मिति सादयत्येषां वै लोकाना मय मेव ध्रुव इयं पृथिवी ममेवैतेन लोक मुज्जयति ॥ ४ ॥

अप्सुषदं त्वा §। घृतसदं व्योमसद मुपयामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनि-

* 'यात्'—इति ग. घ। †, ‡ 'ति'—इति क।

§ ग-घ-पुस्तकयोरिह छेदचिह्नं (।) नास्ति।

रिन्द्राय त्वा जुष्टतम मिति सादयत्येषां वै लोकाना मय मेव व्योमेद मन्तरिक्षलोक मेवै-तेनोज्जयति ॥ ५ ॥

पृथिविसदं त्वा । अन्तरिक्षसदं॰ दिविसदं देवसदं नाकसद मुपयामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतम मिति सादयत्येष वै देवसन्नाकसदेष एव देवलोको देव-लोक मेवैतेनोज्जयति ॥ ६ ॥

अपाꣳ रस मुद्वयसꣳ । सूर्ये सन्तꣳ समाहितम् । अपाꣳ† रसस्य यो रसस्तं वो गृह्णाम्युत्तम मुप-यामगृहीतो ऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतम मिति सादयत्येष वा अपाꣳ रसो यो ऽयं पवते स एष सूर्ये समाहितः सूर्यात् पवत ऽएत मेवैतेन रस मुज्जयति ॥ ७ ॥

ग्रहा ऊर्जाहुतयः । व्यन्तो विप्राय मतिम् । तेषां‡ विशिप्रियाणां वो ऽह मिष मूर्जꣳ समग्रभ मुपयाम-

॰ 'त्वान्तरिक्षसदं'—इति ग, घ।

† 'समाहित मपाꣳ'—इति ग, घ।

‡ 'मतिं तेषां'—इति ग, घ।

गृहीतोऽसीन्द्राय त्वा जुष्टं गृह्णाम्येष* ते योनि-
रिन्द्राय त्वा जुष्टतम मिति सादयत्यूर्ज्जं रसो रस
मेवैतेनोज्जयति ॥ ८ ॥

तान्वा ऽएतान्† । पञ्च व्वाजपेयग्रहान् गृ-
ह्णाति प्रजापतिं वा ऽएष उज्जयति यो व्वाज-
पेयेन यजते संवत्सरो वै प्रजापतिः पञ्च वा
ऽऋतवः संवत्सरस्य तत् प्रजापति मुज्जयति तस्मात्
पञ्च व्वाजपेयग्रहान् गृह्णाति‡ ॥ ९ ॥

अथ सप्तदश सामग्रहान् गृह्णाति । सप्त-
दश सुराग्रहान् प्रजापतेर्व्वा ऽएते ऽअन्धसी यत्
सोमश्च सुरा च ततः सत्यं श्रीर्ज्योतिः सोमो
ऽनृतं पाप्मा तमः सुरैते ऽएवैतदुभे ऽअन्धसी
ऽउज्जयति सर्व्वं वा ऽएष इद मुज्जयति यो व्वाज-
पेयेन यजते प्रजापतिꣳ ह्युज्जयति सर्व्वमु ह्येवेदं
प्रजापतिः ॥ १० ॥

स यत् सप्तदश । सोमग्रहान् गृह्णाति सप्त-
दशो वै प्रजापतिः प्रजापतिर्यज्ञः स यावा-

* 'जुष्ट मेव'—इति ग, घ।

† 'तान्'—इति ग, घ। ‡ 'ति'—इति क।

नेव यज्ञो यावत्यस्य मात्रा तावतैवास्यैतत् सत्यꣳ श्रियं ज्योतिरुज्जयति * ॥ ११ ॥

अथ यत् सप्तदश । सुराग्रहान् गृह्णाति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञः स यावा- नेव यज्ञो यावत्यस्य मात्रा तावतैवास्यैतदनृतं पाप्मानं तम उज्जयति ॥ १२ ॥

त ऽउभये चतुस्त्रिꣳशद् ग्रहाः सम्पद्यन्ते । त्रयस्त्रिꣳशद्वै देवाः प्रजापति श्चतुस्त्रिꣳश स्तत् प्रजापति मुज्जयति ॥ १३ ॥

अथ यत्र राजानं क्रीणाति । तद्दक्षिणतः प्रतिवेशतः केशवात् पुरुषात्सीसेन परिस्रुतं क्री- णाति न वा ऽएष स्त्री न पुमान् यत् केशवः पुरुषो यदाह पुमांस्तेन न स्त्री यदु केशवस्तेनो † न पुमान्नैतदयो न हिरण्यं यत् सीसं ‡ नैष सोमो न सुरा यत्परिस्रुत् तस्मात् केशवात् पुरुषात्सीसेन परिस्रुतं क्रीणाति ॥ १४ ॥

अथ पूर्व्वाह्णः । द्वौ खरौ कुर्व्वन्ति पुरोऽक्ष

* 'ति'—इति क । † 'स्तेन'—इति ग, घ ।

‡ 'सीसं'—इति ग, घ ।

मेवान्यं पश्चादन्य मन्यं नेत्सोमग्रहांश्च सुराग्रहांश्च सह सादयामेति तस्मात् पूर्वेद्युर्द्वौ खरौ कुर्वन्ति पुरोऽन्य मेवान्यं पश्चादन्य मन्यम् * ॥ १५ ॥

अथ यत्र पूर्वया द्वारा । वसतीवरीः प्रपादयन्ति तदपरया द्वारा नेष्टा परिस्रुतं प्रपादयति दक्षिणतः पात्राण्यभ्यवहरन्ति पुरो ऽन्यमेव प्रत्यङ्ङासीनो † ऽध्वर्युः सोमग्रहान् गृह्णाति पश्चादन्यं प्राङ्ङासीनो ‡ नेष्टा सुराग्रहान्त्सोमग्रह मेवाध्वर्युर्गृह्णाति सुराग्रहं नेष्टा सोमग्रह मेवाध्वर्युर्गृह्णाति सुरा नेष्टैव मेवैनान् व्यत्यासं गृह्णीतः ॥ १६ ॥

न प्रत्यञ्च मन्य मध्वर्युः । सोमग्रह मतिहरति न प्राञ्च मन्यं नेष्टा सुराग्रहं नेज्ज्योतिश्च तमश्च सꣳसृजावेति § ॥ १७ ॥

उपर्युपर्येवाक्ष मध्वर्युः । सोमग्रहं धारयत्यधोऽधोऽक्षं नेष्टा सुराग्रहꣳ सम्पृचौ स्थः सं मा भद्रेण पृङ्क्त मिति नेत्पाप मिति ब्रवावेति तौ पुनर्विहरतो विपृचौ स्थो वि मा पाप्मना पृङ्क्त

* 'मन्यम्'—इति क, ख । † 'प्रत्यङ् ङासीनो'—इति ग, घ ।
‡ 'प्राङ् ङासीनो'—इति ग, घ । § 'सꣳसृजावेति'—इति ङ ।

मिति तद्यथैषीकां मुञ्जाद्विवृहेदेव मेनꣳ सर्वस्मात्पाप्मनो विवृहति तस्मिन्न तावच्च नैनो भवति यावत्तृणमात्रं तौ सादयतः * ॥ १८ ॥

अथाध्वर्युः । हिरण्यपात्रेण मधुग्रहं गृह्णाति तं मध्ये सोमग्रहाणाꣳ सादयत्यथोक्थ्यं गृहीत्वाथ ध्रुव मथैतान्त्सोमग्रहानुत्तमे स्तोत्र ऽऋत्विजां चमसेषु व्यवनीय जुह्वति तान् भक्षयन्त्यथ माध्यन्दिने सवने मधुग्रहस्य च सुराग्रहाणां चोद्यते तस्मात् ॥ १९ ॥ २ ॥

॥ इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् [१.२.] ॥

एवं विहिते वाजपेये ग्रहविशेषा द्वितीयब्राह्मणेऽभिधीयन्ते, प्राकृतास्त्वतिदिश्यन्ते । तत्र तावदंशुग्रहं विधत्ते— "अंशुं गृह्णातीति । 'अंशु'' सोमग्रहं सोमद्रव्येण गृह्णीयात् । 'सर्वत्वाय' स्वविरुद्धप्रयुक्तन्यूनतादोषपरिहारेण यज्ञस्य सम्पूर्त्यै इत्यर्थः । अंश्वदाभ्ययोरप्राकृतत्वेन चोदकादप्राप्तयोरिह विधानं युक्तम् । अत एवापस्तम्बः— "भ्रातृव्यवतादाभ्यो गृहीतव्यो बुभूषतांशुस्तौ न सर्वत्र गृहीतव्यौ वाजपेये राजसूये सत्रे सर्ववेदसे" —इति † । अथ प्रकृतिमतानुपांश्वन्तर्यामादीनतिदिशति—

* 'सादयतः'—इति ग . घ ।

† आप० श्रौ० सू० १२. ८. १२, १३

"अथैतानिति। 'ग्रहान्' प्रसिद्धान् 'आग्निष्टोमिकान्' अग्नि-ष्टोमे विहितान् 'ग्रहान्' 'आ आग्रयणात्' आग्रयणपर्यन्तान् गृह्णी-यात्। उपांश्वन्तर्यामौ, ऐन्द्रवायव मैत्रावरुणाश्विनान्, शुक्रा-मन्थिनौ, आग्रयणञ्च गृह्णीयादित्यर्थः ॥ १ ॥

अथातिग्राह्यान् विधत्ते— "अथ पृष्ठ्यानिति। 'पृष्ठ्यान्' अतिग्राह्यान्। ते हि पृष्ठस्तोत्रसम्बन्धात् * पृष्ठ्या इत्यर्थः। पृष्ठ्यषडहे प्रतिदिवस मेकैकस्य, विश्वजिति सर्वपृष्ठे चैकाहे ग्रहणात् एतेषां पृष्ठ्यसञ्ज्ञा। तथाच चतुर्थकाण्डे समाम्नातम् —"अग्नीन्द्रसूर्या अतिग्राह्यान् ददृशुः"-इत्यारभ्य, "तान् वै पृष्ठ्ये षडहे गृह्णीयात्, पूर्वं त्र्यह आग्नेय मेव प्रथमेऽहन्यैन्द्रं द्वितीये सौर्यं तृतीय एव मेवान्वहम्"-इति, तथा "विश्व-जिति सर्वपृष्ठ एकाह एव गृह्यन्ते"-इति च †। तेषां प्रकृति-गता त्रित्वसङ्ख्यैव शाखान्तरवत्; सङ्ख्यान्तरानुपदेशात्। अत्र कात्यायनः— "प्रातस्सवनेऽतिग्राह्यान् गृहीत्वा षोडशिनम्" इति ‡ ॥ २, ३ ॥

ग्रहान्तराणि विधत्ते— "अथैतान् पञ्चेति। सूत्रितं हि— "पञ्च चैन्द्रान्, ध्रुवसद मिति प्रतिमन्त्रम्"-इति §। अथैतान् तेषां पञ्चानां ग्रहाणा मपि पञ्च मन्त्रान् विधत्ते—"ध्रुवसदं त्वेत्यादिना। तत्र, प्रथमग्रहमन्त्रस्याय मर्थः ||;— 'ध्रुवसदं' ध्रुवे स्थिरे

* 'एकाग्रहसम्बन्धात्'—इति च।
† पुरस्तात् ( ४. ४. ५. २ - १३. ) द्रष्टव्यम्।
‡ का० श्रौ० सू० १४. १. २८ क।
§ का० श्रौ० सू० १४. १. २८ ख. २. १
|| वा० सं० ६. २. १

भूलोके सीदन्तम्, 'नृषदं' नृषु मैनुषु सीदन्तम्, 'मनस्सदं' मनसि वर्त्तमानं 'त्वा' त्वां ग्रहम् 'इन्द्राय' 'जुष्टम्' अभिरुचितं 'गृह्णामि' त्वाम्। 'उपयामगृहीतोऽसि' पृथिव्याख्येन पात्रेण गृहीतोऽसि ; "इयं वा उपयामः"–इति श्रुतेः *। अत्र भिन्नक्रमः, यत उपयामगृहीतोऽसि अतस्त्वां गृह्णामीति। 'ते' तव एष खरप्रदेशो 'योनिः' स्थानम्, तस्मात् 'इन्द्राय' 'जुष्टतमम्' अभिप्रियतमं त्वा मिह सादयामीति। "एष ते योनिः"–इति मन्त्रांशभागस्य विनियोग माह—"सादयतीति। मन्त्रगतं ध्रुवपदं व्याचष्टे— "एषां वा इति। 'एषां लोकानां' भूम्यादीनाम् 'अयं' परिदृश्यमानो लोको 'ध्रुवः' इदंशब्दस्यार्थं माह— "इयं वै पृथिवीति ॥ ४ ॥

"अप्सुषद मिति। द्वितीयग्रहमन्त्रस्याय मर्थः † ;— अप्सु सीदन्तीत्यप्सुषत् तम्, घृते सीदन्तम्, 'व्योम्नि' अन्तरिक्षे सीदन्तम्। उपयामगृहीतोऽसीत्यादि पूर्वेण समानार्थ इति नेह विव्रियते। व्योमसदितिपदस्य तात्पर्य माह— "इद मेव व्योमेति। विशेषेण ओम् अवनं व्याप्तिर्यस्य तद् व्योम। तदेव 'अन्तरिक्षम्' तदेतद्वितीयग्रहणेन ‡ जितवान् भवतीत्यर्थः ॥ ५ ॥

"पृथिविसद मिति। तृतीयमन्त्रस्याय मर्थः § ;— पृथिव्यादिषु त्रिषु लोकेषु सीदन्त मत एव सदम्। लोकत्रयाभिमानिषु अग्निवायुसूर्येषु, अन्येष्विन्द्रादिषु च आसीदन्तम्। 'नाकसदम्' न विद्यते अकं दुःखं यस्मिन्निति नाकः स्वर्गो देवलोकः। अत एव स्वर्गपदस्य सुखवाचकत्व मन्यत्रोक्तम्—

* श० ब्रा० ४. १. २. ७। † वा० सं० ६. २. २।

‡ 'तद्विपरीतग्रहणेन'—इति घ, ङ। § वा० सं० ६. २. ३।

"यत्र दुःखेन सम्भिन्नं न च ग्रस्त मनन्तरम् ।
अभिलाषोपनीतं च सुखं स्वर्गपदास्पदम्"—इति ।

तत्र नाकसत्पदं व्याचष्टे— "एष एव देवलोक इति ॥ ६ ॥

"अपां रस मिति । चतुर्थग्रहमन्त्रस्याय मर्थः *,— 'अपां' 'रसं' सारभूतम्; उदकस्यैव सोमरसत्वेन परिणतत्वात् । 'उद्वयसम्' उद्गच्छन्तम् । "वी मति-प्रजनन-कान्त्यशन-खादनेषु †"—इत्यस्मादसुनि रूपम् । यद्वा, वय इत्यन्ननाम ‡, उद्गत मन्नं जीवनं वा यस्मिन् । सोमरसोऽन्नभूतो जीवनहेतुश्च; "अपाम सोम ममृता अभूम §"—इत्युक्तत्वात् । 'सूर्ये' 'सन्तं' विद्यमानं 'समाहितं' तत्रैव सम्यगाहितम्; रसस्योदकादिरूपस्य आदित्ये एवावस्थानात् । 'अपां' 'रसस्य' सारभूतस्य वल्लीरूपेण परिणतस्य सोमस्य 'यो रसः' दशापवित्रात्पवमानः, तम् । आपः! 'वः' युष्माकं सम्बन्धिनम् 'उत्तमम्' उत्कृष्टं स्वरसं 'गृह्णाति' ‖ । "उपयामेत्यादि । व्याख्यातम् । मन्त्रं व्याचष्टे— "एष वा अपा मिति । 'योऽयं पवते' दशापवित्रात् स्रवति, 'सः' अपां रसः । "एषः सूर्य इति । 'एषः' खलु सोमरसः उदकात्मना पूर्वं 'सूर्ये' 'समाहितः' सम्यगवस्थितः, इदानीं 'सूर्यात्' सूर्यात्मकाद् दशापवित्रात् 'पवते' स्रवति ॥ ७ ॥

"ग्रहा ऊर्जाहुतय इति । पञ्चमग्रहमन्त्रस्याय मर्थः ¶;— हे ग्रहाः! गृह्यन्त इति 'ग्रहाः' सोमाः । 'ऊर्जाहुतयः' ऊर्जं मन्नं सवनीयं पुरोडाश मभिलक्ष्य हूयमानाः; यद्वा,

---

* वा० सं० ६. ३. १ । † अदा० प० ३८ धा० ।
‡ निघ० २. ७. ७ । § ऋ० सं० ८. ४८. ३ ।
‖ 'गृह्णामि'—इति क, ख । ¶ वा० सं० ६. ४. १ ।

अन्नाहुतिभूता यूयम्। 'विप्राय' मेधाविने, स्वापेक्षितफलपरिपूरकाय वा यजमानाय। 'मतिं' विवक्षितां बुद्धिं 'व्यन्तः' पश्यन्तोऽनुजानन्तो भवतेति शेषः। 'विशिप्रियाणां' "शिप्रे हनू नासिके वा"-इति * यास्कवचनम्; इह हि हनू गृह्येते, तत्र भवं कर्म शिप्रियम्, विगतं शिप्रियं येषां ते। अत्र हनुव्यापाराभावात् शोभनाभिषवसंस्कृता इत्यर्थः। यद्वा, विविधानि शिप्रियाणि हनुस्थानीयानि पात्राणि, तत्पर्यन्तं, तेषां 'वः' युष्माकं सम्बन्धिनम् 'इषम्' अन्नम् 'ऊर्जम्' बलप्रदं सोमरसं 'समग्रभम्' "हृग्रहोर्भः †" समग्रहम्, सङ्गृह्णामि। शिष्टं पूर्ववत्। ऊर्क्-शब्दसूचित मर्थ माह—"ऊर्ग् वै रस इति ॥ ८ ॥

ग्रहगतां पञ्चसङ्ख्यां प्रशंसति— "तान् वा एतानिति। वाजपेययागस्य स्वरूपावाप्तिसाधनत्वात् प्रजापतेश्च संवत्सरात्मतया पञ्चर्त्तुरूपत्वात् ग्रहाणां पञ्च सङ्ख्या युक्तेत्यर्थः ‡॥ ९ ॥

ग्रहान्तराणि सद्रव्याणि विधत्ते— "अथ सप्तदशेति §। गृह्यन्त इति ग्रहाः सोमाः, सोमाश्च ते ग्रहाश्चेति विग्रहः, सोमस्य वा ग्रहाः। उभयेषां ग्रहाणां द्रव्यद्वय मनूद्य प्रशंसति— "प्रजापतेर्वा इति। 'अन्धसी' अन्ने इत्यर्थः। 'सत्यं श्रीः ज्योतिः सोमः' सत्य-श्री-ज्योतिरात्मकत्वं सोमस्य; इतरस्यास्तु 'अनृतं पाप्मा तमः' अनृतपापतमोरूपत्वम्। पाप्मेति दारिद्र्यम् ॥ १० ॥

उक्तग्रहसङ्ख्यां प्रजापत्यात्मकत्वेन स्तौति— "स यत् सप्त-

---

* निरु० ६. ४. १। † पा० ८. २. ६२ सू० वा० १।

‡ 'अतिग्राह्यवद्धोमः'—इति का० श्रौ० सू० १४. २. १। 'पञ्चानामैन्द्राणाम्'—इति तत्र वृत्तिः।

§ 'सप्तदशाग्रपरान्'—इति का० श्रौ० सू० १४. २. ३। 'सोमग्रहान्'।

दशेति। प्रजापतेः सप्तदशत्वम् "आश्रावय"-इत्यादि-सप्तदशाक्षरमन्त्रात्मकत्वादित्यवगन्तव्यम् *। स एव यज्ञः; आश्रावयेत्यादिमन्त्राभावे यज्ञस्यासिद्धेः। श्रूयते च "प्रजापतिर्वै यज्ञः" -इति †। अतः 'स यज्ञः' 'यावान्' यत्परिमाणः, कियत्सङ्ख्याकावयव इत्यर्थः। 'यावती' 'मात्रा' परिमितिः, 'तावतैव' सप्तदशसोमग्रहवता यज्ञेन 'अस्य' अस्य यज्ञात्मकस्य प्रजापतेः सत्यादिकं यष्टा अर्जितवान् भवतीति ॥ ११ ॥

"अथ यत् सप्तदशेति। यथा सोमग्रहवाक्यं योजितम्, एव मेव सुराग्रहवाक्यं योज्यम्; एतावांस्तु विशेषः— तत्र सत्यादिरुज्जयप्राप्तिः, अत्रानृतादेर्निरासाज्जय इति ‡ ॥ १२ ॥

द्विविधग्रहाणां सङ्ख्यां मिलित्वा स्तौति— "त उभये चतुस्त्रिंशदिति। अष्टौ वसव एकादश रुद्रा द्वादशादित्या इन्द्रवषट्काराविति 'त्रयस्त्रिंशद्' देवताः, 'प्रजापतिः' तु 'चतुस्त्रिंशः' इति ॥ १३ ॥

प्राकृतं सोमक्रयणविधि मनूद्य परिस्रुत्क्रयणं विधत्ते— "अथ यत्रेति। 'यत्र' प्रदेशे 'राजानं' सोमलता मित्यर्थः, क्रीणीयात्, तस्य दक्षिणे प्रतिवेशे स्थाने 'केशवात्' केशा अस्य सन्तीति स तथोक्तः। "केशाद् वोऽन्यतरस्याम्"-इति §

---

* स एष मन्त्रः— "आश्रावयेति चतुरक्षर मस्तुश्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिः"--इति तै० सं० १. ६. ११. २।

† पुरस्तात् ( श० ब्रा० १. १. १. १३. ) द्रष्टव्यम्।

‡ 'नेष्टा च तावतः सौरान्'-इति का० श्रौ० सू० १४. २. ४।

§ पा० सू० ५. २. १०९।

व-प्रत्ययः। तस्मात् 'पुरुषात्' सीसद्रव्येण 'परिस्रुतं' क्रीणीयात्। लोके हि सुरा तत्साधनभूतैः * परिपक्वद्रव्यैः क्रियते, अत्र तु सुरासाधनाय † पर्याप्तपरिपाकैः शष्पैर्निष्पन्नो रसः परिस्रुदित्युच्यते। कात्यायनेन तस्यास्तत्साधनद्रव्याणां वा क्रयणं विकल्पेनोक्तम्— "सोमात् क्रीयमाणात् सहितं दक्षिणतः सीसेन परिस्रुतः क्रयणं केशवात्तद्द्रव्याणां वा"-इति ‡। तैत्तिरीये तु द्रव्यक्रय एवोक्तः— "सीसेन क्लीवाच्छष्पाणि क्रीणाति"-इति § ॥

"न वा एष स्त्री"-इत्यादिकस्याय मर्थः;— सीस-केशव-परिस्रुताम् ‖ अन्तरालवर्त्तित्वं साम्यम्। 'यत्' यतः, परिस्रुत्-क्रेता 'पुमान्' पुंलक्षणवान्, श्मश्रुयुक्त इत्यर्थः, 'तेन' कारणेन 'स्त्री न' भवति; यस्मात् 'केशवः' केशयुक्तः, 'तेन' केशबाहुल्यवत्त्वेन 'पुमान्' च 'न' भवति; केशबाहुल्यं तु स्त्रीलक्षणम्; अतः केशवत्क्लीवः ¶ स्त्रिया अधिकः, पुरुषात् न्यूनः; सीस मप्ययसोऽधिकं, हिरण्यात्तु न्यूनम्। परिस्रुच्च सा इता **

* 'लोके हि सुतरां तत्साधनद्रव्यैः'—इति ङ, छ।

† 'सुरासाधनो यः'—इति च।

‡ का० श्रौ० सू० १४. १. १४, १५।

§ तै० ब्रा० १. ८. ५. ३। "न वा एतद्दयो यत् सीसम्, न स्त्री न पुमान् यत् क्लीवः, न सोमो न सुरा यत् सौत्रामणीसम्टद्धे" —इति च तत्र तदुत्तरम्।

‖ '०परिश्रितानाम्'—इति च।

¶ 'क्लीवपुरुषः'—इति ङ।

** 'परिस्रुत्रसादप्ता'—इति ङ, छ; 'परिस्रुत्रसाप्ता'—इति च; ज-पुस्तके तु नास्त्येव।

सुरा न भवतीति ततोऽधिका, सोमवत्पूतत्वाभावात् ततो न्यूना। तस्माद् यथोक्त मेव कर्त्तव्य मिति स्थितम् ॥ १४ ॥

अथ द्वितीय मेव * ग्रहाणां ग्रहासादनं माभूदिति प्रदेश-विशेषं विधत्ते— "अथ पूर्वेद्युर्द्वौ खराविति। 'पुरोऽक्षम्' शकटस्याधस्तात् अक्षस्य पुरोभागे एकम्, 'पश्चादक्षम्' अक्षस्य पश्चाद्भागेऽपरम्, इति 'द्वौ खरौ' 'पूर्वेद्युः' पूर्वदिवसे कुर्युः † । तत्र कारण माह— "नेत् सोमग्रहानिति। "नेत् सादया-मेति। सह सादन मयुक्त मित्यभिप्रायेण पृथक्-सादनार्थं खर-द्वयं कर्त्तव्य मित्यर्थः। 'नेत्'-इति परिभये ‡ ॥ १५ ॥

वसतीवरीणां हविर्द्धानप्रपादन मनूद्य परिस्रुत्प्रपादने कश्चिद् विशेषं विधत्ते— "अथ यत्रेति। 'अपरया' पश्चि-मया 'द्वारा' 'नेष्टा' नाम ऋत्विक्, अध्वर्युवर्गे तृतीयः § 'प्रपादयति' प्रवेशयेदित्यर्थः। "दक्षिणत इति। हविर्द्धानस्य दक्षिणतो द्वारं कृत्वा तेन सोमग्रहपात्राणि सुराग्रहपात्राणि च प्रवेशयतीत्यर्थः ‖ । सूत्रितं हि— "दक्षिणतः सन्धिं करोति, यूपवेष्टनं सप्तदशभिर्वस्त्रैर्व्युदुग्रथनं वा परिव्ययणकाले, ०—० सन्धिना पात्राण्याहृत्य"-इति ¶ ।

---

* 'कर्त्तव्य मेव'—इति च।

† का० श्रौ० १४.१.१८ सू० द्रष्टव्यम्।

‡ "अथापि नेत्येष इदित्येतेन सम्प्रयुज्यते परिभये"—इति निरु० १. ३.६।

§ तथाचाश्वलायनः— "चत्वारस्त्रिपुरुषाः तस्योत्तरे त्रयः ;— होता ०—० अध्वर्युः, प्रतिप्रस्थाता, नेष्टा, उन्नेता"—इति ४.१.६।

‖ 'प्रवेशयन्तीत्यर्थः'—इति च, छ।

¶ का० श्रौ० सू० १४.१.१६—२७।

वर्गद्वयग्रहणे ऋत्विजोर्नियमं दर्शयति— "पुरोऽक्ष मित्यादिना। विभागेन धारणाय व्यत्यासं विधत्ते— "सोमग्रह मेवाध्वर्युरिति। 'व्यत्यासम्' व्यत्यस्य-व्यत्यस्येत्यर्थः। अध्वर्युणा प्रथमे सोमग्रहे गृहीते सति, नेष्टा प्रथमं सुराग्रहं गृह्णीयात् *; ततो द्वितीये द्वितीय मिति सोऽयं व्यत्यासः † ॥ १६ ॥

ग्रहाणा मन्यप्रदेशप्रापणं निषेधति— "न प्रत्यञ्च मक्ष मिति। 'प्रत्यञ्च मक्षम्' अक्षस्य पश्चाद् भागं 'प्रति' 'सोमग्रहम्' 'अध्वर्युः' 'न अतिहरति' नातिहरेत्, नातिक्रामयेत्। एवं 'नेष्टा' अपि 'सुराग्रहं' 'प्राञ्च मक्षम्' शकटाक्षस्य पुरोदेशं नातिहरेत्। उभयत्र कारण माह— "नेज्ज्योतिरिति। यदि ग्रहाणा मन्योन्यदेशातिक्रमणं स्यात्, तर्हि तेजस्तिमिरयोः संसर्गः स्यात्, स मा भूदिति व्यतिहरणनिषेधः। सोमस्य ज्योतीरूपत्वं सुरायास्तु तमोरूपत्वं च प्रागावेदितम् ‡ ॥ १७ ॥

उभयग्रहधारणे कश्चिद् विशेषं विधत्ते— "उपर्युपर्येवाक्ष मध्वर्युरिति। अक्षस्य सन्निकृष्टोपरिभाग एव सोमग्रहस्य, सन्निकृष्टाधःप्रदेश एव सुराग्रहस्य §। "उपर्यधसः सामीप्ये"-इति द्विवचनम् ‖। धारणमन्त्रं विधत्ते— "सम्पृचौ स्थ इति ¶। तस्यार्थः ;— वर्गद्वयमध्ये एकैकस्योक्तप्रदेशे धारणात् उभयो-

* का० श्रौ० १४. २. ४ सू० द्रष्टव्यम्।

† का० श्रौ० सू १४. २. ५।

‡ का० श्रौ० सू० १४. २. ६।

§ 'सुराग्रहं'—इति च, छ। मूलस्य प्रतीकग्रहणा मिदं स्यात्।

‖ पा० सू० ८. १. ७।

¶ वा० सं० ६. ४. २।

द्वित्वेन मन्त्रे 'सम्पृचौ'—इति, 'पृङ्क्तम्'—इति च द्विवचन मुक्तम्। हे सोमसुराग्रहौ? 'सम्पृचौ' संसृष्टौ 'स्थः'। यतो युवां सम्पृक्तावभवतम्, अतो 'मा' माम् अपि 'भद्रेण' प्रजापतिना "प्रजा वै भद्रम्, पशवो भद्रम्"—इति * श्रुतेः। 'पृङ्क्तं' संयोजयत मिति। कात्यायनस्तु शाखान्तरानुसारेण धारणाहरणमन्त्रयोः प्रतीकं बहुवचनत्वेनोदाजहार— "अध्वानतिक्रमणं ग्रहाणाम्, उपर्युपर्यन्य मध्वर्युर्धारयत्यधोधो नेष्टा सम्पृचाविति, विपृचावित्याहरते"—इति †।

प्रयोजनकथनमुखेन मन्त्रस्य तात्पर्य माह— "नेत् पाप मिति ब्रवावेति। यद्युभयोर्ग्रहयोर्धारणसमये सम्पर्कवाचकमन्त्रे 'भद्रेण पृङ्क्त मिति' यत् प्रार्थनम्, तत् सुराग्रहं ‡ पाप मित्येवं नैव ब्रवावेत्यभिप्रायेणेत्यर्थः।

अन्यप्रदेशात् तयोः स्वस्वप्रदेशेऽवस्थापनं समन्त्रकं विधत्ते— "तौ पुनर्विहरत इति §। हे ग्रहौ! 'विपृचौ' वियुक्तौ 'स्थः'। यत एवम्, अतो ममापि प्रार्थनां वियोजत मिति।

मन्त्रस्योत्तरभागं व्याचष्टे— "तद्यथेषीका मिति। यथा 'मुञ्जात्' मुञ्जतृणात् 'इषीकाम्' मध्यवर्त्ति तृणं 'विवृहेत्' पृथक् कुर्यात्, 'एवम्' 'एनं' यजमानं 'सर्वस्मात्' 'पाप्मनः' पापात् 'विवृहतः' द्वौ ग्रहौ वाध्वर्युः (?)। एतदेवाह—"तस्मिन्न

---

* "सम्मा भद्रेण पृङ्क्तेत्याह, अन्नं वै भद्रम् अन्नाद्येनैवैनꣳ संसृजति"—इति तु तै० ब्रा० १. ३. ४. ६।

† का० श्रौ० सू० १४. २. ६, ७, ८।

‡ 'सुरारूपं'—इति च, छ।

§ का० श्रौ० सू० १४. २. ८।

तावन्नेति। 'चन'-शब्दोऽप्यर्थे *। यावत् तृणाग्रं तावन्मात्रं स्वल्प मपि 'एनः' पापं 'तस्मिन्' 'न' भवति ॥ १८ ॥

अथ मधुग्रहग्रहणं विधत्ते— "अथाध्वर्युरिति। तस्य सादन-प्रदेशं विधत्ते— "तं मध्य इति। अत्र कात्यायनः— "हिर-ण्मयेन मधुग्रहं गृहीत्वा खरमध्ये सादयति"-इति †।

अथ प्राकृतावुक्थ्यध्रुवग्रहौ दर्शयति— "अथोक्थ्य मित्यादि। सूत्रकृता अनयोर्द्रोणकलशादेव ग्रहणं सिद्ध मिति सूचितम्— "उक्थ्यादि"-इति ‡।

पृथग्ग्रहणप्रसङ्गात् द्विविधग्रहाणां होमकालं भक्षणं च विधत्ते— "अथैतान्सोमग्रहानिति। तान् प्रातःसवने गृही-तान् सोमग्रहान् 'उत्तमे स्तोत्रे' तृतीयसवने बृहत्स्तोत्रे वाज-पेयसंस्थापननिमित्ते स्तुते सति 'ऋत्विजां चमसेषु' 'व्यवनीय' व्यवनयनं कृत्वा जुहुयुर्भक्षयेयुश्च।

तत्प्रसङ्गात् सुराग्रहाणां मधुग्रहस्य च माध्यन्दिनसवनमध्ये विनियोगो भविष्यतीत्याह— "अथ माध्यन्दिन इति। 'उद्यते' -इति, "वद व्यक्तायां वाचि" §, कर्मणि यकि सम्प्रसारणम्। एतेषां होमास्तावत् तद्विनियोगप्रकारोऽपि "अथाध्वर्युश्च यज-मानश्च पूर्वया द्वारा मधुग्रह मादाय निष्क्रामतः"-इत्यारभ्य, "अथ नेष्टाऽपरया द्वारा सुराग्रहानादाय निष्क्रामति"-इत्यादिना ‖

* अम० को० ३. ४. ३।

† का० श्रौ० सू० १४. २. ६।

‡ का० श्रौ० सू० १४. २. १०।

§ भा० प० १००६ धा०।

‖ पञ्चमे ब्राह्मणे २८ कण्डी द्रष्टव्या।

अस्मिन्नेवाध्याये वक्ष्यत इत्यर्थः। "तस्मात इति। 'अतः' सोमग्रहहोमभक्षणप्रतिपादनानन्तरं 'तस्य' आम्नातस्य सुराग्रहविनियोगप्रतिपादकवाक्यस्य पाठानुसन्धानं कार्यं मित्यर्थः ॥ १८ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे प्रथमाध्यायस्य द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम्. )

आग्नेय मग्निष्टोम ऽआलभते। अग्निर्वा ऽअग्निष्टोमो ऽग्निष्टोम * मेवैतेनोज्जयत्यैन्द्राग्न मुक्थेभ्य आलभत ऽऐन्द्राग्नानि वा ऽउक्थान्युक्थान्येवैतेनोज्जयत्यैन्द्रꣳ षोडशिन ऽआलभत ऽइन्द्रो वै षोडशी षोडशिन मेवैतेनोज्जयति ॥ १ ॥

सारस्वतꣳ सप्तदशाय स्तोत्रायालभते। तदेतदनतिरात्रे सति रात्रे रूपं क्रियते प्रजापतिं वा ऽएष उज्जयति यो व्वाजपेयेन यजते

* 'अग्निष्टोम'—इति ग, घ।

संवत्सरो वै प्रजापतिस्तदेतेन सारस्वतेन रात्रि मुज्जयति तस्मादेतदनतिरात्रे सति रात्रे रूपं क्रियते * ॥ २ ॥

अथ मरुद्भ्य उज्जेषेभ्यः । व्वशां पृश्निमालभत ऽइयं वै व्वशा पृश्निर्यदिद मस्यां मूलि चामूलं चान्नाद्यं प्रतिष्ठितं तेनेयं व्वशा पृश्निरन्नं वा ऽएष उज्जयति यो व्वाजपेयेन यजते ऽन्नपेयᳪ ह वै नामैतद्यद्वाजपेयं व्विशो वै मरुतो ऽन्नं † वै व्विश उज्जेषेभ्य इत्यभिजित्या ऽएव दुर्व्वेदे ऽउज्जेषवत्यौ याज्यानुवाक्ये यद्युज्जेषवत्यौ न विन्देदपि ये ऽएव के च मारुत्यौ स्यातां दुर्व्वेदो ऽएव व्वशा पृश्निर्यदि व्वशां पृश्निं न विन्देदपि यैव का च व्वशा स्यात् ॥ ३ ॥

तस्या आवृत् ‡ । यत्र होता माहेन्द्रं ग्रह मनुशᳪसति तदस्यै व्वपया प्रचरेयुरेष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रो ऽप्यस्यैतन्निष्केवल्य मेव स्तोत्रं निष्केवल्यᳪ शस्त्र मिन्द्रो

* 'क्रियते'—इति ग, घ।

† 'अन्नं'—इति ग, घ। ‡ 'आवृत्'—इति ग, घ।

वै यजमानस्तन्मध्यत एवैतद्यजमाने वीर्यं दधाति तस्मादस्या अत्र वपया प्रचरेयुः ॥ ४ ॥

द्वेधावदानानि अपयन्ति। ततो ऽर्द्धानां जुह्वा मुपस्तीर्य द्विर्द्विरवद्यति सकृदभिघारयति प्रत्यनक्त्यवदानान्यथोपभृति सकृत्सकृदवद्यति द्विरभिघारयति न प्रत्यनक्त्यवदानानि तद्यदर्द्धानां द्विर्द्विरवद्यति तथैषा कृत्स्ना भवत्यथ यदेतैः प्रचरति तेन दैवीं विश मुज्जयत्यथार्द्धानि मानुष्यै विश ऽउपहरति तेनो मानुषीं विश मुज्जयति ॥ ५ ॥

तद् तथा न कुर्यात्। ह्वलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य एवं करोति तस्माद्यचैवेतरेषां पशूनां वपाभिः प्रचरन्ति तदेवैतस्यै वपया प्रचरेयुरेकधावदानानि अपयन्ति * न मानुष्यै विश ऽउपहरति † ॥ ६ ॥

अथ ‡ सप्तदश प्राजापत्यान् पशूनालभते। ते वै

---

* 'अपयन्ति'—इति च डा०-रोथ-इष्टम्।

† 'उपहरति'—इति ख, 'उपहरति'—इति ग, घ।

‡ 'अथ'—इति क।

सर्वे तूपरा भवन्ति सर्वे श्यामाः सर्वे मुष्कराः प्रजापतिं वा ऽएष उज्जयति यो व्वाजपेयेन यजते ऽन्नं वै प्रजापतिः पशुर्वा ऽअन्नं तत् प्रजापति मुज्जयति सोमो वै प्रजापतिः पशुर्वै प्रत्यक्षꣳ सोमस्तत्प्रत्यक्षं प्रजापति मुज्जयति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत् प्रजा-मुज्जयति ॥ ७ ॥

ते वै सर्वे * तूपरा भवन्ति। पुरुषो वै प्रजा-पतेर्नेदिष्ठꣳ सो ऽयं तूपरो † ऽविषाणस्तूपरो वा ऽअविषाणः प्रजापतिः प्राजापत्या एते तस्मात् सर्वे तूपरा भवन्ति ॥ ८ ॥

सर्वे श्यामाः। द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं प्रजापतिः प्राजापत्या एते तस्मात् सर्वे श्यामा भवन्ति ॥ ९ ॥

सर्वे मुष्कराः। प्रजननं वै मुष्करः प्रज-ननं प्रजापतिः प्राजापत्या एते तस्मात् सर्वे

---

* 'सर्वे'—इति ग, घ।

† नास्त्येतच्चिह्नं ग-घ-पुस्तकाभ्या मन्यत्र।

मुष्कारा भवन्ति दुर्व्वेदा एवꣳ समृद्धाः पशवो यद्ये-
वꣳ समृद्धान् न विन्देदपि कतिपया एवैवꣳ समृद्धाः
स्युः सर्वं मु ह्येवेदं प्रजापतिः ॥ १० ॥

तद्वैके । व्वाच ऽउत्तम मालभन्ते यदि वै
प्रजापतेः पर मस्ति व्वागेव तद्देतद्वाच मुज्जयाम
इति व्वदन्तस्तदु तथा न कुर्यात् सर्वं वा ऽइदं
प्रजापतिर्यदिमे लोका यदिदं किं च सा यदे-
वेषु लोकेषु व्वाग्वदति तद्वाच मुज्जयति तस्मादु
तन्नाद्रियेत ॥ ११ ॥

तेषा माव्रत् * । यत्र मैत्राव्वरुणो व्वामदेव्य
मनुशꣳसति तदेषां व्वपाभिः प्रचरेयुः प्रज-
ननं वै व्वामदेव्यं प्रजननं प्रजापतिः प्राजापत्या
एते तस्मादेषा मत्र व्वपाभिः प्रचरेयुः † ॥ १२ ॥

अथेष्टा अनुयाजा भवन्ति ‡ । अव्यूढे स्रुचा-
वथैषाꣳ हविर्भिः प्रचरन्ति सोऽन्तोऽन्तो वै
प्रजापतिस्तदन्तत एवैतत् प्रजापति मुज्जयत्यथ

---

* 'मावृत्'—इति ग, घ ।

† 'तस्मादेषां व्वपाभिरत्र प्रचरेयुः'—इति ग, घ ।

‡ 'भवन्ति'—इति क ।

यत् पुरा प्रचरेद्यथा य मध्वान मेष्यन्त्स्यात्तं गत्वा स क्व ततः स्यादेवं तत्तस्मादेषा मत्र हविर्भिः प्रचरन्ति ॥ १३ ॥

तदु तथा न कुर्यात्। ह्वलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य एवं करोति तस्माद्यच्चैवेतरेषां पशूनां व्वपाभिः प्रचरन्ति तद्वैवैतेषां व्वपाभिः प्रचरेयुर्यच्चैवेतरेषां पशूनाᳪं हविर्भिः प्रचरन्ति तद्वैवैतेषाᳪं हविषा प्रचरेयुरेकानुवाक्या भवत्येका * याज्यैकदेवत्या हि प्रजापतय ऽइत्युपाᳪंशूक्त्वा छागानाᳪं हविषो ऽनुब्रूहीति प्रजापतय ऽइत्येवोपाᳪंशूक्त्वा † छागानाᳪं हविः प्रस्थितं प्रेष्येति व्वषट्कृते जुहोति ॥ १४ ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [१.३.] ॥

तृतीये पशुतन्त्र मभिधीयते। तत्र तावत् वाजपेयस्य अग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थालक्षणसद्भावेन सर्वक्रत्ववरोधकत्व मस्तीति वैदिकप्रसिद्धिः ‡ तत्तत्क्रतुसाधारणपशुसद्भावे सत्यु-

---

* 'एका'—इत्येव ग, घ।

† 'इत्युपांशूक्त्वा'—इति ग, घ।

‡ 'वैदिकत्वप्रसिद्धिः'—इति घ।

पपद्यते, नान्यथा। तथा च तैत्तिरीयकम्— "ब्रह्मवादिनो वदन्ति, नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्र:, अथ कस्माद् वाजपेये सर्वे यज्ञक्रतवोऽवरुध्यन्त इति; पशुभिरिति ब्रूयात्"–इति *। यज्ञशब्देन यजतिचोदिता वषट्कारप्रदाना अङ्गप्रधानभूता यागा अभिधीयन्ते। तत्समूहरूप एकफल-साधनायापूर्ववान् कर्मविशेष: क्रतुरित्यर्थ: †।

अतस्तानग्निष्टोमादिगतानाग्नेयादिसवनीयपशून् विधत्ते— "आग्नेय मग्निष्टोम इति। तत्राग्निष्टोमस्य द्वादश स्तोत्र-शस्त्राणि; उक्थ्यस्य उक्थत्रयेण पञ्चदश; षोडशिन: षोडशि-स्तोत्रेण सह षोडश; वाजपेयस्य बृहत्स्तोत्रेण सह सप्तदश, अतिरात्रपर्यायत्रयेण ‡ सह षोडशिपक्षे एकोनत्रिंशत्, अन्यदा अष्टाविंशति: पशूनाम्।

तत्तत्क्रतुसाधारण्यं द्योतयितु मग्निष्टोमादिपदाभिधानम्। अग्नि: स्तूयते अस्मिन्निति अग्निष्टोमो नाम साम, तस्मिन् विषयभूते 'आग्नेय मालभते'। एतेन पशुना अस्मिन् वाजपेये अग्निष्टोमसंस्थं क्रतु मेवानुष्ठितवान् भवतीत्यर्थ:। एव मुत्त-रत्रापि योज्यम्। 'उक्थेभ्य:' तृतीयसवने स्तूयमानेभ्योऽन्येभ्य स्त्रिभ्य § उक्थस्तोत्रेभ्य: इन्द्रादिदेवताक: ‖ पशुरालम्भनीय:। 'षोडशिने' षोडशिस्तोत्राय 'ऐन्द्रं' पशुम् आलभेत ¶ ॥ १ ॥

---

* तै० ब्रा० १. ३. ४. १।

† 'सर्वाग्निष्टोमैर्वा राजसूयसोमै:'—इति १४. १. ७।

‡ 'अतिरात्रस्य पर्यायत्रयेण'—इति च।

§ 'स्तूयमानेभ्यस्त्रिभ्य'—इति क, च, छ।

‖ 'इन्द्राग्नीदेव:'—इति क, छ।

¶ 'ऐन्द्र: पशु:'—इत्येव च।

"सारस्वत मिति । 'सप्तदशाय' सप्तदशसङ्ख्यापूरकाय बृहत्स्तोत्राय 'सारस्वतं' सरस्वतीदेवताकं * पशु मालभेत । अग्निम मिदं बृहत्स्तोत्रं वाजपेयस्यासाधारणं लिङ्गम् ; श्रूयते हि—"मारुत्या बृहत्स्तोत्रम्"–इति † । कथं वाजपेये अतिरात्रान्तर्भाव इत्याशङ्क्य, अनेन सारस्वतालम्भनेनातिरात्रस्यान्तर्भावं दर्शयति— "तदेतदिति । 'अनतिरात्रे, सति प्रस्तुते वाजपेये यज्ञे अतिरात्रान्तर्भावविधुरे 'तदेतत्' सारस्वतालम्भनं 'रात्रेः' रात्रिपर्यायस्य 'रूपं क्रियते' ‡ ; तेन तदन्तर्भावोऽपि सिद्ध इत्यर्थः । एतेषा माग्नेयादीना मग्निष्टोमादिसंस्थाचतुष्टयसारूप्यं § सूत्रे दर्शितम्— "आग्नेयोऽग्निष्टोमे सवनीयः पशुः, ऐन्द्राग्नश्चोक्थ्ये द्वितीयः, ऐन्द्रो वृष्णिः षोडशिनि तृतीयः, सारस्वती मेष्यतिरात्रे चतुर्थी"–इति ‖ ।

नन्वतिरात्रान्तर्भावाय रात्रिसामान्यपि कस्मान्न प्रयोज्यानीत्यत आह— "प्रजापतिं वा एष इति । प्रजापतेस्तु संवत्सरात्मकता सङ्ख्यासाम्यात् ; द्वादशमासाः पञ्चर्त्तव इति संवत्सरस्य सप्तदशत्वम्, प्रजापतेरप्याश्रावयेत्यादिसप्तदशाक्षरमन्त्रात्मकत्वात् ¶ । अतः सप्तदशेनैव बृहत्स्तोत्रेण सप्तदशात्मकप्रजापतेरुज्जितिः सिद्धेति प्रयोजनाभावात् रात्रिसामानि न प्रयो-

* 'सरस्वतीदेवत्यं'—इति च ।

† तै० ब्रा० १. ३. ३. २ ।

‡ 'रात्रेः रात्रिपर्यायस्येत्यर्थः', तद्रूपं क्रियते ; अतिरात्रस्यासाधारणं रूपं क्रियते'—इति च ।

§ 'अग्निष्टोमसंस्थाचतुष्टयासाधारणरूपत्वं'—इति च ।

‖ 'अतिरात्रपशूनुपाकृत्य'—इति का० श्रौ० सू० १४. २. ११ क ।

¶ पृ० २४ टीप्पनी '*' द्रष्टव्या ।

ज्यानि। तस्मादुक्तविध एवातिरात्रान्तर्भावः साधीयानित्याह— "तदेतेन सारस्वतेनेति ॥ २ ॥

अथास्य यज्ञस्यासाधारणपशुं विधत्ते— "अथ मरुद्भ्य इति। उक्षेषगुणकेभ्यो मरुद्भ्यो देवेभ्यः 'पृश्निं' नानावर्णां 'वशां' वन्ध्याम् आलभेत। उक्तं पशुं भूम्यात्मत्वेन स्तौति— "इयं वै वशेति। 'इयं' भूमिः, 'वशा पृश्निः'। भूमेः पृश्नित्व मुपपादयति— 'यदिदम्' 'अस्यां' भूमौ 'मूलि' मूलवत् स्थावरम्, 'अमूलं' पश्वादिकम्; एव मुभयम् 'अन्नाद्यम्' आद्यम् अदनीय मन्नं 'प्रतिष्ठितम्', 'तेन' अस्याः पृश्नित्वम्। अस्य पशोर्मरुद्देवतात्वं प्रशंसति— "अन्नं वा एष इति। 'वाजपेयम् इति यत्, तत् अन्नपेयम्'। वाजशब्दोऽन्नवाची। अन्नम् अन्नविकारभूतं सुराद्रव्यं पीयते अत्रेति हि व्युत्पत्तिः। 'मरुतः' खलु 'विशः' प्रजाः; "मरुतो वै देवानां विशः"— इति श्रुतेः *। कथ मेतावता मरुता मन्नरूपत्वम्? तत्राह— "अन्नं वै विश इति। 'अन्नं' 'वै' खलु 'विशः' प्रजाः; अन्नोपजीवनात् तच्छब्देन व्यपदिश्यन्ते। तेषा मुक्षेषविशेषणस्य प्रयोजन माह— "उक्षेषेभ्य इति।

तत्र वशावपाहोमे उक्षेषपदवत्यौ याज्यापुरोऽनुवाक्ये विधत्ते — "दुर्वेद्दे उज्जेषवत्याविति। 'दुर्वेद्दे' लब्धु मशक्ये, अतस्ते एव सम्पाद्ये इत्यर्थः। तयोरसुलभत्वं मत्वा स्वय मेव श्रुतिः पक्षान्तर माह— "यद्युज्जेषवत्यावित्यादि। 'मारुत्यौ' मरुद्देवत्ये भवे वा पशोरपि पृश्निवर्णस्यालाभे पक्षान्तरं दर्शयति— "दुर्वेदो

* तै० सं २. २. ५. ७। "विड् वै मरुतः"—इति, तै० ब्रा० २. ७.२२। "विशो वै मरुतः"—इति श्र० ब्रा० ३. ९. १. १७।

एवेत्यादिना। दुर्वेदो लब्धु मशक्यः * खलु इति निपातेन सह प्रयोगः। अत एव कात्यायनः--"वशां पृश्निं मरुद्भ्य उत्सेषेभ्यस्तदभावे पृश्निम्"-इति † ॥ २ ॥

मारुतीवपाप्रचरणं प्राकृताना माग्नेयैन्द्राग्नप्रभृतीनां वपा-प्रचरणेन सह विधास्यते। तत्र तावत्केषां मत मुपन्यस्यति--"तस्या आहुः यत्र होतेति। 'तस्याः' मारुत्या वशायाः 'आहुः' तन्त्रम्, वक्ष्यत इति शेषः। यत्र होता माहेन्द्रं ग्रहम् 'अनुशंसति' अनुशंसितवान् भवतीति भूतार्थपरत्वेन व्याख्ये-यम्; "माहेन्द्रान्ते वशावपाचरणम्"-इति ‡ कात्यायनेन सूचितत्वात्। 'तत्' तदा 'अस्यै' अस्या मारुत्याः 'वपया' 'प्रचरेयुः'। प्रचरणं माहेन्द्र इति यत् 'एष वै इन्द्रस्य' असा-धारणो 'ग्रहः'; ग्रहणमन्त्रे केवलेन्द्रस्यैव देवतात्वेन प्रतिपाद-नात्। निःशेषेण केवल मिन्द्रस्याय मिति 'निष्केवल्यो ग्रहः'। माध्यन्दिने सवने हि माहेन्द्रग्रहग्रहणम्; तच्च सवन मिन्द्र-स्येति नियतम्। श्रूयते हि--"प्रातः सुत मपिबो हर्यश्व माध्यन्दिनं सवनं केवलं ते"-इति §।

न केवलं माहेन्द्रग्रह एव निष्केवल्यः, अपि तु तद्ग्रह-णानन्तरं प्रयोज्ये स्तुतशस्त्रे अपि केवलेन्द्रदेवताकत्वात् इन्द्र-स्यासाधारण मित्यत आह-- "अप्यस्यैतन्निष्केवल्य मेवेति।

अस्तु ग्रहादीनां केवलेन्द्रदेवताकत्वं तेन प्रकृते किमायात

* 'दुर्वेदे लब्धु मशक्ये'--इति ज।

† का० श्रौ० सू० १४. २. ११ ख, १२।

‡ का० श्रौ० सू० १४. २. १६।

§ ऋ० सं० ४. ३५. ७।

मित्यत आह— "इन्द्रो वै यजमान इति। यस्माद् याग-लक्षणेन परमैश्वर्येण योगाद् 'यजमानः' इन्द्ररूपः। 'वै'-शब्दः शाखान्तरीयां प्रसिद्धिं द्योतयति ; "एष खलु वा एतर्हीन्द्रो यो यजते"-इति तैत्तिरीयके श्रवणात् *। 'अतः' इन्द्रयज-मानयोस्तादात्म्यात् माध्यन्दिनसवनवर्त्तिमाहेन्द्रग्रहान्ते वपा-चरणेन यज्ञमध्ये एव 'यजमाने' 'वीर्यं' निहितवान् भव-तीत्यर्थः ॥ ४ ॥

पश्ववदानाना मथैकध्येन † श्रपणं सिद्धान्तयितुं द्वैविध्यं पूर्वपक्षयति— "द्वेधावदानानि श्रपयन्तीति। कात्यायनस्तु उक्तं वपाप्रचरण ‡ मवदानानां द्वेधा श्रपणं च विकल्पेन सूत्र-यामास— "माहेन्द्रान्ते वशावपाचरणम् अवदानैश्च द्वैधं स्मृतेः"-इति, "यथान्यायं वोभयोः वशायाश्च, एकध्यञ्च श्रपणम्"-इति § च। ब्राह्मणे तु "तदु तथा न कुर्यात्"-इत्येकं निषिध्य, अन्यत् सिद्धान्तितम्। कथ मनयोर्विकल्पः सिध्यतीति चेत्, सत्यम्! मतान्तरनिषेधस्तु प्रसक्तिपूर्वको भवितु मर्हति, प्रसक्तिस्तु शाखान्तरीयेति तन्मतानुसारेण सूत्रकृता विकल्पः कृत इत्यविरोधः ‖। हृदयं जिह्वा वक्षो यकृद्-वृक्कौ सव्यो

---

* तै॰ सं॰ ६. १. ११. २।

† 'मथ्यैक मध्यमेन'—इति च। 'मथ्यैकध्येन'-इति ङ, क्ष।

‡ 'वपाश्रपण'—इति ङ।

§ का॰ श्रौ॰ सू॰ १४. २. १६, १७. २२—२४।

‖ 'पूर्वेभ्यो देवताभ्यश्चतुर्भ्या मवद्यति, उत्तराणि विष्टौ ददाति'—इति का॰ श्रौ॰ सू॰ १४. २. १८, १९। 'पूर्वाणि हृदयादीनि, उत्तराणि त्र्यङ्गानि'—इत्यादिरेतद्ग्रन्थश्च तत्रालोच्यः।

होतमे पार्श्वे दक्षिणा श्रोणिः गुदस्तृतीय मिति दैवतानि; दक्षिणो दोः सव्या श्रोणिः गुदस्तृतीय मिति सौविष्टकृता-नीति। एतानि सर्वाण्यवदानानि द्विधा पृथक् अपयन्ति पक्वानि कुर्युः। दैवतानां हृदयादीनां सौविष्टकृतानां त्र्यङ्गाणां च पृथक् अपण मित्यर्थः।

हविषा मवदानप्रकार माह— "ततोऽङ्गाना मिति। अथ जुह्वा माज्येनोपस्तरणं कृत्वा 'अङ्गानां' प्रधानहविषां हृदया-दीनां मध्ये एकैकस्माद् 'द्विर्द्विः' अवद्येत्। एव मेकादशा-वदानान्यवदाय पुनराज्येनैकवार मभिघारणं कुर्यात्। एव मुपस्तरण-द्विरवदान-पुनरभिघारणैर्हविषां चतुरवत्तत्वं सम्पादि-तम्। अनन्तरं स्विष्टकृदर्थान्यवदानानि छ्तेन प्रत्यञ्जयात्।

"अथोपभृतीति, वाक्यं स्पष्टार्थम्। अत्र उपस्तरणावदाने सकृत् सकृद्, द्विरभिघारण मिति चतुरवदानसम्पत्तिः। अत्र स्थितानि * अवत्तशेषाणि न प्रत्यञ्जयात्; उत्तरत्र विनि-योगाभावात्।

एतेषां द्विरवदानं प्रशंसति— "तद्यदङ्गाना मिति। अङ्गानां हृदयादीनां प्रत्येकं देवतार्थं स्विष्टकृदर्थं च द्विरवद्यतीति 'यत्', तेन द्विरवदानेन 'एषा' वशा 'कृत्स्ना' सम्पूर्णा भवति, यथेतरः पशुस्तथेत्यर्थः।

अथैतेषां प्रचरणं स्तौति— "अथ यदेतैरिति। "दैवीं विश मिति। अवदानानां देवतोद्देशेनाग्नौ प्रक्षिप्तत्वात् तेन प्रचरणेन 'दैवीं' देवसम्बन्धिनीं 'विशम्' प्रजाम् 'उज्जयति'।

एव मङ्गानां हविषां विनियोग मभिधाय, अङ्गान्तरस्यापि

* 'अपात्रस्थितानि'—इति क, ख।

देवत्यो वै गर्त्तः पितृलोक मेवैतेनोज्जयति सप्त-दशारत्निर्भवति सप्तदशो वै प्रजापतिस्तत् प्रजा-पति मुज्जयति ॥ ७ ॥

अथ नेष्टा पत्नी मुदानेष्यन्। कौशं वासः परिधापयति कौशं वा चण्डातक मन्तरं दीक्षित-वसनाज्जघनार्द्धो वा ऽएष यज्ञस्य यत् पत्नी ता मेतत् प्राचीं यज्ञं प्रसादयिष्यन् भवत्यस्ति वै पत्न्या अमेध्यं यदवाचीनं नाभेर्मेध्या वै दर्भा-स्तद्यदेवास्या अमेध्यं तदेवास्या एतद्दर्भैर्मेध्यं कृत्वा-ऽथैनां प्राचीं यज्ञं प्रसादयति तस्मान्नेष्टा पत्नी मुदानेष्यन् कौशं व्वासः परिधापयति कौशं वा चण्डातक मन्तरं दीक्षितवसनात् ॥ ८ ॥

अथ निश्रयणीं * निश्रयति। स दक्षिणात उदङ् रोहेदुत्तरतो वा दक्षिणा दक्षिणतस्त्वे-वोदङ् रोहेत् तथा ह्युदग् भवति † ॥ ६ ॥

स रोक्ष्यन् जाया मामन्त्रयते। जाय ऽएहि स्वो रोहावेति रोहावेत्याह जाया तद् यज्जाया

---

* 'निश्रेणीं'—इति सा०-सम्मत इति डा० वेबरः।

† 'भवति'—इति ग, घ।

मामन्यते ऽर्द्धो ह वा ऽएष आत्मनो यज्जाया तस्माद्यावज्जायां न विन्दते नैव तावत् प्रजायते ऽसर्वो हि तावद्भवत्यथ यदैव जायां विन्दते ऽथ प्रजायते तर्हि हि सर्व्वो भवति सर्व्व एतां गतिं गच्छानीति तस्माज्जाया मामन्यते ॥ १० ॥

स रोहति। प्रजापतेः प्रजा अभूमेति प्रजापतेर्ह्येष प्रजा भवति यो व्वाजपेयेन यजते * ॥ ११ ॥

अथ गोधूमानुपस्पृशति †। स्वर्देवा अगन्मेति ‡ स्वर्ह्येष गच्छति यो व्वाजपेयेन यजते ॥ १२ ॥

तद्यद्गोधूमानुपस्पृशति §। अन्नं वै गोधूमा अन्नं वा ऽएष उज्जयति यो व्वाजपेयेन यजते ऽन्नपेयꣳ ह वै नामैतद् यद्वाजपेयं तद्यदेवैतदन्न

---

* 'यजते'—इति क, ख।

† '०ति'—इति ग, घ। ‡ '०न्मेति'—इति क, ख।

§ '०ति'—इति क, '०ति'—इति ग, घ।

मुदजैषीत्तेनैवैतदेतां गतिं गत्वा सꣳस्पृशते तदा-
त्मन् कुरुते तस्माद्गोधूमानुपस्पृशति* ॥ १३ ॥

अथ शीर्ष्णा यूप मत्युज्जिहीते । अमृता अभू-
मेति देवलोक मेवैतेनोज्जयति † ॥ १४ ॥

अथ दिशो ऽनुवीक्ष्यमाणो जपति । अस्मे
वो ऽअस्त्विन्द्रिय मस्मे नृम्ण मुत क्रतुरस्मे वर्चाꣳ-
सि सन्तु व इति सर्व्वं वा ऽएष इद मुज्ज-
यति यो व्वाजपेयेन यजते प्रजापतिꣳ ह्युज्ज-
यति सर्व्व मु ह्येवेदं प्रजापतिः सो ऽस्य सर्व्वस्य
यश इन्द्रियं व्वीर्यꣳ ‡ संवृज्य तदात्मन्धत्ते तदात्मन्
कुरुते तस्माद्दिशो ऽनुवीक्ष्यमाणो जपति § ॥ १५ ॥

अथैनं मूषपुटैरनूदस्यन्ति । पशवो ऽवा ऽऊषा
अन्नं वै पशवो ऽन्नं वा एष उज्जयति यो
व्वाजपेयेन यजते ऽन्नपेयꣳ ह वै नामैतद्यद्वाज-
पेयं तद् यदेवैतदन्न मुदजैषीत् तेनैवैतदेतां गतिं

---

* ‘०स्पृशति’—इति क ।  † ‘०ज्जयति’—इति क ।
‡ ‘इन्द्रियं वै व्वीर्यꣳ’—इति क-पुस्तके ।
§ ‘०जपति’—इति क ।

गत्वा सꣳस्पृशते तदात्मन् कुरुते तस्मादेन मुष पुटैरनूद्दृश्यन्ति * ॥ १६ ॥

आश्वत्थेषु पलाशेषूपनद्धा भवन्ति। स यद्देवाद्दो ऽश्वत्थे तिष्ठत इन्द्रो मरुत उपामन्त्रयत तस्मादाश्वत्थेषु पलाशेषूपनद्धा भवन्ति विशो ऽनूद्दृश्यन्ति विशो वै मरुतो ऽन्नं विशस्तस्माद्विशो ऽनूद्दृश्यन्ति सप्तदश भवन्ति सप्तदशो वै प्रजापतिस्तत् प्रजापति मुज्जयति † ॥ १७ ॥

अथेमा मुपावेक्षमाणो जपति ‡। नमो मात्रे पृथिव्यै नमो मात्रे पृथिव्या ऽइति बृहस्पतेर्ह वा ऽअभिषिषिचानात् पृथिवी बिभयाञ्चकार महद्वा ऽअय मभूद्यो ऽभ्यषेचि यद्वै मायं नावदृणीयादिति बृहस्पतिर्ह पृथिव्यै बिभयाञ्चकार यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेय मकुरुत न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥ १८ ॥

---

* '०दृश्यति'—इति क। † 'मुज्जयति'—इति क।

‡ 'भवति'——इति पाठः ख-पुस्तके।

बृहस्पतिसवो वा ऽएष यद्वाजपेयम्। पृथिव्यु हैतस्माद्बिभेति महद्वा ऽअयमभूद्यो ऽभ्यषेचि यद्वै माऽयं नावदृणीयादित्येष उ हास्यै बिभेति यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥ १६ ॥

अथ हिरण्य मभ्यवरोहति। अमृत मायुर्हिरण्यं तदमृत ऽआयुषि प्रतितिष्ठति * ॥ २० ॥

अथाजर्षभस्याजिन मुपस्तृणाति। तदुपरिष्टाद्रुक्मं निदधाति त मभ्यवरोहतीमां वैव † ॥ २१ ॥

अथास्मा ऽआसन्दी माहरन्ति उपरिसद्यं वा ऽएष जयति यो जयत्यन्तरिक्षसद्यं तदेन मुपर्यासीन मधस्तादिमाः प्रजा उपासते तस्मादस्मा ऽआसन्दी माहरन्ति ‡ ॥ २२ ॥

औदुम्बरी भवति §। अन्नं वा ऽऊर्गुदुम्बर ऊर्जो ऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरी भवति

---

* '०तिष्ठति'—इति क। † 'वैव'—इति ग, घ।

‡ 'माहरन्ति'—इति क। § 'भवति'—इति क।

ता मध्येन हविर्धाने जघनेनाहवनीयं निद्-
धाति * ॥ २३ ॥

अथाजर्षभस्याजिन मास्तृणाति । प्रजापति-
र्वा ऽएष यदजर्षभ एता वै प्रजापतेः † प्रत्यक्ष-
तमां यदजास्तस्मादेतास्त्रिः संवत्सरस्य विजाय-
माना द्वौ त्रीनिति जनयन्ति तत् प्रजापति
मेवैतत् करोति तस्मादजर्षभस्याजिन मास्तृ-
णाति ॥ २४ ॥

स आस्तृणाति । इयं ते राडिति राज्य
मेवास्मिन्नेतद् दधात्यथैन मासादयति यन्तासि यमन
इति यन्तार मेवैन मेतद् यमन मासां प्रजानां
करोति ध्रुवो ऽसि धरुण इति ध्रुव मेवैन मेतद्-
धरुण मस्मिंल्लोके करोति कृष्यै त्वा क्षेमाय
त्वा रय्यै त्वा पोषाय त्वेति साधवे त्वेत्ये-
वैतदाह ॥ २५ ॥ ६ ॥

॥ इति प्रथमप्रपाठके षष्ठं ब्राह्मणम् [२.१.] ॥

---

* 'निदधाति'—इति क, ख ।

† 'प्रजापति-'—इति क ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ द्वितीयाध्यायस्य प्रथमब्राह्मणे यूपारोहण मुच्यते। तत्र प्रथम माग्निहोमं विधित्सुराह— "अथ स्रुव मिति। आज्यं विलाप्यतेऽस्या मित्याज्यविलापनी स्थाली; स्रुववचनं जुह्वपभृन्निवृत्त्यर्थम्। अत्र सूत्रम्— "द्वादश स्रुवाग्नीर्जुहोत्यापये स्वाहेति प्रतिमन्त्रं, वाचयति वा"-इति *। होमं विधत्ते— "स एता द्वादशेति। द्वादशसङ्ख्याकाः आग्निसाधनत्वादाग्न्याख्याः आज्याहुतीर्जुहुयात्। "आपये स्वाहा"-इत्याग्निलिङ्गसमवायात् प्राणभृत उपदधातीतिवत् आग्न्यनाग्निसमुदाये आग्निशब्दः। विकल्पेन यजमानवाचनं विधत्ते— "वाचयति वेति। आग्नीर्जुहुयाद्, यजमानं वा वाचयेदित्यर्थः। अत्रोभयत्रार्थवादवाक्यशेषः समान इत्याह— "यदि जुहोतीति। 'बन्धुः' वाक्यशेषः, "द्वादश वै मासाः"-इत्यादिना वक्ष्यते † ॥ १ ॥

होम मनूद्य द्वादश मन्त्रान् विधत्ते— "स जुहोत्यापये स्वाहेति ‡। संवत्सरस्य यज्ञात्मकप्रजापतेरेतानि नामानि। आप्नोतीत्यापिः, तस्मै 'स्वाहा' सुहुत मस्तु। 'स्वापये' शोभन माप्नुवते देवाय। 'पिजाय' अप्सु जाताय। 'क्रतवे' सङ्कल्पाय, यज्ञाय वा। 'वसवे' वासकाय। अह्नाम्पतिः अहर्पतिः संवत्सरः, तस्मै। "मुग्ध वैचित्ये" §, अपकर्त्तु मजानते 'अह्ने'

---

* का० श्रौ० सू० १४. ५. १।

† इत उत्तरस्मिन्नेव कण्डिकायाम् (८६ पृ० ११पं० = ६५पृ० ११पं०)।

‡ वा० सं० ६. २०. १—१२। § दि० प० ६२ धा०।

दिवसाय ; 'अह्ने मुग्धाय'—इत्येकं नाम। एव मुत्तरत्रापि विशेषणयुक्त मेकैकं नाम। 'वैनंशिनाय' विनाशयुक्तेषु हितकारित्वेन वसतीति वैनंशिनः, विनंशिनः पुत्रो वा वैनंशिनः, तस्मै। एव मुत्तरत्राप्यपत्यार्थे प्रत्यय इति वेदितव्यम्। 'विनंशिने' शत्रुविनाशकाय। अन्त्ये अयने भवः आन्त्यायनः, अन्त्याख्यस्य पुत्राय वा, तस्मै। 'आन्त्याय' अन्ते भवाय 'भौवनाय' भुवनस्यापत्याय। 'भुवनस्य पतये'—इत्येकं नाम, भुवनस्य पतिः प्रजापतिः ; "प्रजापतिर्वै भुवनस्य पतिः"—इति * हि तैत्तिरीयकम्। तथा 'अधिपतये'—इति, अधिपतिः प्रजापत्यात्मको वाजपेययज्ञः। अत्र स्वाहान्त एकैको मन्त्र इत्यर्थः।

आहुतिगतां द्वादशसङ्ख्यां प्रशंसति— "द्वादश वै मासा इति। अयं वाक्यशेषो होमवाचनयोरुभयोरपि समानः— "तद्यैवास्याप्तिरिति। 'अस्य' संवत्सरस्य प्रजापत्यात्मकस्य यज्ञस्य 'या' 'आप्तिः' सर्वात्मकत्वेन व्यापनशक्तिः, 'या' 'सम्पत्' संवत्सरसमृद्धिः, सर्वात्मकता, ता मेता मुभयी मेतेनाप्तिहोमेन जितवान् भवति ; जित्वा च 'ताम्' 'आत्मनि' स्वस्मिन् कृतवान् भवति ॥ २ ॥

विधत्ते— "अथ षट् क्लृप्तीरिति †। 'क्लृप्तीः' क्लृपिधातुनिष्पन्नशब्दयुक्तमन्त्रकरणिका आहुतीर्जुहुयात्। मन्त्राणां वाचनं कार्यं मिति वा ॥ ३ ॥

---

* तै० सं० १. ७. ६. ६ ; ४. ७. ११. २ ; ५. ४. ६. १६ ; तै० ब्रा० १. ३. ७। ऋ० सं० ४. ५३. २ प्रभृतिषु द्रष्टव्यम्।

† "षट्कोत्तराः"—इति का० श्रौ० सू० १४. ५. २। "जुहोति वाचयति वा'—इति तत्र वृत्तिः।

श्रावन मनुष्य मन्त्रान् विधत्ते— "स वाचयतीति । अत्र वाचनविवक्षया मन्त्रान्ते स्वाहा-शब्दो न प्रयुक्तः ; अध्वर्यवक्तात् हवनं वा कार्यम् , तदा स्वाहाशब्दः प्रयोक्तव्यः । मन्त्रार्थस्तु— 'आयुः' मदीयं , 'यज्ञेन' वाजपेयाख्येन 'कल्पतां' समर्थं भवतु । 'पृष्ठं' रथन्तरादि ; यद्वा 'पृष्ठं' वंशवदायुःप्राणादेराधारभूतो मध्यदेहः । 'यज्ञः' विष्णुः । अन्यत् स्पष्टम् * ।

ता मिमां षट्सङ्ख्यां प्रशंसति— "षड् वा ऋतव इति । हवनवाचनयोरयं वाक्यशेषः समान इत्यर्थः । "तद् यैवास्य क्लृप्तिरित्यादि , पूर्ववद् योज्यम् ॥ ४ ॥

क्लृप्तिवाचनमन्त्रतदर्थाभिज्ञस्य यजमानस्य यूपारोहणं विवक्षुरादौ स्वर्गत्वेन निरूपयिष्यमाणस्य यूपस्य प्राकृतं गुण मनुवदति— "अष्टाश्रिर्यूप इति । अश्रिगता मष्टसङ्ख्यां प्रशंसति— "अष्टाक्षरेति । यतः 'अग्नेः छन्दः गायत्रम्' ततस्तद्रूपत्वाद् देवलोकजयहेतुरष्टाश्रिर्यूप इत्यर्थः । यूपस्य वेष्टनं विधत्ते— "सप्तदशभिरिति । 'वेष्टितः' यथा यूपो न दृश्यते , तथाच्छादनं 'वा' कार्यम् , 'विग्रथितः' यूपस्यैकत्र प्रदेशे वाससां ग्रथनं † 'वा' कार्यम् । वासोगतां सङ्ख्यां प्रजापत्यात्मना स्तौति— "सप्तदश इति ‡ ॥ ५ ॥

चषालनामकस्य यूपशकलस्य दारुमयत्वापवादाय विधत्ते— "गौधूम मिति । गोधूमपिष्टमयं चषालं कुर्यादित्यर्थः । "पुरुषो

---

* ते षट् मन्त्रास्तु वा० सं० ६. २१. १—६ ।

† 'ग्रथनं—इति क, ख, ङ ।

‡ "यूपवेष्टनं सप्तदशभिर्वस्त्रैरुद्ग्रथनं वा परिव्ययणकाले"—इति का० श्रौ० सू० १४. १. २० ।

Nyāyavārtika (Text) Fasc. 1-6 @ /10/ ... ... Rs. 3 12
*Nirukta, (Text) Vol. IV, Fasc. 1-8 @ /10/ each ... ... 5 0
*Nītisāra, Fasc. 2-5, @ /10/ each ... ... ... 2 8
Nityacārapaddhati Fasc. 1-7 (Text) @ /10/ each ... ... 4 6
Nityacraāpradiph, Fasc. 1-7 @ /10/- ... ... ... 4 6
Nyāyabinduṭikā, Fasc 1 ... ... ... ... 0 10
Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1-6, Vol. II, Fasc. 1-3 @ /10/ each ... ... ... ... 5 10
Padumawati, Face. 1-4 @ 2/ ... ... ... ... 8 0
Pariciṣta Parvan, Fasc. 1-5 @ /10/ each ... ... ... 3 2
Prāk ta - Paingalam, Fasc. 1-7 @ /10/ each ... ... 4 6
Prithivirāj Rāsa, Part II, Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto (English) Part II Fasc 1, @ 1/- ... ... 1 0
Prāk ta Lakṣaṇam, Fasc. 1 @ 1/8/- ... ... ... 1 8
Parācara Smriti, Vol. I, Fasc. 1-8 ; Vol. II, Fasc. 1-6 ; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... 12 8
Parācara, Institutes of (English) @ 1/ ... ... ... 1 0
Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... 3 12
*Sāma Vēda Saṁhitā, Vols. I, Fasc. 5-10 ; II, 1-6 ; III, 1-7 ; IV, 1-6 ; V, 1-8 ; @ /10/ each ... ... ... 20 10
Sānkhya Sūtra V tti, Fasc. 1-4 @ /10/ ... ... 2 8
Ditto (English) Fasc. 1-3 @ 1/- each ... ... 3 0
*Sankara Vejay, Fasc. 2-3 @ /10/ ... ... ... 1 4
Shaddarsana-Samuccaya, Fasc. 1 @ /10/ ... ... ... 0 10
Sraddha Kriya Kaumudi, Fasc. 1-6 ... ... ... 3 12
Sucruta Saṁhitá, (Eng.) Fasc. 1 @ 1/- ... ... ... 1 0
Suddhi Kaumudi, Fasc. 1-4 ... ... ... ... 2 8
*Taittereya Saṁhitā, Fasc. 22-45 @ /10/ each ... ... 15 0
* Ditto Brāhman, Fasc 3-25 @ /10/- ... ... 14 6
Ditto Prātisākhya, Fasc. 1 3 @ /10/- ... ... 1 14
Tāṇdya Brāhmaṇ, (Text) Fasc. 1-19 @ /10/ each ... ... 11 14
Tantra Vārtika (English) Fasc. 1-6 @ 1/4/ ... ... ... 7 8
Tattva Cintāmaṇi, Vol. I, Fasc. 1-9 : Vol. II, Fasc. 2-10, ; Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V. Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... ... 23 12
Tattvārthādhigama Sutrom, Fasc. 1-3 ... ... ... 1 14
Trikāṇda-Maṇdanom, Fasc. 1-3 @ /10/ ... ... 1 14
Tul'si Satsai Fasc. 1-5 @ /10/ ... ... ... 3 2
Upamita-bhava-prapañcha-kathā Fasc. 1-9 @ /10/ each ... 5 10
Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/ ... 6 0
Vallāla Carita, Fasc. 1 ... ... ... 0 10
Varsa K yā Kaumudi, Fasc 1-6 @ /10/ ... ... ... 3 12
*Vāyu Purāṇa, Vol. I, Fasc. 2-6 ; Vol. II, Fasc. 1-7, @ /10/ each 7 8
Vidhāno Pārigāt, Fasc. 1-8 ... ... ... 5 0
Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... ... 4 6
Vrhat Sayambhū Purāṇa, Fasc. 1-6 ... ... ... 3 12
*Yoga Aphorisms of Patanjali Fasc. 2-5 @ /10/ each ... 2 8

*Tibetan Series.*

Pag-Sam Thi Śiñ, Fasc. 1-4 @ 1/ each ... ... ... 4 0
Sher-Phyin, Vol. I, Fasc. 2-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc. 1-6 @ 1/ each ... ... ... ... ... ... 14 0
Rtogs brjod dpag hkhari Śiñ ( *Tib.* & *Sans.* Abadān Kalpalatā,) Vol. I, Fasc. 1-6 ; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... 11 0

*Arabic and Persian Series.*

Ālamgīrnamah, with Index, (Text) Fasc. 1-13 @ /10/ each ... 8 2
Āl-Muquaddasi (English) Vol. I, Fasc. 1-3 @ 1/ ... ... 3 0
Āin-i-Akbarī, Fasc. 1-22 @ 1/8/ each ... ... ... 33 0
Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/ each ... ... ... ... 34 0
Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/8/ ... ... 55 8
Ditto (English) Vol. I, Fasc. 1-8 ; Vol. II, Fasc. 1-3 @ 1/4/ ... 13 12
Arabic Bibliography, by Dr. A. Sprenger ... ... ... 0 10
*Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /10/ ... ... 11 14
Catalogue of Arabic Books and Manuscripts 1-2 ... ... 2 0
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... ... 3 0
Conquest of Syria, Fasc. 1-9 @ /10/ ... ... ... 5 10
Dictionary of Arabic Technical Terms & Appendix Fasc 1-21 @ 1/8/- ... 31 8
Farhang-i-Rashīdī, (Text) Fasc. 1-14 @ 1/8/ each ... ... 21 0
Fihrist-i-Ṭūsī, or Ṭūsy's list of Shy'ah Books Fasc. 1-4 @ 1/ each ... 4 0
Futūh-ush-Shām of Wāqidī, Fasc. 1-9 @ /10/ each ... ... 5 10
Ditto of Āzādī, (Text) Fasc. 1-4 @ /10/ each ... ... 2 8
The other Fasciculi of these works are out of stock, and complete copies cannot

Haft Āsmān, History of the Persian Masnawi, Fasc. 1. @ /12/ ... Rs 0 12
History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... 7 8
Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /10/ each ... ... 1 14
Isābah, with Supplement, (Text) 51 Fasc. @ 1/ each ... ... 51 0
Maāsir-ul-Umarā, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. III, Fasc. 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12; @ 1/- each ... ... 35 0
Maghāzi of Wāqidī, (Text) Fasc. 1-5 @ /10/ each ... ... 3 2
Muntakhabu-t-Tawārikh, Fasc. 1-15 @ /10/ each ... ... 9 6
Muntakhabu-t-Tawārikh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... ... 15 0
Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... ... 11 14
Ma'āsir-i-'Ālamgīrī, Fasc. 1-6 @ /10/ each ... ... 3 12
Nukhbatu-l-Fikr, Fasc. 1 ... ... ... ... 0 10
Nizāmi's Khiradnāmah-i-Iskandarī, Fasc. 1-2 @ /12/ each ... 1 8
Riyāzu-s-Salātīn Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto Ditto (English) Fasc. 1-5 @ 1/ ... ... 5 0
Tabaqāt-i-Nāsirī, Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto (English) Fasc. 1-14 @ 1/ each ... ... 14 0
Ditto Index ... ... ... ... 1 0
Tārīkh-i-Fīrūz Shāhī of Ziyāu-d-dīn Barni Fasc 1-7 @ /10/ each ... 4 6
Tārīkh-i-Fīrūshāhī, of Shams-i-Sirāj Alif, Fasc 1-6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... 3 0
Tuzuk-i-Jahāngīrī, (English) Fasc. 1 ... ... ... ... 1 0
Wīs o Rāmīn, (Text) Fasc. 1-5 @ /10/ each ... ... ... 3 2
Zafarnāmah, Vol. I, Fasc. 1-9 Vol. II, Fasc. 1-8 @ /10/ each ... 10 10

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES, Vols. XIX and XX @ 10/ each ... ... 20 0
2. PROCEEDINGS of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members.
   *N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.*
4. Journal and Proceedings, N. S., 1905, to date, @ 1-8 per No. to Members and Rs. 2/ per No. to Non-members.
5. Memoirs ... to date. Price varies from No. to No. Discount of 25% to Members.
6. Centenary Review of the Researches of the Society from 1784–1883 ... 3 0
   A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J. A. S. B.*, 1878) ... ... ... 4 0
   Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J. A. S. B.*, 1868) ... ... ... ... 2 0
   Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J. A. S. B.*, 1875) ... ... ... ... 4 0
7. Catalogue of the Library of the Asiatic Society, Bengal ... ... 3 8
8. Mahābhārata, Vols. III and IV, @ 20/ each ... ... 40 0
9. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—III with 8 colored plates, 4to. @ 6/ each ... ... 18 0
10. Tibetan Dictionary, by Csoma de Körös ... ... ... 10 0
11. Ditto Grammar ,, ,, ... ... ... 8 0
12. Kacmīracabdāmṛta, parts I and II @ 1/8/ ... ... ... 3 0
13. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... ... 1 0
14. Memoir on maps illustrating the Ancient Geography of Kacmīr, by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... ... ... 4 0
15. Persian Translation of Hāji Bābā of Ispāhān, by Hāji Shaikh Ahmad-i-Kirmāsi and edited with notes by Major D. C. Phillott. ... ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1–33 @ 1/ each ... ... 33
Nepalese Buddhist Sanskrit Literature, by *Dr.* R. L. Mitra ... 5 0

*N. B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer Asiatic Society." only.

30-3-07

BOOKS ARE SUPPLIED BY V.-P.-P.

BIBLIOTHECA INDICA:
A
# Collection of Oriental Works
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, NOS. 1170.

# ॥ शतपथब्राह्मणम् ॥

## ॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRĀHMAṆA

OF THE WHITE YAJURVEDA,
WITH THE
COMMENTARY OF SĀYAṆA ĀCĀRYA




EDITED BY
ĀCĀRYA SATYAVRATA SĀMAS'RAMI.

VOL. V, FASCICULUS II

CALCUTTA:
PRINTED BY HITAVRATA CHATTERJI, SATYA PRESS.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET,
1907.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal

No, 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM

THE SOCIETY'S AGENTS MR. BERNARD QUARITCH, 15, PICCADILLY, LONDON, W., AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | Rs. | |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2,4 @ /10/ each ... | 1 | 4 |
| Advaitachintā Kaustubhe, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| *Agni Purāṇa, Fasc 3-14 @ /10/ each ... ... ... | 7 | 8 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-5 ; Vol. III, Fasc 1-5, Vol, IV, Fasc. 1-8 @ /10/ ... ... ... | 14 | 6 |
| Aitareyālochanam, (the preface of the Ditto) by Ācārya S. V. Sāmasramī ... | 2 | 0 |
| *Anu Bhāshya, Fasc 2-5 @ /10/ each ... ... ... | 2 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc. 1 ... ... ... | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Açvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| *Atharvana Upanishad, Fasc. 2-5 @ /10/ each ... ... | 2 | 8 |
| Avadāna Kalpalatā, (*Sans. and Tibetan*) Vol. I, Fasc. 1-6 ; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... ... | 11 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-2 @ 1/- each ... | 2 | 0 |
| Bālam Bhaṭṭi, Vol. I, Fasc. 1-2 @ /10/ ... ... ... | 1 | 4 |
| Baudhāyana Srauta Sutra, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| *Bhāmatī, Fasc 4-8 @ /10/- ... ... ... ... | 3 | 2 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-5 @ /10/- ... ... ... | 3 | 2 |
| Brahma Sutra, Fasc. 1, @ /10/- ... ... ... ... | 0 | 10 |
| Bṛhaddēvatā, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Bodhicaryāvatāra of Çāntidevi, Fasc. 1-4 ... ... ... | 2 | 8 |
| Çatadusani, Fasc. 1-2 ... ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa, Vol I Fasc 1-7, Vol II Fasc 1-5, Vol III Fasc 1-7 ... | 11 | 14 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-12 @ /10/ each ... | 7 | 8 |
| *Caturvarga Chintāmani, (Text) Vols. II, 1-25 ; III. Part I, Fasc. 1-18, Part II, Fasc. 1-10 @ /10/ each ; Vol. IV, Fasc. 1-5 ... ... | 36 | 4 |
| Çlokavārtika, (English) Fasc. 1-5 @ 1/4/- ... ... ... | 6 | 4 |
| *Çrauta Sūtra of Āpastamba, Fasc. 6-17 @ /10/ each ... ... | 7 | 8 |
| Ditto Acvālāyan, Fasc 1-11 @ /10/ each ... ... | 6 | 14 |
| Ditto Çānkhāyan, (Text) Vol. I, Fasc. 1-7 ; Vol. II, Fasc. 1-4 ; Vol. III, Fasc. 1-4. Vol IV Fasc. 1 @ /10/ each ... | 10 | 0 |
| Ditto Lātyāyan Fasc. 1-9 @ /10/ each ... ... | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dān Kriyā Kaumundi, Fasc. 1-2 ... ... ... ... | 1 | 4 |
| Gadādhara Paddhati Kālasāra, Vol I, Fasc. 1-7 ... ... ... | 4 | 6 |
| Ditto Ācārasāra, Vol II, Fasc. 1-2 ... ... | 1 | 4 |
| Gobhiliya Grhyo Sutram, Fasc. 1-12 @ /10/- ... ... ... | 7 | 8 |
| Kāla Viveka, Fasc. 1-7 ... ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc 1-14 @ /1/4/- each ... ... | 17 | 8 |
| Kūrma Purāṇa, Fasc. 1-9 @ /10/ each ... ... ... | 5 | 10 |
| Lalita-Vistāra, (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| Ditto Fasc. 3-6 @ /10/ each ... ... ... | 2 | 8 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāṣya-pradīpodyota, Vol. I Fasc. 1-9 & Vol. II, Fasc. 1-12, Vol. III, Fasc. 1-4 @ /10/ each ... ... ... ... | 15 | 10 |
| Manuṭikā Sangraha, (Text) Fasc 1-3 @ /10/ each ... ... | 1 | 14 |
| Mārkaṇḍeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |
| * Ditto (Text) Fasc. 4-7 @ /10/ ... ... ... | 2 | 8 |
| *Mīmāṁsā Darcaṇa, (Text) Fasc. 3-19 @ /10/ each ... ... | 10 | 10 |

वा इत्यादि। अस्याय मर्थः— ‘पुरुषो’ नु ‘प्रजापतेः’ ‘नेदिष्ठम्’ अन्तिकतमं वस्तु ; पुरुषसृष्टेः प्रथमभावित्वात्। ‘सोऽयम्’ ‘अत्वक्’ अश्वत्थादिवृक्ष इव बाह्यत्वग्रहितः ; ‘ओषधीनां’ मध्ये एते ‘गोधूमाः’ अपि ‘पुरुषस्य’ सन्निहिततमं वस्तु, बलकारित्वात्। तेषां तु त्वगभावः प्रसिद्धः। अतो गोधूमचषालकरणेन ‘मनुष्यलोक मेव’ जितवान् भवतीति * ॥ ६ ॥

तस्मिन् यूपे गुणविशेषं विधत्ते— “गर्त्तन्वानिति। गर्त्तवान्, यूपस्याग्रे निम्नप्रदेशः कार्यः। ‘गर्त्तन्वान्’ † “अनो नुट्”–इति ‡ अन्नन्तात्परस्य मतुपो नुडागमो विहितः, व्यत्ययेनाकारान्तादपि भवति। ‘अतीक्ष्णाग्रः’ अतनूकृताग्रः, स्थूलाग्रप्रदेशो भवेत्। गर्त्तं पितृलोकात्मना प्रशंसति— “पितृदेवत्य इति। “पितृणां सदन मसि”–इत्यादिमन्त्रवर्णाद् यूपावटस्य पितृदेवतास्थानत्वं प्रतीयते। अत एव तैत्तिरीयके यूपस्य सर्वदेवतामयत्वकथनप्रस्तावे— “पितृणां निखातं मनुष्याणा मूर्द्धं निखातात्”–इति § गर्त्तावच्छिन्नस्य यूपभागस्य पितृदेवत्यत्वम्। ईदृशी प्रसिद्धिरत्र ‘वै’-शब्देन द्योत्यते। आरोहणीययूपस्य चोदकप्राप्तं प्रमाण मपवदितुं परिमाणान्तरं विधत्ते— “सप्तदशेति। चतुर्विंशत्यङ्गुलपरिमितोऽरत्निः ; सप्तदशसङ्ख्याका अरत्नयः प्रमाणं यस्य यूपस्येति विग्रहः ॥ ७ ॥

विधत्ते— “अथ नेष्टेति। ‘उदानेष्यन्’ शालातो निर्गमयिष्यन् ‘कौशं’ दर्भमयं ‘वासः’ पत्नीं परिधापयेत् ‖। अत्र

---

* ‘उत्कीर्णसमाग्रो गोधूमचषालः’–इति का० श्रौ० सू० १४. १. २२।

† ‘गर्तवान्’– इति ज।

‡ पा० सू० ८. २. १६।

§ तै० सं० ६. ३. ४. १८।

‖ का० श्रौ० सू० १४. ५. ३।

आपस्तम्ब:— "ऋतस्य योनिरसीति दर्भमयं पत्नीम्"-इति *। श्रुतिश्च भवति— "दर्भमयं परिधापयति"-इति †। यद्वा, क्रिमिकोशविकारभूतं वास: 'कौशम्', तेन परित आच्छादयेत्। यद्वा, 'कौशम्' कुशमयं, चण्डातकम् अर्द्धोरुकं परिधापयेत्; एव मेव हि चण्डातकपदं कर्कोपाध्यायेन व्याख्यातम्— "चण्डातकं चलन मुच्यते ‡। एवं ह्यभियुक्तोपदेश: §— 'अर्द्धोरुकं विलासिन्या वासश्चण्डातकं स्मृतम्'-इति। नृत्तोपयिकत्वेनाच्छादनीय मूरुकञ्चुक मर्द्धोरुकं वास:। वसनस्य प्रदेशं विधत्ते— "अन्तर मिति। दीक्षाकाले यद् वस्त्रं परिहितम्, तस्माद् बहि:प्रदेशे इत्यर्थ:। अन्तर-शब्दो बहिर्योगे वर्त्तते ‖।

दर्भैरेव वास: कर्त्तव्य मिति अत्रोपपत्तिं दर्शयति— "जघनार्द्ध इत्यादिना। पूर्वदेशस्याहवनीयसाध्यत्वात् यज्ञ: प्राच्यां दिश्यवस्थित:, तस्य यज्ञस्य पश्चिमभागे (पत्नीशालाया मवस्थानात् ¶) पत्नी यज्ञस्य जघनार्द्धे इति निरूप्यते। तां पत्नीम् एतर्हि 'प्राचीं' प्राङ्मुखां पूर्वदिगवस्थितं यज्ञं प्रापयिष्यन् भवति। तदुपायत्वेन दर्भमयवास: परिधापनस्य मेध्य-

* आप० श्रौ० सू० १८. ५. ७। इह तार्प्य मित्यनुवर्त्तते। तच्च घृताक्तं वस्त्र मिति सा० भा० (तै० सं० १. ७. ६. २.)।

† तै० ब्रा० १. ३. ७. १।

‡ 'चलनक उच्यते'—इति डा०—वेबरसम्पादितं पाठान्तरम्।

§ अम० को० २. ६. ११६। 'विदु:'—इति च डा०-वेबर-इष्ट:।

‖ 'अन्तरं दीक्षितवसनात्'—इति का० श्रौ० सू० १४. ५. ४।

¶ नास्त्येष पाठो च-पुस्तकादन्यत्र।

त्वापादकत्व माह— "अस्ति वा इति। पत्नीसम्बन्धिनामेयंदवाचीन मङ्गम्, तद् 'अमेध्यम्' अपवित्रम्; तत्प्रदेशे मेध्यदर्भमयवास:परिधापनेन तदङ्गं परिशुद्धं 'कृत्वा', 'एनां' 'प्राचीं' 'यज्ञ'' प्रापितवान् भवति। दर्भाणां मेध्यत्वम् "पवित्रं वै दर्भाः पुनात्येवैनम्"–इति * श्रुत्यन्तरादवगम्यते। "तस्मात्तेष्ट-त्यादि, प्रतिज्ञार्थनिगमनम् ॥ ८ ॥

विधत्ते— "अथ निश्रेणी मिति †। 'निश्रेणीम्' निश्रेणी यूपारोहणार्थं सोपानसदृशः काष्ठनिर्मितपदार्थः, 'निश्रयति' यूपे निदध्यात्। तथा साधनेन यजमानस्य यूपारोहणे कश्चिद् विशेषं विधत्ते— "स दक्षिणत इति। दक्षिणप्रदेशादुदङ्मुखो यूप मारोहेत्, उदक्प्रदेशाद् दक्षिणमुखो वा आरोहेदिति विकल्पः। तत्रैकं पक्षं सिद्धान्तयति— "दक्षिणत इति। 'तु'-शब्दः पक्षान्तरव्यावृत्त्यर्थः। तथाहि एवं कृते सति 'उदग् भवति' कर्मण उदगपवर्गता सिद्ध्यति; तस्मादय मेव पक्षः श्रेयान् ॥ ९ ॥

रोहणकाले जायामन्त्रणं विधत्ते— "स रोक्ष्यन्निति। रोहणं करिष्यन्, हे 'जाये!' 'एहि' आगच्छ, 'स्वः' स्वर्गं 'रोहाव' आरोहणं करवावेति ‡। जायायाः प्रत्युक्तिं दर्शयति— "रोहावेत्याह जायेति §। अथान्वयव्यतिरेकाभ्यां जायासहितस्य सम्पूर्णावयवत्वं प्रतिपादयन्नत्र जायामन्त्रणं विधत्ते—

* तै० ब्रा० १. ३. ७. १।

† का० श्रौ० सू० १४. ५. ४। तत्र 'निश्रयणीं' दृश्यते।

‡ का० श्रौ० सू० १४. ५. ६।

§ का० श्रौ० सू० १४. ५. ७।

"तद्यदिति। प्रथमपर्याये असर्वं इति परिच्छेदः, असम्पूर्णं इत्यर्थः। 'ह' यस्माद् यजमानस्य 'अर्द्धः एषः यत् जाया आत्मनः', तदभावे प्रजोत्पत्त्यभावः, यदा * जायासाहित्यं तदा प्रजोत्पादनक्षमत्वम्। तथाच 'सर्वः' सम्पूर्णावयवोऽस्मि-त्याह— "एतां गति मिति। 'एतां' यूपारोहणलक्षणां 'गतिं' 'गच्छामि' प्राप्तवानीत्यभिप्रायेण जायामन्त्रणं कार्यं मिति ॥ १०॥

एतद्यूपारोहण मनूद्य मन्त्रं विधत्ते— "स रोहतीति †। 'प्रजापतेः' 'प्रजाः' अपत्यभूताः 'अभूम' इति ‡ ॥ ११ ॥

गोधूममयचषालस्पर्शनं समन्त्रकं विधत्ते— "अथ गोधू-मानिति §। वयं देवाः सन्तः 'स्वः' स्वर्गम् 'अगन्म' गत-वन्त इति मन्त्रस्यार्थः ‖ ॥ १२ ॥

"तद् यद् गोधूमानित्यादि। गोधूमस्पर्शनेन वाजपेयजित मन्नं स्वाधीनं कृतवान् भवतीति तात्पर्यार्थः ॥ १३ ॥

विधत्ते— "अथ शीर्ष्णेति ¶। 'शीर्ष्णा' शिरसा 'यूपम्' 'अत्युज्जिहीते' अतिक्रम्योन्नमयति। यूपं शिरसा स्पृशन् त मतिक्रम्य स्वशिर उन्नमयेदित्यर्थः। 'अमृताः' अमरणधर्माणो 'अभूम' सम्भूता इति उन्नमनमन्त्रस्यार्थः **। 'एतेन' यूपाग्रात् स्वशिरस उन्नमनात् यूपस्यातिक्रान्तत्वात् देवलोकजयः ॥ १४ ॥

---

* 'यदा'—इति ङ, च, छ; ज-पुस्तके नास्त्येव।

† का० श्रौ० सू० १४. ५. ८।

‡ वा० सं० ६. २१. ७।

§ का० श्रौ० सू० १४. ५. ६।

‖ वा० सं० ६. २१. ८।

¶ का० श्रौ० सू० १४. ५. १०।

** वा० सं० ६. २१. ६।

विधत्ते— "अथ दिश इति *। यूपे तिष्ठन्नेव यजमानः सर्वा दिशोऽनुक्रमेण पश्येत् "अस्मे"-इति † मन्त्रं जपन्। तन्मन्त्रस्याय मर्थः ;— हे दिशः ! 'वः' युष्मत्सम्बन्धि 'इन्द्रियं' वीर्यम् 'अस्मे' अस्मासु 'अस्तु'। तथा 'नृम्णं' युष्मत्सम्बन्धि धनम् 'अस्मे' अस्मासु 'अस्तु'। 'उत' अपि च 'क्रतुः' सङ्कल्पः, तत्पूर्वको यज्ञोऽपि 'अस्मे' अस्तु। 'वः वर्चांसि' युष्मत्सम्बन्धीनि तेजांसि 'अस्मे' अस्मासु 'सन्तु' इति। इन्द्रियादीना माशासनं युक्त मित्याह— "सर्वं वा इत्यादि। प्रजापतेः सर्वात्मकत्वात् वाजपेयेन च प्रजापतिप्राप्तित्वात् 'अस्य सर्वस्य' जगतो यशआदिकं 'सम्वृज्य' विभज्याधाय स्वात्मनि धारयति, अनन्तरं स्वात्मनि कुरुते, आत्मसात् कृतवान् भवतीत्यर्थः ॥ १५ ॥

अत्र कात्यायनः— "सप्तदशाश्वत्थपत्त्रोपनद्धानूषपुटानुदस्यन्त्यस्मै विशः प्रतिगृह्णात्येनानिति ‡ यदसूत्रयत्, तत् क्रमेण विधत्ते— "अथैन मिति। 'ऊषपुटैः' क्षेत्रपांशवः § ऊषाः, तानश्वत्थपत्रैः पुटीकृत्य तैः पुटैः यूपेऽवस्थितं यजमान मभिलक्ष्य 'उदस्यन्ति' ऊर्ध्वान् प्रतिदिशं प्रक्षिपेयुरित्यर्थः। अतएव आपस्तम्बः— "त माश्वत्थैरासपुटैरूषपुटैरुभयैर्वा विशः प्रतिदिश मर्पयन्ति"-इति ‖। "पशवो वा ऊषाः"-इत्यादिकस्याय मर्थः ; — ऊषाणां यज्ञद्वारा पशुसाधनत्वात् ताच्छब्द्यम्। पशूनाञ्च

---

* का० श्रौ० सू० १४. ५. ११।

† वा० सं० ६. २२. १।

‡ का० श्रौ० सू० १४. ५. १२, १३।

§ 'ऊषक्षेत्रपांशवः'-इति ज।

‖ आप० श्रौ० सू० १८. ५. १६।

अन्नत्वं क्षीरादिसाधनत्वेन प्रसिद्धम् । अतः पशुद्वारा ऊषाणा मन्नत्वा-दूषपुटहननेन यजमानेऽन्न मेव निहितवान् भवतीति ॥ १६ ॥

विधत्ते— "आश्वत्थेष्विति । अश्वत्थपलाशेषूपनद्धान् सन्नद्धान् कुर्यात् । आश्वत्थैरेव करणे कारण माह— "स यदेवेति । 'अदः' अमुष्मिन् विप्रकृष्टे काले, 'अश्वत्थे' अवस्थितान् 'मरुतः' 'इन्द्रः' आह्वयन्ते । एव मय मश्वत्थो देवविशां मरुता माश्रयभूतः । अतस्तदीयेषु पत्रेषु अन्नसंस्तुताना मूषाणा मुपनिबन्धनं प्रशस्त मित्यर्थः । ऊषपुटेषु क्षेपणकर्त्तॄन् विधत्ते— "विश इति । 'विशः' वैश्या अर्पयेयुः । मरुतां विट्त्व मिन्द्रस्य प्रजात्वात्; अतो मनुष्यविशा मपि तत्साजात्येन तदात्मकत्वम् । तेषां वैश्याना मन्नत्वं कृषीवलत्वात् । ऊषपुटानां सङ्ख्यां विधत्ते— "सप्तदशेति ॥ १७ ॥

तत्रैव यजमानस्य भूम्यवेक्षणं समन्त्रकं विधत्ते— "अथेमा मिति *। 'मात्रे' सर्वस्य निर्मातृत्वात् मातृभूतायै 'पृथिव्यै' 'नमः' 'इति' †। आदरार्थो मन्त्रवाक्याभ्यासः । मन्त्रगत-मातृशब्दस्य जननि-वाचकत्वं विवक्षित मिति वदन् भूम्यवेक्षणं बृहस्पतिदृष्टान्तमुखेन प्रशंसति— "बृहस्पतेरिति । पूर्वं वाज-पेययज्ञे बृहस्पतेरभिषिक्ताद् भूमिर्बिभेति स्म । भयकारण माह — "योऽभ्यषिचीति । यत् 'अयम्' अभिषिक्तः पुरुषो 'महद्-भूत्' इत्यन्वयः । 'यद्' यस्मात् अभिषेकेण महत्त्वगुणवान् 'अयं' बृहस्पतिः 'मा' मां भूमिम् 'न अवदृणीयात्' नाव-दारयेत् 'इति'; अतो हेतोः 'मित्रधेय मकुरुत'—इति उत्तर-

---

* 'नमो मात्र इति भूमि मवेक्षते'—इति का० श्रौ० सू० १४. ५. १४ ।

† वा० सं० ९. २२. २ ।

वाक्यशेषसम्बन्धः। तथा 'बृहस्पतिः' अपि भूम्याः सकाशाद् बिभेति स्म ; 'यद्' यस्मात् 'इयं' भूमिः 'मा' माम् अभिषिक्तं 'नावधून्वीत' न विचालयेत् 'इति'। 'तत्' तस्मात् कारणात् 'अनया' पृथिव्या सह 'एव' 'एतत्' निरीक्षणरूपं 'मित्रधेयं' मैत्रीम् 'अकुरुत' भूमिरपि सख्य मकरोदित्यर्थः। उपक्रमोपसंहाराभ्या मवगम्यते,-- उपक्रमे तावदुभयोरपि भीतिरुक्ता, अवदारणपरिहाराय मित्रधेयकरण मिति चोक्तम्; उपसंहारेऽपि 'न पुत्रो मातरम्' इति मातुः पुत्रकर्त्तृकोपद्रवस्य निषेधात् ॥ १८ ॥

इदानी मनुष्ठानेऽपि भूम्यवेक्षणं मित्रत्वप्रयोजन मित्याह— "बृहस्पतिसवो वा इति। "वाजपेय मिति। यद्वेषः 'बृहस्पतिसवः' बृहस्पतेरभिषेको यस्मिन्निति स तथोक्तः। शिष्टं पूर्वपर्यायवत् व्याख्येयम् ॥ १९ ॥

विधत्ते— "अथ हिरण्य मिति। 'हिरण्यम्' 'अभि'-लक्ष्य यूपादवरोहेत्; यतः 'हिरण्यं' मरणरहितायुरात्मकम्, तत्रावरोहणेन तथाविधे 'आयुषि' एव प्रतिष्ठितो भवतीत्यर्थः ॥ २० ॥

हिरण्यनिधानार्थं वस्त्राजिनास्तरणं विधत्ते— "अथाजेति। तत्रास्यास्तीर्णाजचर्मणः 'उपरिष्टात्' 'रुक्मं' निदध्यात्। हिरण्ये अवरोहणं वैकल्पिक मित्याह— "इमां वैवेति। रुक्मे वावरोहेदिति। अत एव कात्यायनः— "स रुक्मे वस्त्रचर्मण्यवरोहति, भूमौ वा"–इति * ॥ २१ ॥

---

* का० श्रौ० सू० १४. ५. १५, १६। 'रुक्मः परिमण्डलः सौवर्णाभरणविशेषः, वस्त्रो सुष्करः साण्डभागः'–इति तत्र वृत्तिः। "हिरण्य मध्यवरोहति"–इत्यादि च तै० ब्रा० १. ३. ७. ७।

विधत्ते— "अथास्मा इति। 'अस्मै' यूपादवरोहाय। आसन्दीलक्षण मुक्तं कात्यायनेन— "औदुम्बरी मासन्दीं नाभिदघ्ना मरत्निमात्राक्षी मूता माहरन्ति"-इति *। 'उपरिसद्यम्'-इत्यस्याय मर्थः ;— वाजपेयेन यागेन 'उपरिसद्यम्' उपरिसदनं 'जयति' भद्रपीठादेरुपर्यवस्थानं प्राप्नोति। एतदुपपादनायाह— "यो जयतीति। 'यः' यूपारोहणेन 'अन्तरिक्षसद्यम्' आकाशे उपवेशनं 'जयति', 'एषः' इति पूर्वेण सम्बन्धः ॥ २२ ॥

"औदुम्बरीति। उदुम्बरनिर्मिता आसन्दी †। "अन्नं वा ऊर्गिति। यदेतद् 'ऊर्ग्' बलकरम् 'अन्नम्', तदात्मकः 'उदुम्बरः' वृक्षः ; तज्जन्यत्वात्। श्रूयते हि— "देवा वा ऊर्जं व्यभजन्त, तत उदुम्बर उदतिष्ठत्"-इति। "ता मग्रेणेति। अस्यार्थः ;— 'हविर्धाने'-इति द्वितीयाद्विवचनान्तं पदम्, ते 'अग्रेण' तयोरग्रप्रदेशम 'आहवनीयं जघनेन' सोमाहुत्यधिकरणाग्नेः पश्चिमप्रदेशे 'ताम्' आसन्दीं निदध्यात्। अत्र सूत्रम्— "उत्तरवेदि मपरेणौदुम्बरी मासन्दीं वस्तचर्मणा स्तृणातीय' ते"-इति ‡॥ २३ ॥

आसन्द्या मजाजिनेनाच्छादनं विधत्ते— "अथाजर्षभस्याजिन मिति। वस्तप्रजापत्योर्बहुप्रजोत्पादकत्वादैकरूप्यं समर्थयते— "एता वा इत्यादि। 'एताः अजाः' 'प्रजापतेः' 'प्रत्यक्ष-

* का० श्रौ० सू० ७. ६. २३।

† "चतुर्भिः पादैरुपेता खट्वाकारा"—इति तै० सं० ७. ५. ८. १७ सा० भा०। विशेषतस्तु ला० सू० ३. १२. १—१५ ; तै० ब्रा० ७. ५. ७ ; ८. २. १ टीप्पन्योर्द्रष्टव्यम्। इह चोपरिष्टादाम्नास्यति ६. ७. १. १५।

‡ का० श्रौ० सू० १४ ५. १७।

तस्मात्' अतिशयेन प्रत्यक्षं रूपम्, यस्मादेवं 'तस्मात्' संवत्सर-मध्ये 'त्रिः' त्रिवारं 'द्वौ त्रीन्' वा पुत्रान् 'विजायमानाः' सुवाना भवन्ति * ॥ २४ ॥

आस्तरण मनूद्य मन्त्रं † विधत्ते— "स आस्तृणातीति। हे अभिषिच्यमान वाजपेययाजिन्! 'ते' तव 'इयम्' आसन्दी 'राट्' राज्यसाधनम्, पीठादेरुपरिसदन मेव राज्य मित्यर्थः। तस्याभिप्राय माह— "राज्य मिति। तदेतेनास्तरणेन यजमानो राज्यं निहितवान् भवति॥

विधत्ते— "अथैन मिति ‡। 'एनं' यजमानम् अस्या मासन्द्याम् उपवेशयेत्। तन्मन्त्रस्याय मर्थः;— हे यजमान! 'यन्ता' सर्वस्य नियन्ता 'असि', 'यमनः' 'प्रजानां' नियमिता असि, 'ध्रुवः' स्थिरः 'असि', 'धरुणः' धारकः असि। 'कृष्यै' कर्षणाय 'त्वा' त्वाम्, उपवेशयामीति शेषः। एव मुत्तरत्रापि योज्यम्। 'क्षेमाय' लब्धवस्तुपरिपालनाय, 'रय्यै' धनाय, 'पोषाय' इति §।

मन्त्रं व्याचष्टे— "यन्तार मिति। "ध्रुव मेवैन मिति। 'अस्मिन् लोके' 'ध्रुवं' सन्तम् 'एव' 'एनं' यजमानम् 'एतत्'

---

* अग्रेण यूपं वस्ताजिनं प्राचीनग्रीव मुत्तरलोमास्तीर्य, तस्मिञ्छतमानं हिरण्यं निधायामृतमसीति हिरण्ये दक्षिणं पादं यजमानः प्रतिष्ठापयते, पुष्टिरसि प्रजनन मसीति सव्यम्; तस्मादासन्दी मारोहति"—इति आप० श्रौ० सू० १८. ५. २१, ६. १—३।

† वा० सं० ६. २२. ३।

‡ का० श्रौ० सू० १४. ५. १८।

§ मन्त्रपाठस्तु वा० सं० ६. २२. ४।

एतेन मन्त्रभागेन 'धरुणं' धारकं 'करोति'। कृष्यादिपदाना मर्थं सङ्कलय्याह— "साधवे त्वेति। श्रेयसे त्वा मुपवेशयामीति। अनेन कृष्यादिश्रेयांसि, अन्यान्यपि सङ्गृहीतानि भवन्तीत्यर्थः ॥ २५ ॥ ६ [ २. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

## ॥ इति पञ्चमकाण्डे प्रथमः प्रपाठकः * ॥

---

* इत उत्तर मिद 'कण्डिकाः ११७'—इति क, कण्डिकासङ्ख्या ११७'—इति ख, ग, घ। तत्र १ ब्रा० १६ क०, २ ब्रा० १६ क०, ३ ब्रा० १४ क०, ४ ब्रा० १५ क०; ५ ब्रा० २८ क०, ६ब्रा० २५ क०। एतासां सङ्कलनयास्मिन् प्रपाठके षट्सु ब्राह्मणेषु ११७ कण्डिकाः सम्पन्ना इति शम् ॥

अथ

द्वितीयप्रपाठके प्रथमं ब्राह्मणम्,

अपिवा

द्वितीयेऽध्याये द्वितीयं ब्राह्मणम्।

---

॥ हरिः ॐ ॥

बार्हस्पत्येन चरुणा प्रचरति। तद्यानिष्ट
[illegible] स्विष्टकृद्भवत्यथास्मा ऽअन्नᳪं सम्भरत्यन्नं वा
[illegible] उज्जयति यो व्वाजपेयेन यजते ऽन्नपेयᳪं
ह वै नामैतद्यद्वाजपेयं तद्यदेवैतदन्न मुदजैषीत्त-
देवास्मा ऽएतत् सम्भरति * ॥ १ ॥

औदुम्बरे पात्रे †। अन्नं वा ऽऊर्गुदुम्बर
ऊर्जो ऽन्नाद्यस्यावरुद्ध्यै तस्मादौदुम्बरे पात्रे सो-
ऽप एव प्रथमाः सम्भरत्यथ पयो ऽथ यथोपस्मार
मन्नानि ॥ २ ॥

---

* 'सम्भरन्ति'—इति क।

† 'पात्रे'—इति ग, 'पात्रे'—इति घ।

तद्धैके। सप्तदशान्नानि सम्भरन्ति सप्तदशः प्रजापतिरिति * वदन्तस्तदु तथा न कुर्यात् प्रजापतेर्व्वेव सर्व्वं मन्न मनवरुद्धं क उ तस्मै मनुष्यो यः सर्व्वं मन्न मवरुन्धीत † तस्मादु सर्व्वं मेवान्नं यथोपस्मारꣳ सम्भरन्नेक मन्नं न सम्भरेत् ॥ ३ ॥

स यन्न सम्भरति। तस्योद्ब्रुवीत तस्य नाश्नीयाद्यावज्जीवं तथा नान्त मेति तथा ज्योग्जीवति स एतस्य सर्वस्यान्नाद्यस्य सम्भृतस्य स्रुवेणोपघातं वाजप्रसवीयानि जुहोति तद्याभ्य ए तद्देवताभ्यो जुहोति ता अस्मै प्रसुवन्ति ताभिः प्रसूत उज्जयति तस्माद्वाजप्रसवीयानि जुहोति॥ ४ ॥

स जुहोति। वाजस्येमं प्रसवः सुषुवे ऽग्रे सोमꣳ राजान मोषधीष्वप्सु ‡ ता अस्मभ्यं मधुमती र्भवन्तु व्वयꣳ राष्ट्रे जागृयाम पुरोहिताः स्वाहा ॥ ५ ॥

---

* 'प्रजापतेरिति'—ग-पुस्तके।

† 'मवरुन्धति'—इति क, ख ।

‡ '०ऽसु'—इति ग '०प्सु'—इति घ ।

व्वाजस्येमाम्। प्रसवः शिश्रिये दिव मिमा च व्विश्वा भुवनानि सम्म्राट् *। अदित्सन्त्वं दापयति प्रजानन्त्स नो रयिꣳ सर्व्ववीरं नियच्छतु स्वाहा ॥ ६ ॥

व्वाजस्य नु। प्रसव आवभूवेमा च व्विश्वा भुवनानि सर्व्वतः। सनेमि राजा परियाति विद्वान् प्रजां पुष्टिं व्वर्द्धयमानो ऽअस्मे स्वाहा ॥ ७ ॥

सोमꣳ राजानम्। अवसे ऽग्निमन्वारभामहे। आदित्यान्विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिꣳ स्वाहा ॥ ८ ॥

अर्य्यमणं बृहस्पतिम्। इन्द्रं दानाय चोदय। व्वाचं व्विष्णुꣳ सरस्वतीꣳ सवितारं च व्वाजिनꣳ स्वाहा ॥ ९ ॥

अग्ने ऽअच्छा। वदेह नः प्रति नः सुमना भव। प्र नो यच्छ † सहस्रजित्त्वꣳ हि धनदा असि स्वाहा ॥ १० ॥

---

* 'सम्म्राट्'—इति ग 'सम्म्राट्'—इति घ।

† 'अच्छ'—इति च डा०-वेबरहस्तः।

प्र नः । यच्छत्वर्यमा प्र पूषा प्र बृहस्पतिः । प्र वाग्देवी ददातु नः स्वाहेति * ॥ ११ ॥

अथैनं परिशिष्टेनाभिषिञ्चति । अन्नाद्येनैवैन मेतदभिषिञ्चत्यन्नाद्य मेवास्मिन्नेतद् दधाति तस्मादेनं परिशिष्टेनाभिषिञ्चति † ॥ १२ ॥

सो ऽभिषिञ्चति । देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मिति देवहस्तैरेवैन मेतदभिषिञ्चति सरस्वत्यै व्वाचो यन्तुर्यन्त्रिये ‡ दधामीति व्वाग्वै सरस्वती तदेनं व्वाच एव यन्तुर्यन्त्रिये दधाति ॥ १३ ॥

तदु हैक ऽआहुः । व्विश्वेषां त्वा देवानां यन्तुर्यन्त्रिये दधामीति सर्व्वं वै व्विश्वे देवास्तदेनꣳ सर्वस्यैव यन्तुर्यन्त्रिये दधाति तदु तथा न ब्रूयात्सरस्वत्यै त्वा व्वाचो यन्तुर्यन्त्रिये दधामीत्येव ब्रूयाद्वाग्वै सरस्वती तदेनं व्वाच एव यन्तुर्यन्त्रिये दधाति बृहस्पतेष्ट्वा साम्राज्येनाभि-

---

* 'स्वाहेति'—इति क। 'स्वाहेति ख, ग।

† '०षिञ्चति'—इति ग, घ।

‡ 'यन्तुयन्त्रे'—इति सा-सम्मत इति डा० वेबरः।

षिञ्चाम्यसाविति नाम गृह्णाति तद् बृहस्पते-
रेवैन मेतत्सायुज्यꣳ सलोकतां गमयति ॥ १४ ॥

अथाह। सम्राडय मसौ सम्राडय मसाविति
निवेदित मेवैन मेतत्सन्तं देवेभ्यो निवेदयत्ययं
महावीर्यो यो ऽभ्यषेचीत्ययं युष्माकैको ऽभूत्तं
गोपायतेत्येवैतदाह त्रिष्कृत्व आह त्रिवृद्धि
यज्ञः * ॥ १५ ॥

अथोज्जितीः। जुहोति वा व्वाचयति वा
यदि जुहोति यदि व्वाचयति समान एव
बन्धुः ॥ १६ ॥

स व्वाचयति। अग्निरेकाक्षरेण प्राण मुद-
जयत्त मुज्जेषं प्रजापतिः सप्तदशाक्षरेण सप्त-
दशꣳ स्तोम मुदजयत्त मुज्जेष मिति तद्यद्देवै-
ताभिरेता देवता उदजयंस्तद्वैष एताभिरुज्ज-
यति सप्तदश भवन्ति सप्तदशो वै प्रजापति-
स्तत् प्रजापति मुज्जयति † ॥ १७ ॥

अथाहाग्नये स्विष्टकृते ऽनुब्रूहीति। तद्य-

---

* 'यज्ञ:'—इति ग, 'यज्ञ:'—इति घ।

† 'मुज्जयति'—इति क।

दन्तरेणाहुती ऽएतत् कर्म क्रियत ऽएष वै प्रजा-
पतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः
प्रजाता एतमेवाप्येतर्ह्यनु प्रजायन्ते तन्मध्यत
एवैतत् प्रजापति मुज्जयति तस्मादन्तरेणाहुती
ऽएतत् कर्म क्रियत * ऽआश्राव्याहाग्निꣳ स्विष्टकृतं
यजेति वषट्कृते जुहोति ॥ १८ ॥

अथेडा मादधाति । उपहूताया मिडाया मप
उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं
गृहीत्वा स्तोत्र मुपाकरोति तꣳ स्तोत्राय प्रमी-
वति स उपावरोहति सो ऽन्ते स्तोत्रस्य भवत्यन्ते
यज्ञस्य ॥ १९ ॥

तद्वैके । एतत् कृत्वाथैतत् कुर्वन्ति तदु
तथा न कुर्यादात्मा वै स्तोत्रं प्रजा शस्त्र मेत-
स्माद्ध स यजमानं प्रणाशयति । स जिह्म
एति स ह्वलति तस्मादेतदेव कृत्वाथैतत्
कुर्यात् ॥ २० ॥

अथेडा मादधाति । उपहूताया मिडाया मप

---

* क्रियन'—इति ख ।

उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्र मुपाकरोति तꣳ स्तोत्राय प्रमीवति स उपावरोहति सो ऽन्ते स्तोत्रस्य भवत्यन्ते शस्त्रस्य ॥ २१ ॥ १ ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [२.२.] ॥

अथ नैवारचरुप्रचारं विधत्ते—"बार्हस्पत्येनेति * । प्रधाननैवाराहुतेरनन्तरं कर्त्तव्यं वाजप्रसवीयहोमं विधातुं कालं विधत्ते— "तस्यानिष्ट एवेति । 'तस्य' नैवारस्य 'स्विष्टकृत्' 'अनिष्टः' अनिष्टकृद् 'भवति', प्रधानयागादूर्ध्वं स्विष्टकृतः प्रागित्यर्थः । होमार्थं मन्त्रसम्भरणं विधत्ते— "अथास्मा इति । 'अस्मै' यजमानाय त मभिषेकार्थम् 'अन्नं' सम्भरेत् ॥ १ ॥

अन्नसम्भरणार्थं पात्रविशेषं विधत्ते— "औदुम्बर मिति † । तत्र प्रथम मपां सम्भरणं विधत्ते— "सोऽप एवेति । प्रथमम् 'अपः' जलानि सम्भरेत् । 'अथ पयः' क्षीरं तदनन्तरम् । 'यथोपस्मारम्' उपस्मृति मनतिक्रम्य 'अन्नानि' सम्भरेत्, यानि तदा स्मृतिपथ मवतरन्ति तानीत्यर्थः ‡ । तत्र ग्राम्यारण्यभेदेन चतुर्दशान्नान्यापस्तम्बेन सूत्रितानि, तान्यपि यथोपस्मारपदेन ग्राह्याणि— "तिलमाषा व्रीहियवाः प्रियङ्गवो

* 'नैवारेण प्रचरति'—इति का० श्रौ० सू० १४. ५. १६ ।

† का० श्रौ० सू० १४. ५. २० ।

‡ का० श्रौ० सू० १४. ५. २१ क । "सप्त ग्राम्या ओषधयः, सप्तारण्याः"—इति च तै० ब्रा० १. ३. ८. १ द्रष्टव्यम् ।

गोधूमाः वेणुश्यामकनीवाराः जर्त्तिलाश्च गवीधुका अरण्यजा मर्कटका विज्ञेया ग्राम्यसप्तमा कुलत्थसप्तमा वा"–इति *। बुद्धिस्थानि यानि वा, तानि सम्भरेत् ॥ २ ॥

'यथोपस्मार मन्नानि संविभृयात्'–इत्यत्र सङ्ख्याया अनुक्तेः यावन्ति स्मर्यमाणानि तावन्ति सम्भरेदित्यर्थो भवति, तत्र सङ्ख्याविशेषं पूर्वपक्षयति— "तद्धैक इति। 'सप्तदश' सप्तदश-सङ्ख्याकानि 'अन्नानि' 'सम्भरन्ति'। तत्रोपपत्ति माह— "सप्त-दशः प्रजापतिरितीति। प्रजापतेः सप्तदशत्वं प्रागुक्तम् † ॥

तन्मतं निराचष्टे— "तदु तथेति। 'प्रजापतेः'–इति। अस्याय मर्थः ;— पूर्वं प्रजापतेरपि सकल मन्नं न वशीकृतम्, इदानीं 'तस्मै' प्रजापत्यर्थं 'मनुष्यः' 'कः' समर्थः सर्वान्नावरोधने ; तस्माद् यावत्स्मृति सम्भरिष्यामीति। बुद्धिस्थाना मपि सर्वेषां सम्भ-रणे प्राप्ते एकस्य निषेधति— "एक मन्न मिति ‡ ॥ ३ ॥

असम्भ्रियमाणान्नविषयं कञ्चिद् विशेषं विधत्ते— "स यदिति। 'यत्' अन्नं 'न' सम्भरेत्, 'तस्य' 'उदब्रुवीत' न सम्भृत मित्युच्चैः तन्नाम ब्रूयात्, यथा असम्भृतस्य अन्नस्य यावज्जीवनभोजनेन 'अन्तं' विनाशं 'न एति', 'ज्योक्' चिर-कालं 'जीवति'। भोक्तव्यस्य सर्वस्य भोगे सति विनाशो भवति, अतस्तदेक मवशिष्य भुञ्जीतेति तात्पर्यम् § ॥

---

* आप० श्रौ० सू० १७. ११. ३। सप्त ग्राम्याः कृष्टे, सप्तारण्या अकृष्टे'–इति तच्छेषः।

† १प्र० २ब्रा० ( २४ पृ० २ पं० ) द्रष्टव्यम्।

‡ का० श्रौ० सू० १४. ५. २१ ख।

§ का० श्रौ० सू० १४. ५. २२।

विधत्ते— "स एतस्येति। मिलितस्य 'एतस्य' 'सर्वस्य' अन्नस्य * एकदेशं 'स्रुवेण' 'उपघातम्' उपहत्योपहत्य गृहीत्वा 'वाजप्रसवीयानि जुहोति' वाजप्रसवशब्दयुक्तमन्त्रकरणकहोमान् कुर्यादित्यर्थः †। "तद्याभ्य इति। मान्त्रवर्णिकाभ्यो 'याभ्यः' अष्टादिदेवताभ्यो जुहोति तदेव। 'ताः' 'अस्मै' यजमानाय एत-द्यागफलभूत मन्न मवरोद्धुं 'प्रसुवन्ति' अनुजानन्ति, ताभि-रनुज्ञातः पश्चात् स्वाधीनं करोतीत्यर्थः ॥ ४ ॥

होम मनूद्य मन्त्रान् विधत्ते— "स जुहोति वाजस्येम मिति। सर्वत्र 'स्वाहा'-शब्दो हवनलिङ्गम्। प्रथमस्याय मर्थः ‡;— 'अग्रे' पूर्वं 'वाजस्य' अन्नस्य 'प्रसवः' उत्पादकः परमेश्वरः 'ओषधीषु' 'अप्सु' च सारभूतम् 'इमं' सोमवल्ली-रूपं 'राजानं' 'सुषुवे' उत्पादयामास, 'ताः' ओषधय आपश्च 'अस्मभ्यम्' अस्मदर्थं 'मधुमतीः' माधुर्योपिता भवन्तु। 'वयम्' अपि अस्मिन् 'राष्ट्रे' 'पुरोहिताः' यागानुष्ठानादौ पुरोगामिनो 'जागृयाम' जागरूका भूयास्मेति ॥ ५ ॥

अथ द्वितीयः §;— "वाजस्येमा मिति। 'वाजस्य प्रसवः' ईश्वरः 'इमां' भूमिं 'दिवम्' इमानि चान्यानि सर्वाणि 'भुवनानि' 'शिश्रिये' आश्रितवान्। स च 'सम्राट्' सर्वेषां भुवनानां भूत्वा 'आदित्सन्तं' दातु मनिच्छन्तं भोग्य' 'प्रजानन्' 'दापयति' 'रयिं' धनं नियच्छतु' ददातु ॥ ६ ॥

---

* 'अन्नाद्यस्य'—इति ज।

† का० श्रौ० सू० १४. ५. २३।

‡ वा० सं० ६. २३. १।

§ वा० सं० ६. २४. १।

अथ तृतीयः * ;— "वाजस्य न्विति । 'वाजस्य प्रसवः' 'नु' खलु 'इमा' इमानि 'विश्वा' सर्वाणि 'भुवनानि' सर्वतः 'आ बभूव' व्याप्नोत् । 'सनेमि'–इति पुराणवचनम् † । 'सः' चिरन्तनो 'राजा' 'परियाति' सर्वतः सञ्चरति । 'विद्वान्' अनुष्ठीयमानं कर्म प्रजानन् । 'अस्मे' अस्मदर्थं 'प्रजां' 'पुष्टिं' च 'वर्द्धयमानः' परियातीति सम्बन्धः ॥ ७ ॥

अथ चतुर्थः ‡ ;— "सोम मिति । वयं सोमादीन् देवान् 'अवसे' रक्षणाय, तर्पणाय वा 'अन्वारभामहे', ते सर्वे अनुगृह्णन्त्विति वाक्यशेषः ॥ ८ ॥

अथ पञ्चमः ‡ ;— "अर्यमण मिति । हे वाजस्य प्रसव । त्व मर्यमादीन् 'दानाय चोदय' अस्मभ्यं धनदानार्थं प्रेरय । वाक्सरस्वत्योरीषद्भेदो द्रष्टव्यः ॥ ९ ॥

अथ षष्ठः § ;— "अग्ने अच्छेति । हे 'अग्ने !' 'इह' अस्मिन् कर्मणि 'नः' अस्माकम् 'अच्छ' अभिमुख्येन 'वद' हितं कथय । 'नः' अस्मान् प्रति 'सुमनाः' करुणार्द्रचित्तो भव । हे 'सहस्रजित् !' सहस्रस्य धनस्य जेतः ! 'हि' हेतौ । यतः 'त्वं' स्वभावतो 'धनदा असि', अतः 'नः' अस्मभ्यं 'प्रयच्छ', धन मिति शेषः ॥ १० ॥

अथ सप्तमः ‖ ;— "प्र न इति । अर्यमादयो 'नः' अस्मभ्यं धनं प्रयच्छन्तु । पूषादिदेवतान्तरवाचकपदेऽपि क्रियापदस्यानु-

---

* वा० सं० ९. २५. १ ।

† निघ० ३. २८. ४ ।

‡ वा० सं० ९. २६. १ ।

§ वा० सं ९. २७. १ ।

‖ वा० सं० ९. २८. १ ।

¶ वा० सं० ९. २९. १ ।

षङ्गं द्योतयितुं पृथक् पृथक् प्रोपसर्गप्रयोगः, 'प्र' 'ददातु' प्रकर्षेण यच्छत्विति ॥ ११ ॥

हुतशेषस्यान्नस्य विनियोगं दर्शयति— "अथैन मिति। 'एनं' सुन्वन्तं यजमानं 'परिशिष्टेन' अन्नेन अभिषिञ्चेत् हुतशेषाभिषेकेण यजमाने अन्न मेव विहितवान् भवति * ॥ १२ ॥

अभिषेक मनूद्य मन्त्रं विधत्ते— "स इति। "देवस्य त्वेति †, व्याख्यातः। 'सरस्वत्यै' षष्ठ्यर्थे चतुर्थी। सरस्वत्याः 'वाचः', 'यन्तुः' अन्तर्यामिणश्च 'यन्त्रे' ‡ नियमे अभ्यनुज्ञायां 'नि दधामि' इति ॥ १३ ॥

अत्र तु 'सरस्वत्यै वाचः'-इत्यस्य § स्थाने 'सरस्वत्यै त्वा वाचः' इति युष्मच्छब्दं प्रक्षिप्य प्रयोक्तव्य मिति विधातुं पूर्वपक्षं सोपपत्तिक मुद्भावयति— "तदु हैक इति। केचिच्छाखिनः 'आहुः'। किमिति। 'सरस्वत्यै वाचः'-इत्यस्य स्थाने 'विश्वेषां त्वा देवानाम्'-इति प्रक्षिप्य 'यन्तुः'-इत्यादि पूर्ववद् वक्तव्य मिति स्वमतं दर्शयितु मुक्तम्। परमतं निराकरोति— "तदु तथेति। अत एव कात्यायनः— "सरस्वत्यै वाचः स्थाने विश्वेषां त्वा देवानां, सरस्वत्यै त्वेति वा"-इति ‖। 'बृहस्पतेः'-इत्यादिः पूर्वोक्त मन्त्रशेषः। मन्त्रान्ते असावित्यस्य स्थाने यजमानस्य नाम सम्बुद्ध्यन्तं गृह्णीयात् ॥ १४ ॥

---

* का० श्रौ० सू० १४. ५. २४।

† वा० सं० ६. ३०. १।

‡ 'यन्त्रिये'—इति बहुमूल पुस्तकपाठः।

§ वा० सं० ६. ३०. २।

‖ का० श्रौ० सू० १४. ५. २५, २६।

आवेदनं विधत्ते— "अथाह सम्राडिति। अत्रापि असावित्यस्य स्थाने प्रथमान्तं यजमाननाम ग्रहीतव्यम्। एतन्नाम मभिषिक्तः सम्राट् महावीर्यो जात इति वदेत्। आवेदनवाक्यादुक्तेरभिप्राय माह— "निवेदित मिति। एवं नामग्रहोक्त्या प्रथमं मनुष्येभ्यो 'निवेदित मेव सन्तम्' 'एनम्' तदेतेन द्वितीयेन सम्राडय मसावित्यनेन 'देवेभ्यः' 'निवेदयति' ज्ञापयति। किमिति। 'यः' यजमानः 'अभ्यषिचि' 'अयं महावीर्यः' सम्पन्न इति। वाक्यस्य पर्यवसित मर्थ माह— "अयं युष्माकेति। 'अयम्' अभिषिक्तो यजमानः युष्माकं मध्ये 'एकः' 'अभूत्', देवत्वं प्राप्तवानित्यर्थः, हे देवाः! तं गोपायतेति॥ अत्र सूत्रम्— "सम्राडय मसावित्याह नामग्राहं त्रिरुक्तैः"–इति *। तदेतत् त्रित्वं विधत्ते— "त्रिष्कृत्व इति। यज्ञस्य त्रिवृत्त्वं सवनत्रयात्मकत्वात्॥ १५॥

विधत्ते— "अथोज्जितीरिति। उज्जयलिङ्गयुक्तमन्त्रकरणिका † आहुतय उज्जितयः, ता जुहुयात्, यजमानस्य तन्मन्त्रेण वाचनं वा कार्य मित्यर्थः ‡। 'बन्धुः' हवनवाचनस्तावकार्थवादवाक्यशेषः, आम्नायमानः समान इत्यर्थः॥ १६॥

वाचन मनूद्य मन्त्रान् विधत्ते— "स वाचयतीति। संहितायाम् "अग्निरेकाक्षरेण"–इत्यनुवाके सप्तदश मन्त्राः पठिताः §; अत्र अग्निरेकाक्षरेणेति प्रजापतिः सप्तदशाक्षरे-

---

* का० श्रौ० सू० १४. ५. २७।

† 'उज्जयलिङ्गयुक्ता मन्त्रकरणिका'—इति ख, ङ।

‡ का० श्रौ० सू० १४. ५. २८।

§ वा० सं० ६. ३१—३४ कण्डिषु द्रष्टव्याः।

चेत्याद्यन्तयोर्ग्रहणेन ( सप्तदश मन्त्राः * ) सर्वेऽपि गृह्यन्त इत्यभिप्रायः। तेषां सङ्ग्रहणाय मन्त्रः ;— "ओ श्रावयेति चतुरक्षर मस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः स एष सप्तदशः प्रजापतिः —इति †, सप्तदशाक्षराणि विद्यन्ते। तत्राग्न्यादिसप्तदशदेवाः एकाक्षरप्रभृत्येकैकाक्षरवृद्धियुक्तैः प्राणमनुष्यादीन् जितवन्तः। तानग्न्यादिभिर्जितान् नरप्राणादीनह मिदानीम् 'उज्जेषम्' उज्जीयासम्। अश्विदेवतादिभिर्मन्त्राक्षरसङ्ख्यानुसारेण द्विपान्मनुष्य–त्रिलोकादेर्जयो विज्ञेयः। त्रिवृत्स्तोमगतानां मृचां नवसङ्ख्योपेतत्वात् ‡ नवाक्षरेण तज्जयो द्रष्टव्यः। त्रयोदशस्तोमादावपि तिसृणां स्तोत्रियाणा मृचा मावृत्तिविशेषेण तत्सङ्ख्या द्रष्टव्या §। इम मेव तात्पर्यार्थं प्रतिपादयति— "तद्यद्दैवताभिरिति। 'एताभिः' उज्जितिभिः। तेषां मन्त्राणां सप्तदशसङ्ख्या मनूद्य प्रजापत्यात्मना स्तौति—"सप्तदशेति ॥ १७ ॥

नैवारहविषः प्रधानस्विष्टकृतोर्मध्येऽनुष्ठेयं कर्मजात मुपदर्श्य चोदकप्राप्तं स्विष्टकृद्यागादिक मनुसन्धत्ते— "अथाहेत्यादि। "अग्नये स्विष्टकृतेऽनुब्रूहि"–'इति' अध्वर्युर्वदेत्। 'अनुब्रूहि' अनुवाक्यां पठेत्यर्थः। अत्र सम्बोध्यो होता ‖।

---

* ज-पुस्तकमात्रे एषोऽधिकः पाठः।

† तै० सं० १. ६. ११. २। पुरस्तादिह च १. ५. २. १६, १७।

‡ ता० ब्रा० ३. १. १—३ तास्च ६ ऋचः सा० वे० खण्डेषु सं० उत्त० आ० १. १. १—३ सूक्तेष्वाम्नाताः। द्रष्टव्यम्।

§ ता० ब्रा० त्रिवृत्स्तोमविधायकवचनेभ्योऽनन्तरम्।

‖ 'अनुब्रूहि' अनुवाक्यां पठेति सम्बोध्यो होता'—इति ज।

तद्यदन्तरेत्यस्याय मर्थः— नैवारहविः-स्विष्टकृद्यागाहुत्योर्मध्ये क्रियमाणेन अन्नसम्भरण-वाजप्रसवीय-होमादिना यज्ञरूपं प्रजापतिं जितवान् भवतीति ॥

अनुवचनानन्तर माश्रावणादिकं प्रकृतिवत् स्विष्टकृतः कार्य मित्यनुक्रामति — "आश्राव्येति । 'वषट्कृते' होत्रा याज्यान्ते वषट्कारे प्रयुक्ते सति 'जुहोति' सौविष्टकृतं हविः ॥ १८ ॥

अथ स्विष्टकृदनन्तरभावीनि कर्माण्याह— "अथेडा मिति । माहेन्द्रग्रहणानन्तरं * तदीयं पृष्ठं 'स्तोत्रम्' 'उपाकरोति' आरम्भयेदित्यर्थः । 'तम्' आसन्द्या मधिष्ठित मभिषिक्तं यजमानं 'स्तोत्राय' 'प्रसौवति' ज्ञापयेत्, आह्वयेदित्यर्थः । अत्र सूत्रम्— "अवरुह्य गच्छति स्तोत्राय प्रहितः"-इति † । 'सः' सुन्वन् 'उपावरोहति' आसन्द्याः सकाशात् 'सः' एवं स्तोत्रशस्त्रयोः 'अन्ते' समीपे स्थितो भवेत् ॥ १९ ॥

पक्ष केचिदुज्जितिवाचनानन्तरं माहेन्द्रग्रहणं स्तोत्रशस्त्रे च कृत्वा स्विष्टकृदादिकं यजमानस्य पश्चादवरोहण मिच्छन्ति, तद् दूषयितु मनुवदति— "तद्धैक इति । 'एतत्' माहेन्द्रग्रहणादि होमान्तं तत् कर्म कृत्वा 'अथ' अनन्तरम् 'एतत्' उक्तं स्विष्टकृदिडोपह्वानान्तं कर्म कुर्वन्ति । अतएव सूत्रकृता शाखान्तरीयं पक्ष मङ्गीकृत्योक्तम्— "उज्जितिभ्यो वोत्तरो माहेन्द्रः"-इति ‡ ॥

तद् दूषयति— "तदु तथेति । यद्यासन्द्या मासीन एव

---

* 'माहेन्द्रग्रहणानन्तरं'—इति ज ।

† का० श्रौ० सू० १४. ५. ३० ।

‡ का० श्रौ० सू० १४. ५. ३१ ।

यजमाने सत्येव आत्मप्रजारूपे स्रोतशब्दे कुर्यात्, तर्हि 'यजमानम्' आत्मप्रजाहीनं कुर्यात्; असान्निध्यकरणेनेत्यर्थः। 'जिह्मः' कुटिलो गच्छति। 'ह्वलति' यज्ञपथात् भ्रश्यति॥ २०॥

अत उक्त एव पक्षः श्रेयानिति दर्शयितुं पुनः पठति—"अथेडा मित्यादि। पूर्ववत् *॥ २१॥ १ [ २. २. ]॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे द्वितीयाध्यायस्य द्वितीयं ब्राह्मणम्॥

---

( अथ तृतीयं ब्राह्मणम्. )

पूर्णाहुतिं जुहोति। सर्व्वं वै पूर्णᳬं सर्व्वं परिगृह्य सूया ऽइति तस्यां वरं ददाति सर्व्वं वै वरः सर्व्वं परिगृह्य सूया ऽइति स यदि कामयेत जुहुयादेतां यद्यु कामयेतापि नाद्रियेत †॥ १॥

अथ श्वो भूते ‡। अनुमत्यै हविरष्टाकपालं पुरोडाशं निर्व्वपति स ये जघनेन शम्यां पिष्य

---

* इह का० श्रौ० स० १४. ५. ३२—३६ पञ्च सूत्राणि द्रष्टव्यानि।
† 'नाद्रियेत'—इति क। ‡ 'भूते'—इति ग, घ।

माणाना मवशीयन्ते पिष्टानि वा तण्डुला * वा तान्स्रुवे सार्द्धᳬ संवपत्यन्वाहार्यपचनादुल्मुक मादत्ते तेन दक्षिणा यन्ति स यत्र स्वकृतं वेरिणं विन्दति श्वभ्रप्रदरं वा ॥ २ ॥

तदग्निᳬ समाधाय जुहोति। एष ते निर्ऋते भागस्तं जुषस्व स्वाहेतीयं वै निर्ऋतिः सा यं पाप्मना गृह्णाति तं निर्ऋत्या गृह्णाति तद्यदेवास्या अत्र नैर्ऋतᳬ रूपं तदेवैतच्छमयति तथो हैनᳬ मुयमानं निर्ऋतिर्न गृह्णात्यथ यत् स्वकृते वेरिणे जुहोति श्वभ्रप्रदरे वैतदु ह्यस्यै निर्ऋतिगृहीतम् ॥ ३ ॥

अथाप्रतीक्षं पुनरायन्ति। अथानुमत्या ऽष्टाकपालेन पुरोडाशेन प्रचरतीयं वा अनुमतिः स यस्तत् कर्म शक्नोति कर्तुं यच्चिकीर्षतीयᳬ हास्मै तदनु मन्यते तदिमा मेवैतत् प्रीणात्यनयानुमत्यानुमतः सूया ऽइति † ॥ ४ ॥

अथ यदष्टाकपालो भवति। अष्टाक्षरा वै

---

* 'तण्डुलानि'—इति ख।

† 'ऽइति'—इति क-पुस्तके, 'इति'—इति ख-पुस्तके।

गायत्री गायत्री वा ऽइयं पृथिव्यथ यत्समानस्य हविष उभयत्र जुहोत्येषा ह्येवैतदुभयं तस्य व्वासो दक्षिणा यद्वै सवासा अरण्यं नोदाशऽ-सते निधाय वै तद्वासो ऽतिमुच्यते तथो हैनऽ सूयमान मासङ्गो न व्विन्दति * ॥ ५ ॥

अथ श्वो भूते। आग्नावैष्णव मेकादश-कपालं पुरोडाशं निर्व्वपति तेन यथेष्ट्यैवं यजते तद्यदेवादः प्रजात माग्नावैष्णवं दीक्षणीयऽ हवि-स्तदेवैतदग्निर्व्वै सर्वा देवता अग्नौ हि सर्वाभ्यो देवताभ्यो जुह्वत्यग्निर्व्वै यज्ञस्यावरार्ध्यो व्विष्णुः परार्ध्यस्तत्सर्व्वाश्चैवैतद्देवताः परिगृह्य सर्व्वं च यज्ञं परिगृह्य सूया ऽइति तस्मादाग्नावैष्णव एका-दशकपालः पुरोडाशो भवति तस्य हिरण्यं दक्षिणाग्नेयो वा ऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं यो वै व्विष्णुः स यज्ञो ऽग्निरु वै यज्ञ एव तद् तदाग्नेय मेव तस्माद्धिरण्यं दक्षिणा † ॥ ६ ॥

---

* 'व्विन्दति'—इति क। † 'दक्षिणा'—इति क, ख।

अथ श्वो भूते *। अग्नीषोमीय मेकादश-कपालं पुरोडाशं निर्व्वपति तेन यथेष्ट्यैवं यजत ऽएतेन वा ऽइन्द्रो व्वृत्र महन्नेतेनो ऽएव व्व्यज-यत याऽस्येयं व्विजितिस्तां तथो ऽएवैष एतेन पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो ऽएव व्विजयते व्विजिते ऽभये ऽनाष्ट्रे भूया इति तस्मादग्नीषोमीय एकादशकपालः पुरोडाशो भवति तस्योत्सृष्टो गौर्दक्षिणोत्सृजं वा ऽअमुं चन्द्रमसं घ्नन्ति पौर्णमासेनाह घ्नन्त्यामावास्ये-नोत्सृजन्ति तस्मादुत्सृष्टो गौर्दक्षिणा † ॥ ७ ॥

अथ श्वो भूते। ऐन्द्राग्नं द्वादशकपालं पुरोडाशं निर्व्वपति तेन यथेष्ट्यैवं यजते यत्र वा ऽइन्द्रो व्वृत्र महंस्तदस्य भीतस्येन्द्रियं ‡ व्वीर्य्य मपचक्राम स एतेन हविषेन्द्रियं व्वीर्यं पुन-रात्मन्नधत्त तथो ऽएवैष एतेन हविषेन्द्रियं वीर्य मात्मन्धत्ते तेजो वा ऽअग्निरिन्द्रियं व्वीर्यं मिन्द्र उभे व्वीर्ये परिगृह्य भूया ऽइति तस्मादैन्द्राग्नो

---

* 'भूत'—इति ग, घ। † 'दक्षिणा'—इति क, ख।

‡ 'स्तदभीतस्येन्द्रियं'—इति ख।

द्वादशकपालः पुरोडाशो भवति तस्यऽर्षभोऽनड्वान् दक्षिणा स हि वह्निनाग्नेय आण्डाभ्यामैन्द्रस्तस्मादृषभोऽनड्वान् दक्षिणा * ॥ ८ ॥

अथाग्रयणेष्ट्या यजते। सर्वान्वा ऽएष यज्ञक्रतूनवरुन्धे सर्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्यदाग्रयणेष्टिरनया मे ऽपीष्टमसदनयापि सूया ऽइति तस्मादाग्रयणेष्ट्या यजत ऽओषधीर्वा ऽएष सूयमानो ऽभिसूयते तदोषधीरेवैतदनमीवा अकिल्विषाः कुरुते ऽनमीवा अकिल्विषा ओषधीरभि सूया ऽइति तस्य गौर्दक्षिणा † ॥ ९ ॥

अथ चातुर्मास्यैर्यजते। सर्व्वान्वा ऽएष यज्ञक्रतूनवरुन्धे सर्व्वा इष्टीरपि दर्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएष यज्ञक्रतुर्यच्चातुर्मास्यान्येभिर्मे ऽपीष्टमसदेभिरपि सूया ऽइति तस्माच्चातुर्मास्यैर्यजते ॥ १० ॥ २ ॥

॥ इति द्वितीयप्रपाठके द्वितीयं ब्राह्मणम् [२.३.] ॥

---

* 'दक्षिणा'—इति क, ख। † 'गौर्दक्षिणा'—इति क, ख।

ब्राह्मणक्षत्रियोभयकर्त्तृकसंस्थारूपो * वाजपेय उक्तः, अथैककर्त्तृको विकृतिभूतो राजसूयो विधास्यते। तत्र प्रकृतवाजपेयस्य राजन्यस्यैव राजसूयेऽधिकारः, न तु तेनेष्टवतः; राज्यफलादपि साम्राज्यफलस्यातिशयितत्वेन उत्तमफलसाधनयागानन्तर मवरफलहेतुक्रतुकरणस्यायुक्तत्वात्। अत एव कात्यायनः— "राज्ञो राजसूयोऽनिष्टिनो वाजपेयेन"—इति †।

इष्टि-पशु-सोम-दर्विहोमैः शतप्रधानो ‡ राजसूयः। तत्र "श्वोभूतेऽनुमत्यै पुरोडाश मष्टाकपालम्"—इत्यादिना विहिता इष्टयः §, "अथ श्येनीं विचित्रगर्भा मदित्या आलभत"—इत्यादिना विहिताः पशवः ‖, पवित्राभिषेचनीय-दशपेय-केशवपनीय-व्युष्टि-द्विरात्र-क्षत्रधृति-सञ्ज्ञकाः सप्त सोमयागाः, पञ्चवातीयादयो दर्विहोमाः ¶। तत्र पवित्रनामके प्रथमसोमयागे प्रकृतिसमानत्वेन वक्तव्याभावात् तं परित्यज्य तदवसाने कर्त्तव्यं पूर्णाहुतिप्रभृति वैशेषिक मुत्तरतन्त्र मभिधीयते **।

पूर्णाहुतेः कालं कात्यायनः सूत्रयामास— "पवित्रश्चतुर्दीक्षः,

---

* '०कर्त्तृकसङ्घारूपो वा (?)'—इति ज।

† का० श्रौ० सू० १५. १. १, २।

‡ सर्वेष्वेवादर्शपुस्तकेष्वेवम्पाठः, स्यात्तु 'राजप्रधानो'—इति।

§ पुरस्तादिहैव (२. ३. २—१२१ पृ०) द्रष्टव्यम्।

‖ परस्तादिहैवाध्याये (५. २. ८) द्रष्टव्यम्।

¶ इत उत्तरस्यां कण्डिकायां (२. ४. ४) द्रष्टव्यम्।

** "इष्टिसोमपशवो भिन्नतन्त्राः कालभेदात्"—इति का० श्रौ० सू० १५. १. ३। तत्र "आनुमत्यादय इष्टयः, पवित्रादयः सोमाः, मरुद्वादयश्च पशवः"—इति कर्कः। 'मरुद्वा मशिला, गलस्तनयुक्तेत्यर्थः' —इति तै० सं० १. ८. १६. ६=तै० ब्रा० १. ८. १ सा० भा०।

सहस्रदक्षिणः, माध्वीपक्ष्यजनीये दीक्षा, तदन्ते पूर्णाहुति-र्दृष्टेष्विच्छतः"-इति * ॥

तद् विधत्ते— "पूर्णेति। आज्यपूर्णया जुह्वा हूयत इति पूर्णाहुतिः। सा अनाम्नातमन्त्रत्वात् प्राजापत्याः; "यत् तूष्णीं तत् प्राजापत्यम्"-इति श्रुतेः †। तां जुहुयात्। पूर्णाहुतिकरणस्य कामनाधीनत्वं विवृणोति— "सर्व मिति। पूर्ण-पदेन सर्व मुच्यते। 'सर्वं' जगत् 'परिगृह्य' स्वाधीनं कृत्वा, पश्चाद्राजसूयानुष्ठानेन 'सूये' अभिषिक्तो भूयासम् 'इति' अभि-प्रायेण पूर्णाहुतिं कुर्यादित्यर्थः ॥

तस्या दक्षिणां विधत्ते— "तस्या मिति। 'तस्यां' हुताया मित्यर्थः। पूर्णाहुतेरितराङ्गवद् अवश्यकर्त्तव्यत्वे प्राप्ते कामनानुसारेणैव करणीयत्व माह— "स यदि कामयेतेति। पूर्णाहुतिकरणेच्छायां सत्यां तदनुष्ठानविपर्यये तद्विपर्यय इत्यर्थः ॥ १ ॥

आरम्भणीयस्थानीयात् ‡ पवित्राख्यादग्निष्टोमादर्ध्वः § पर-स्मिन्नहनि कर्त्तव्यं विधत्ते— "अथ श्वोभूत इति। सूत्रकृता पवित्रादनन्तर मुक्तम्— "श्वः प्रभृत्यन्वहं पञ्चोत्तराण्यष्टा-

---

* का० श्रौ० सू० १५. १. ४—७।

† ऐ० ब्रा० २. ५. ७; ३. ३. ६ आद्यन्त द्रष्टव्यम्। शत० ब्रा० 'अनिरुक्तं वा उपांशु' १. ३. ५. १०; ६. २. २. २०; 'अनिरुक्तं हि मनो अनिरुक्तं ह्येतद् यत् तूष्णीम्' ३४. ४. ५।

‡ आरम्भः प्रयोजन मस्या इति विग्रहे "अनुप्रवचनादिभ्यश्छः" —इति (पा० ५. १. १११.) छः। प्रायणीयाया एव नामान्तर मारम्भणीयेति। प्रायणीया-स्वरूपन्तु ऐ० ब्रा० १. २. १ द्रष्टव्यम्।

§ राजसूये प्रथमं पवित्रमग्न्यः सोमयागो भवतीतीह सर्वत्र सार्त्तव्यम्।

कपालोऽनुमत्यै"-इति *। यागानुष्ठानस्याधारत्वेनानुज्ञाकरणात् अनुमतिः पृथिवी; "इयं वा अनुमतिः"-इति ह्याम्नास्यते †। तस्यै अष्टसु कपालेषु संस्कृतं पुरोडाशात्मकं हविर्निर्वपेत् ॥

अत्रोत्तरतन्त्रं सूत्रे सङ्गृहीतम्—"शम्यायाः पश्चात् हविष्य मश्नं स्रुवे कृत्वा दक्षिणाग्न्युल्मुक मादाय दक्षिणा गत्वा स्वयं प्रदीर्णे इरिणे वाग्नौ जुहोत्येष ते निर्ऋत इत्यनपेक्ष मेत्यनु-मतस्य संवपनादि करोति वासो देयम्"-इति ‡। तत् सर्वं क्रमेण विधत्ते—"स ये जघनेनेत्यादिना, "श्वोभूत आग्ना-वैष्णवम्"-इत्यतः प्राक्तनेन। 'शम्यां जघनेन' "एनपा द्वितीया" §। पश्चिमायां दिशि दृषद मभ्याधातु मधः-स्थापितायाः शम्यायाः पश्चाद् 'ये' तण्डुलपिष्टलेशा 'अव-शीयन्ते' अधः पतन्ति, 'तान्' स्रुवेण सोऽध्वर्युः 'सार्द्धं' सह संवपेत् ॥

उल्मुकेन सार्द्धं दक्षिणदिग्गमनं विधत्ते— "अन्वाहार्येति। तस्योल्मुकस्य स्थापनाय देशविशेषं विधत्ते— "स यत्रेति। 'इरिणम्' ऊषरक्षेत्रम्, तच्च 'स्वकृतं' स्वतः सिद्धम्, न तु यतः कुतश्चिदानीयोषाः प्रक्षिप्ताः; तस्मिन् 'श्वभ्रप्रदरे' गर्त्त-कारणे ‖ विदीर्णप्रदेशे 'वा' [॥ २ ॥] उल्मुकाग्नि माधाय, स्रुवपूरितेन द्रव्येण जुहुयात् ॥

---

* का० श्रौ० सू० १५. १. ८, ९।

† अनुपद मेवात्रैव चतुर्थकण्डिकायां (१२२ पृ० १३ पं०) द्रष्टव्यम्। तै० ब्रा० १. ६. १. १ अपि द्रष्टव्यम्।

‡ का० श्रौ० सू० १५. १. १०, ११, १२।

§ पा० सू० २. ३. ३१। ‖ 'गर्त्तकारणे'—इति ज।

तत्र मन्त्रं विधत्ते— "एष त इति *। 'निर्ऋते' पापदेवते ! 'एषः' तण्डुलपिष्टशेषः 'ते' तव 'भागः', 'तं' भागं 'जुषस्व' सेवस्व। 'स्वाहा'-शब्दो हवनलिङ्गम् 'इति'।

भूमिर्द्विविधा ; शालिगोधूमादिसर्वसस्याढ्या, तदयोग्या च। तत्र आद्यभूमिरूपा अनुमतिः, द्वितीयभूमिरूपा निर्ऋतिः †; सैवानिष्टकारिणी पापदेवता,— तथा भूमिः पापिष्ठं जनं पीडयितुं गृह्णाति। 'तत्' तथा सति 'अस्याः' भूमेः 'अत्र' अस्मिन् राजसूयानुष्ठानदेशे 'नैर्ऋतं रूपम्'; एतेन होमेन शमितवान् भवतीति। "तथो हैनम्"-इत्यादिना नैर्ऋतहोमस्य प्रयोजनकथनम्। "एतदु ह्यस्या इति। 'एतत्' एव इरिणप्रदरात्मकं स्थानं अस्याः भूमेः सम्बन्धि 'निर्ऋतिगृहीतम्' निर्ऋत्या पापदेवतया अप्रयत्नेन स्वीकृतम्; अतः तत्र नैर्ऋतहोमानुष्ठानं युक्त मिति ॥ ३ ॥

पुनरागमनं विधत्ते— "अथाप्रतीक्ष मिति। 'अप्रतीक्षं' यत्र निर्ऋत्ये होमः कृतः, तं प्रदेशम् अनभीक्षमाणा एव पुनर्गच्छेयुः। अथानुमतस्य हविषः प्रचारं विधत्ते— "अथानुमत्या इति। "प्रचरन्तीति। आनुमतहविषः संवपनादिकं कुर्युरित्यर्थः। तथैवाम्नात मुदाहृतम्— "इयं वा अनुमति रिति ‡। भूमिरूपा अनुमतिः; तत्र यत् कर्म करोति, यत् कर्त्तुं मिच्छति, तत् सर्वं भूम्यात्मिका अनुमतिर्देवता अनुजानाति, तथा 'अनुमत्या' अनुज्ञातः 'सूये' राजसूयाख्यं कर्म

---

* वा० सं० ६. ३५. १।

† तै० सं० १. ८. १ = तै० ब्रा० १. ६. १ मा० भा० द्रष्टव्यम्।

‡ पुरस्तादिहैव द्वितीयकण्डोभाष्ये (१२८ पृ० २ पं०) द्रष्टव्यम्।

करवाणि, इत्यनेनाभिप्रायेणानुमतहविर्निर्वापः। 'तत्' तेन हविषा भूमि मेव प्रीणितवान् भवति ॥ ४ ॥

हविःश्रपणसाधनकपालगता मष्टसङ्ख्यां गायत्रीद्वारा पृथिवीयोग्यत्वेन प्रशंसति— "अथ यदष्टेति *। "अथ यत् समानस्येति। अस्यार्थः ;— 'समानस्य' एक मेव हविः 'उभयत्र' अनुमत्यै निर्ऋत्यै च हूयते ; उभयोरपि पृथिव्यात्मकत्वादिति। तस्य दक्षिणां विधत्ते— "तस्य वास इति †। तत् प्रशंसति— "यद्वै सवासा इति। यथा लोके पुरुषो वस्त्रसहितः सन्नरण्यगमनं चोरादिभयात् न कामयते ; तद्द् वस्त्रं भयरहिते स्थाने 'निधाय' चेद् गच्छति, तदा 'अतिमुच्यते' भयाद् विमुक्तो भवति ; तद्वद् वासोदानेन 'सूयमानम्' 'एनं' यजमानम् 'आसङ्गः' भयं 'न' प्राप्नोति ॥ ५ ॥

तदनन्तरदिवसेऽनुष्ठेयं कर्म विधत्ते—"अथ श्वोभूत इति ‡। अग्निर्विष्णुश्चोभौ देवता यस्य हविषः, तं निर्वपेत्। "तेन यथेष्टीति। प्रकृतीष्टिवद्देवेष्टिः § कार्या। तेन अनुमतीष्टिवत् तन्मध्ये वैकृतं तन्त्रं किञ्चिदपि न विद्यत इति भावः। "तद् यद्देवेति। 'अदः' अमुष्मिन् विप्रकृष्टे सोमप्रकरणे 'प्रज्ञातं'

---

* 'अष्टाकपालोऽनुमत्यै'—इति का० श्रौ० सू० १५. १. ६। पुरोडाश इति शेषः। तै० सं० १. ८. १. १, २।

† का० श्रौ० सू० १५. १. १२।

‡ फाल्गुनशुक्लदशमी मारभ्य प्रतिदिन मेकैकं पञ्च हवींषि भवन्ति। तत्र प्रथमं दशम्या मानुमतम्, तत उत्तर मिद माग्नावैष्णवम् एकादश्या मिति।

§ 'प्राकृतीष्टि०'—इति क, च, छ।

'दीक्षणीयं' दीक्षायां निरुप्तम् 'आग्नावैष्णवं हविः', 'तदेव' इदानीं निरूप्यमाणं हविरिति तत्तादात्म्येन प्रशंसा। हविषो देवतासम्बन्धं प्रशंसति— "अग्निर्वा इति। अग्नेः सर्वदेवतात्मकत्वं प्रतिपादयति— "अग्नौ हीति। अग्नौ हि सर्वा देवता हूयन्ते, अतः सर्वदेवतार्थहविर्होमाधिकरणत्वादग्निः सर्वदेवतात्मकः। सः 'अग्निः' 'यज्ञस्य' 'अवरार्द्धः' आदौ स्थितः 'विष्णुः परार्द्धः' यज्ञस्य चरमभागेऽवस्थितः। तथाहि प्रकृतिभूतस्याग्निष्टोमस्य आदौ दीक्षणीयायाम् आग्नावैष्णवे हविषि अग्नेः प्रथमदेवतात्वेन सम्बन्धः, अवसाने चोदवसानीयेष्टिस्थाने विष्णुदेवताका पूर्णाहुतिर्हूयते। यद्वा, आज्यशस्त्रे प्रथमे "भूरग्निर्ज्योतिः"—इति * अग्नेः प्राथम्यम्, चरमशस्त्रे चाग्निमारुते 'विष्णोर्नु कम्"—इति † श्रवणात् विष्णोश्चरमत्वम्। एतदेवाभिप्रेत्यैतरेयकम्— "अग्निर्वै देवाना मवमो विष्णुः परमस्तदन्तरेण सर्वा अन्या देवताः"—इति ‡। "तत् सर्वा इत्यादि। तस्मात् तन्मध्यवर्त्तिनीः वक्ष्यमाणाः 'सर्वाश्च' सोमदेवता अग्निसाध्यं विश्वात्मकं सर्वं यज्ञम् 'एतेन' आग्नावैष्णवेन हविषा 'परिगृह्य' परिवेष्ट्य स्वाधीनं कृत्वा 'सूये' राजसूयाख्यं कर्म करवाणि 'इति' हेतोर्यस्मादेवं तस्मादित्यन्वयः॥

दक्षिणां विधत्ते— "तस्य हिरण्य मिति §। "आग्नेयो

---

* ऐ० ब्रा० २. ५. ५, २. ४. ७ खण्डौ द्रष्टव्यौ।

† ऋ० सं० १०. १५४. १। "वैष्णवीं शंसति"—इति च तद्विधायकं ब्राह्मणम् ३. ३. १४। ‡ ऐ० ब्रा० १. १. १।

§ "हिरण्य मागाविष्णवे"—इति का० श्रौ० सू० १५. १. १३। तै० सं० १. ८. १. ४। 'वामनो वही दक्षिणा'।

वा इति। अस्याय मर्थः ;— यज्ञोऽग्निदेवत्यः खलु, न मन्त्रैर्विना यज्ञनिष्पत्तेरभावात्। 'हिरण्यम् अग्नेः रेतः'; विष्णोर्यज्ञात्मकत्वं श्रुतिप्रसिद्धम् *; विष्ण्वात्मकस्य यज्ञस्य चाग्निसाध्यत्वात् तद्रूपत्वम्; तस्मात् परम्परया 'तद्' तद् विष्णुदेवत्यमपि कर्म, 'तदाग्नेयम्' अग्निदेवत्य मेव जातम्। तस्मादाग्नावैष्णवस्य हविषः 'आग्नेयं हिरण्यं' दक्षिणात्वेन भवितु युक्त मिति ॥ ६ ॥

तस्मात् परेद्युरनुष्ठेयं कर्म विधत्ते— "अथ श्वोभूत इति †। 'तेन' आग्नीषोमीयेण हविषा यजेत। "यथेष्टीति। सर्वेष्टीनां पौर्णमासेष्टिः प्रकृतिभूता; तद्वदत्रापि तदीय मन्त्रजातं कुर्यादित्यर्थः। "एतेन वा इत्यादि। 'एतेन' हविषा हुतं कृत्वा विजितवतः 'अस्य' इन्द्रस्य 'इयं' परिदृश्यमाना 'या' 'विजितिः' अस्ति, 'ताम्' 'इन्द्रो व्यजयत' इति सम्बन्धः। 'तथा' 'एषः' अपि अनुष्ठाता 'एतेन' हविषा सर्वान् शत्रून् जयति ॥

तस्य दक्षिणां विधत्ते— "उत्सृष्टो गौरिति ‡। कियन्तं कालं शकटवहनादौ विनियोज्य पश्चाद् य उत्सृज्यते, स 'उत्सृष्टः'। तां दक्षिणां प्रशंसति — "उत्सर्जं मिति। 'अमुम्' अन्तरिक्षे दृश्यमानं 'चन्द्रमसम्' उत्सृज्योत्सृज्य 'घ्नन्ति'। तदेव

---

* अत्रैकवेव तृतीये काण्डे असकृदाम्नातं द्रष्टव्यम् ( ३. ५. ३. २; ८; ५. २. १; १६ )। तै० ब्रा० १. ३. ८. ५ 'यज्ञो वै विष्णुः'।

† द्वादश्या मिति यावत्।

‡ "पुनरुत्सृष्टो गौरग्नीषोमीये"—इति का० श्रौ० सू० १५. १. १४। तै० सं० १. ८. १. ५ = तै० ब्रा० १. ६. १ हिरण्यं दक्षिणा।

विवृणोति— "पौर्णमासेनेति। पौर्णमासी मारभ्य खलु देवाः 'घ्नन्ति', प्रतिदिवस मेकैककलापचार * एव तस्य हनन मित्यर्थः। अमावास्याकाल मारभ्य 'उत्सृजन्ति' प्रतिदिवसं तस्यैकैककला-वृद्धेः। 'तस्मात्' अस्य हविषः सोमदेवतासम्बन्धादेव तादृशी गौर्दक्षिणात्वेन युक्त इत्यर्थः ॥ ७ ॥

तदनन्तरदिवसकर्त्तव्य मिष्ट्यन्तरं विधत्ते— "अथ श्वोभूत इति †। पुरा वृत्रहननाद् भीत इन्द्रोऽपक्रान्तं स्वकीयम् 'एतेन हविषा' 'पुनः' आत्मन्यधारयत्; एवम् 'एषः' अपि अनुष्ठाता 'एतेन' हविषा। यदिदं तेजः, स एवाग्निः; यदिदम् 'इन्द्रियम्' इन्द्रस्यासाधारणं सत्त्वं, स एवेन्द्रः; धर्म-धर्मिणोरभेदोपचारात् तादात्म्यम्। ते 'उभे' तेजोबललक्षणे 'वीर्ये' 'परिगृह्य' 'सूयै' 'इति' अभिप्रायेण ऐन्द्राग्नहविः प्रचारः कर्त्तव्यः ॥

दक्षिणां विधत्ते— "तस्य ऋषभ इति ‡। ऐन्द्राग्नस्य हविषो दक्षिणात्वेन विहितस्य साण्डस्यानडुहो देवताद्वययोग्यतां दर्शयति— "स हि वर्हेनेति। वर्हं नाम युगवहनदेशः ककुत्प्रदेशः। तस्य दग्धप्रदेशवत् कृष्णवर्णत्वादाग्नेयत्वम्' आण्डा-भ्याम् ऐन्द्रः' सेचनसमर्थत्वादिति § ॥ ८ ॥

तदनन्तरकर्त्तव्य मिष्ट्यन्तरं विधत्ते— "अथाग्रयणेष्ट्येति। सा चाग्रयणेष्टिः द्वितीयकाण्डेऽभिहिता ‖, तस्या अत्र राज-

---

* '०कलापकार'—इति ज।　　† त्रयोदशमा मिति यावत्

‡ का० श्रौ० सू० १५. १. १५। चतुर्दशमा मिति यावत्।

§ तै० सं० १. ८. १. ८ द्रष्टापि दक्षिणाम्नानम्।

‖ २ का० ३ प्र० ५ ब्रा० ( २ भा० २१४–२१७ पृ० ) द्रष्टव्यम्।

सूयाङ्गत्वेन प्रयोगः। "सर्वान् वा इत्यादि। इष्टि-पशु-सोम-दर्विहोमात्मकत्वाद्राजसूयस्य, तदनुष्ठानेन यज्ञक्रत्विष्ट्यादयः सर्वेऽनुष्ठिता भवन्ति। आग्रयणेष्टिरपि देवहृष्टत्वेन प्रशस्तत्वादत्रावरोद्धव्या। अतः 'अनया' आग्रयणेष्ट्या 'अपि' 'मे' मम 'इष्टम् असत्' यागः कृतो भवतु; 'अनयापि' इष्ट्या 'सूये' अभिषिक्ता भूयासम् 'इति' अनेनाभिप्रायेण आग्रयणेष्टिः कार्येत्यर्थः॥

तस्या इष्टेः प्रयोजन माह— "ओषधीर्वा इति। 'एषः सूयमानः' यजमानः 'ओषधीः' परिपक्वा व्रीहियवाद्याः 'अभि' लक्ष्य 'सूयते' अभिषिच्यते। 'तत्' तथा सति 'अनया' आग्रयणेष्ट्या ता एव 'ओषधीः' 'अनमीवाः' रोगरहिताः आरोग्यकारिणीः, 'अकिल्बिषा' पापरहिताश्च 'कुरुते'। आग्रयणेष्टेर्नवान्नभोजनाङ्गत्वात् तदकरणे भोक्तॄणां रोगः पापं च स्यात्; इह तु तदनुष्ठाने तादृग्दोषरहिताः ओषधीरभिलक्ष्य राजसूयाख्यं कर्म करवाणीति यष्टुराशयः॥

दक्षिणां विधत्ते "तस्य गौरिति *। 'तस्य' आग्रयणस्य† ॥ ८ ॥

अथ चातुर्मास्यानि विधत्ते— "अथ चातुर्मास्यैरिति। तेषां कालः सूत्रितः उक्तहविःपञ्चकादनन्तरम्— "चातुर्मास्यप्रयोगः फाल्गुन्याम्"–इति ‡। "सर्वान्वा इत्यादि। सर्वक्रत्विष्टिदर्विहोमावरोधरूपराजसूयमध्ये चातुर्मास्याख्यो यज्ञक्रतु-

---

* का० श्रौ० सू० १५. १. १६। 'गवा यवाग्रयणं व्रीह्याग्रयणं विशेष्यते, न सौम्याग्रयणम्'—इति तत्र कर्कः।

† 'आग्रयणं भवति हुताद्याय'—इत्यादि तै० ब्रा० १. ६. १।

‡ का० श्रौ० सू० १५. १. १७।

रुण्यवरीत्यव्य इत्यनेनाभिप्रायेण तदनुष्ठानम्। अन्यत् पूर्ववत् योज्यम् * ॥ १० ॥ २ [ २. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे द्वितीयाध्याये तृतीयं ब्राह्मणम् ॥

---

( अथ चतुर्थं ब्राह्मणम् . )

वैश्वदेवेन यजते। वैश्वदेवेन वै प्रजापतिर्भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा सूया ऽइति तथो ऽएवैष एतद्वैश्वदेवेनैव भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा सूया ऽइति † ॥ १ ॥

अथ वरुणप्रघासैर्यजते। वरुणप्रघासैर्वै प्रजापतिः प्रजा वरुणपाशात् प्रामुञ्चत् ता अस्यानमीवा अकिल्विषाः प्रजाः प्राजायन्तानमीवा

---

* अत्र प्रयुक्तश्चातुर्मास्यशब्दो धर्मातिदेशार्थः; नैतानि चातुर्मास्यानि; अपि त्वेते चातुर्मास्यवदनुष्ठेया राजसूययागविशेषाः। अतो मिलाना मपि चातुर्मास्यानां क्रियाकुलिना भवत्येव; नैतेः कृतत्व मचातुर्मास्यत्वादिति।

† 'इति'—इति क, ख। "इति" – इति ग-पुस्तके।

अकिल्बिषाः प्रजा अभि सूया ऽइति तथो एवैष एतद्वरुणप्रघासैरेव प्रजा व्वरुणपाशात् प्रमुञ्चति ता अस्यानमीवा अकिल्बिषाः प्रजाः प्रजायन्ते ऽनमीवा अकिल्बिषाः प्रजा अभि सूया ऽइति * ॥ २ ॥

अथ साकमेधैर्यजते । साकमेधैर्वै देवा व्वृत्रमघ्नंस्तैर्वेव व्यजयन्त येयमेषां व्विजितिस्तां तथो ऽएवैष एतैः पाप्मानं द्विषन्तं भ्रातृव्यꣳ हन्ति तथो ऽएव व्विजयते व्विजितेऽभये ऽनाष्ट्रे सूया ऽइति † ॥ ३ ॥

अथ शुनासीर्येण यजते । उभौ रसौ परिगृह्य सूया ऽइत्यथ ‡ पञ्चवातीयꣳ स पञ्चधा हवनीयं व्युह्य स्रुवेणोपघातं जुहोति ॥ ४ ॥

स पूर्वार्द्धे जुहोति । अग्निनेत्रेभ्यो देवेभ्यः पुरस्सद्भ्यः स्वाहेत्यथ दक्षिणार्द्धे जुहोति यमनेत्रेभ्यो देवेभ्यो दक्षिणासद्भ्यः स्वाहेत्यथ पश्चार्द्धे

---

* 'इति'—इति क, 'इति'—इति ख, 'इति'—इति ग ।

† 'इति'—इति क-पुस्तके, 'इति'—इति ख-पुस्तके ।

‡ 'ऽइत्यथ'—इति क, ख ।

जुहोति विश्वदेवनेत्रेभ्यो देवेभ्यः पश्चात्सद्भ्यः स्वाहेत्यथोत्तरार्ध्ये जुहोति मित्रावरुणनेत्रेभ्यो वा मरुन्नेत्रेभ्यो वा देवेभ्य उत्तरासद्भ्यः स्वाहेत्यथ मध्ये जुहोति सोमनेत्रेभ्यो देवेभ्य उपरिसद्भ्यो दुवस्वद्भ्यः स्वाहेति * ॥ ५ ॥

अथ साꣳ समुह्य जुहोति। ये देवा अग्निनेत्राः पुरःसदस्तेभ्यः स्वाहा ये देवा यमनेत्रा दक्षिणासदस्तेभ्यः स्वाहा ये देवा विश्वदेवनेत्राः पश्चात्सदस्तेभ्यः स्वाहा ये देवा मित्रावरुणनेत्रा वा मरुन्नेत्रा वोत्तरासदस्तेभ्यः स्वाहा ये देवाः सोमनेत्रा उपरिसदो दुवस्वन्तस्तेभ्यः स्वाहेति तद्यदेवं जुहोति ॥ ६ ॥

यत्र वै देवाः। साकमेधैर्व्यजयन्त येयमेषां विजितिस्तां तद्वोचुरुत्पिबन्तो वाऽइमानि दिक्षु नाष्ट्रा रक्षाꣳसि हन्तेभ्यो वज्रं प्रहरामेति वज्रो वा ऽआज्यं त ऽएतेन वज्रेणाज्येन दिक्षु नाष्ट्रा रक्षाꣳस्यवाघ्नꣳस्ते व्यजयन्त येयं

* 'स्वाहेति'—इति क, 'स्वाहेति'—इति ख, 'स्वाहेति'—इति ग।

मेषां व्विजितिस्तां तथोऽ एवैष एतेन व्वज्रे-णाज्येन दिक्षु नाष्ट्रा रक्षाᳪस्यवहन्ति तथो ऽएव व्विजयते व्विजिते ऽभये ऽनाष्ट्रे सूया ऽइति * ॥ ७ ॥

अथ यदेता अपराः पञ्चाहुतीर्ज्जुहोति। स्रावन्ति वा ऽएतदग्नेर्व्विहरन्ति यत् पञ्चधा हवनीयं व्यूहन्ति तदेवास्यैतेन सन्दधाति तस्मादेता अपराः पञ्चाहुतीर्ज्जुहोति ॥ ८ ॥

तस्य प्रष्टिवाहनो ऽश्वरथो दक्षिणा। त्रयो ऽश्वा द्वौ सव्यष्टृसारथी ते पञ्च प्राणा यो वै प्राणः स व्वातस्तद्यदेतस्य कर्मण एषा दक्षिणा तस्मात् पञ्चवातीयं नाम ॥ ९ ॥

स हैतेनापि भिषज्येत्। अयं वै प्राणो योऽयं पवते यो वै प्राणः स आयुः सोऽय मेक इवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टो दशधा व्विहितो दश वा ऽएता आहुतीर्ज्जुहोति तदस्मिन् दश प्राणान् कृत्स्न मेव सर्व

* 'इति'—इति क; 'इति'—इति ग, घ।

मायुर्दधाति स यदिहापि गतासुरिव भवत्या हैवैनेन हरति * ॥ १० ॥

अथैन्द्रतुरीयम् । आग्नेयो ऽष्टाकपालः पुरोडाशो भवति वारुणो यवमयश्चरू रौद्रो गावेधुकश्चरुरनडुह्यै वहलाया ऽऐन्द्रं दधि तेनेन्द्रतुरीयेण यजत ऽइन्द्राग्नी ऽउ हैवैतत् समूदाते ऽउत्पिबन्तो वा ऽइमानि दिक्षु नाष्ट्रा † रक्षाᳫसि हन्तैभ्यो वज्रं प्रहरावेति ॥ ११ ॥

स हाग्निरुवाच । त्रयो मम भागाः सन्त्वेकस्त्वेति तथेति तावेतेन हविषा दिक्षु नाष्ट्रा रक्षाᳫस्यपाहतां तौ व्यजयेतां यैनयोरियं विजितिस्तां तथोऽ एवैष एतेन हविषा दिक्षु नाष्ट्रा रक्षाᳫस्यपहन्ति तथो ऽएव विजयते विजिते ऽभये नाष्ट्रे सूया ऽइति ॥ १२ ॥

स य एष आग्नेयो ऽष्टाकपालः पुरोडाशो भवति ‡ । सो ऽग्नेरेको भागो ऽथ यद् वारुणो यवमयश्चरुर्भवति यो वै वरुणः सो ऽग्निः सो

---

* 'हरति'—इति क, ख । † 'नाष्ट्रा'—इति ख ।

‡ 'भवति'—इति क, ख । 'भवति'—इति ग, घ ।

ऽग्नेर्द्वितीयो भागो ऽथ यद्रौद्रो गावेधुकश्चरु-र्भवति यो वै रुद्रः सोऽग्निः सो ऽग्नेस्तृतीयो भागो ऽथ यद्गावेधुको भवति वास्तव्यो वा ऽएष देवो वास्तव्या गवेधुकास्तस्माद् गावे-धुको भवत्यथ यदनडुह्यै वहलाया ऽऐन्द्रं दधि भवति स इन्द्रस्य चतुर्थो भागो यद्वै चतुर्थं तत्तुरीयं तस्मादिन्द्रतुरीयं नाम तस्यैषैवानडुही वहला दक्षिणा सा हि वहेनाग्नेय्यग्निदग्ध-मिव ह्यस्यै वहं भवत्यथ यत् स्त्री सती वहत्य-धर्म्मेण तदस्यै वारुणꣳ रूप मथ यद् गौस्तेन रौद्राथ यदस्या ऽऐन्द्रं दधि तेनैन्द्रोषा हि वा ऽएतत् सर्व्वं व्यश्नुते तस्मादेषैवानडुही वहला दक्षिणा * ॥ १३ ॥

अथापामार्गहोमं जुहोति। अपामार्गैर्वै देवा दिक्षु नाष्ट्रा रक्षाꣳस्यपामृजत ते व्यजयन्त येयमेषां व्विजितिस्तां तथो ऽएवैष एतदपा-मार्गैरेव दिक्षु नाष्ट्रा रक्षाꣳस्यपमृष्टे तथो

* 'दक्षिणा' इति क, ख।

ऽएव व्विजयते व्विजिते ऽभये ऽनाष्ट्रे भूया ऽइति ॥ १४ ॥

स पालाशे * वा स्रुवे व्वैकङ्कते वा । अपामार्गतण्डुलानादत्ते ऽन्वाहार्यपचनादुल्मुक मादद्दते तेन प्राञ्चो व्वोदञ्चो वा यन्ति तदग्निꣳ समाधाय जुहोति ॥ १५ ॥

स उल्मुक मादत्ते । अग्ने सहस्व पृतना इति युधो वै पृतना युधः सहस्वेत्येवैतदाहाभिमातीरपास्येति सपत्नो वा ऽअभिमातिः सपत्न मपजह्येत्येवैतदाह दुष्टरस्तरन्नरातीरिति दुस्तरो ह्येष रक्षोभिर्न्नाष्ट्राभिस्तरन्नरातीरिति सर्व्वꣳ ह्येष पाप्मानं तरति तस्मादाह तरन्नरातीरिति व्वर्चोधा यज्ञवाहसीति साधु यजमाने दधदित्येवैतदाह ॥ १६ ॥

तदग्निꣳ समाधाय जुहोति । देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्या मुपाꣳशोर्व्वीर्येण जुहोमीति यज्ञमुखं वा ऽउपाꣳ-

---

* 'पलाशे' इति क ।

शुर्यन्मुखेनैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति हतꣳ रक्षः स्वाहेति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ १७ ॥

स यदि पालाशः स्रुवो भवति। ब्रह्म वै पलाशो ब्रह्मणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति यद्यु वैकङ्कतो वज्रो वै विकङ्कतो वज्रेणैवैतन्नाष्ट्रा रक्षाꣳसि हन्ति रक्षसां त्वा वधायेति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ १८ ॥

स यदि प्राङ्ङित्वा जुहोति। प्राञ्चꣳ स्रुव मस्यति यद्युदङ्ङित्वा जुहोत्युदञ्चꣳ स्रुव मस्यत्यवधिष्म रक्ष इति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ १९ ॥

अथाप्रतीक्षं पुनरायन्ति। स हैतेनापि प्रतिसरं कुर्वीत स यस्यां ततो दिशि भवति तत् प्रतीत्य जुहोति प्रतीचीनफलो वा ऽअपामार्गः स यो हास्मै तत्र किञ्चित् करोति त मेव तत् प्रत्यग्धूर्वति तस्य नामादिशेदवधिष्मामु मसौ हत इति तन्नाष्ट्रा रक्षाꣳसि हन्ति ॥ २० ॥ ३ ॥

॥ इति द्वितीयप्रपाठके तृतीयं ब्राह्मणम् [२.४.] ॥

एवं चातुर्मास्यानि सामान्येन विधाय वैश्वदेवाख्यं प्रथमं पर्व विधत्ते— वैश्वदेवेनेति। वैश्वदेव मित्याग्नेयादिहविरष्टकरूपप्रथमपर्वणो नामधेयम्। अत्र वैश्वदेवादीनां चतुर्णां पर्वणा मपेक्षितान्यङ्गानि मासाग्निहोत्रन्यायेन नामातिदेशादतिदेष्टव्यानि। तदुपदेशस्तु द्वितीयकाण्डे पञ्चमेऽध्याये समाम्नातः— "वैश्वदेवेन वै प्रजापतिरिति *। अत्र वैश्वदेवशब्देन शाखान्तरीया प्रसिद्धिः द्योत्यते। तथाच तैत्तिरीयके— "वैश्वदेवेन वै प्रजापतिः प्रजा असृजत"–इति †। 'भूमानं' (प्रजापतिः ‡) भूयसीः प्रजा इत्यर्थः। "तथो एवैष इति। यथा पुरा प्रजापतिः वैश्वदेवयागेन भूयसीः प्रजाः सृष्टवान्, एव मयं यजमानोऽपि तेन यागेन तथाविधाः 'प्रजाः' 'सृजते' सृजति। ताः 'सृष्टाः' प्रजाः अभिलक्ष्य 'सूयै' सर्वं यज्ञं करवाणीति ॥ १ ॥

द्वितीयं पर्व विधत्ते— "अथ वरुणेति। 'अथ' वैश्वदेवानन्तरं चतुर्षु मासेषु व्यतीतेषु 'वरुणप्रघासैः' यजेत। तान् वरुणपाशमोचनसाधनत्वेन प्रशंसति— "वरुणप्रघासैर्वा इति। "ता अस्येति। वरुणप्रघासयागेन पाशविमोचनस्य कृतत्वात् 'अस्य' प्रजापतेः 'ताः' वैश्वदेवेन सृष्टाः 'प्रजाः' रोगपापरहिताः सत्यः पुत्रपौत्रादिरूपेण प्रजायन्ते। गत मन्यत्। दार्ष्टान्तिके योजयति— "तथो एवैष इति। "ता अस्येति। 'अस्य' यजमानस्येत्यर्थः ॥ २ ॥

---

* २ भा० २७२ पृष्ठा द्रष्टव्या। वस्तुतोऽध्यायारम्भत एव चातुर्मास्योपदेशारम्भः (५अ० १ब्रा० २५०पृ०)।

† तै० ब्रा० १. ६. २. १। ‡ च-छ-पुस्तकयोरिद मधिकम्।

तृतीयं पर्व विधत्ते— "अथ साकमेधैरिति । 'अथ' वरुणप्रघासानुष्ठानानन्तरं चतुर्षु मासेषु साकमेधाख्या यागाः कार्याः । तान् पापरूपशत्रुजयसाधनत्वेन सदृष्टान्तं प्रशंसति— साकमेधैर्वा इति । 'वृत्रं' वृत्रासुरम् 'अघ्नन्' हतवन्तः । 'एवां' देवानां 'येयं विजितिः' इदानीं दृश्यते, 'तां' 'तैरेव' साकमेधैः 'व्यजयन्त' प्राप्नुवन् । "तथो एवेत्यादि, सिद्धम् ॥ ३ ॥

अथ चतुर्थं पर्व विधत्ते—"अथ शुनासीरीयेणेति * । शुनो वायुः, सीर आदित्यः, तद्देवत्यं हविः शुनासीरीयम्; तद्योगात् चतुर्थं पर्व शुनसीरीय मित्युच्यते † । "उभौ रसाविति । शुनासीरयो रसरूपत्वं हि द्वितीये काण्डे स्पष्ट मुक्तम्— "अथ यस्माच्छुनासीर्येण यजेत या वै देवानाᳫं श्रीरासीत् साकमेधैरीजानानां विजिग्यानानां तच्छुन मथ यः संवत्सरस्य प्रजितस्य रस आसीत् तत् सीरᳫं सा या चैव देवानाᳫं श्रीरासीत् साकमेधैरीजानानां विजिग्यानानां य उ च संवत्सरस्य प्रजितस्य रस आसीत् त मेतदुभयं परिगृह्यात्मन् कुरुते"—इति ‡ । शुनासीरीयप्रयोगकालः सूत्रितः— "पवित्रदीक्षास्थाने शुनासीरीयम्"—इति § । पवित्राख्यस्य सोमयागस्य संवत्सरे यस्यां तिथौ दीक्षा कृता, तस्यां फाल्गुनशुक्लप्रतिपदि चतुर्थं पर्व कार्यम् । अर्थात् पवित्रशुनासीर्ययोर्मध्ये वैश्वदेवादीनि त्रीणि पर्वाणि क्रमेण चतुर्षु मासेषु कार्याणीत्युक्तं भवति ॥

---

* 'शुनाशीर्येण'—इति मूलपाठः ।

† का० श्रौ० सू० १५. १. १८ । तै० सं० १. ८. ७ द्रष्टव्यम् ।

‡ २. ६. ३. ४ ( २भा० ४०४पृ० १०पं० ) द्रष्टव्यम् ।

§ का० श्रौ० सू० १५. १. १६ ।

पञ्चवातीयहोमं * विधत्ते— "अथ पञ्चेति †। 'पञ्च-वातीयम्' इति कर्मनामधेयम्। 'आहवनीयम्' अग्निं 'पञ्चधा' 'व्युह्य' प्रतिदिशं मध्ये च पृथक् कृत्वेत्यर्थः। आज्यस्थाल्याः 'स्रुवेण' 'उपघातम्' उपहत्योपहत्य गृहीत्वा 'जुहोति' ॥ ४ ॥

तत्र पूर्वादिक्रमेण पञ्चस्वग्निषु समन्त्रकं हवनं विधत्ते— "स पूर्वार्द्धे इत्यादिना। पूर्वार्द्धे भवः 'पूर्वार्द्ध्यः' अग्निः। "अग्निनेत्रेभ्य इत्यादि ‡। अग्निः 'नेत्रं' नयनस्येष्टप्राप्तेः साधनं येषां तेभ्यः। 'पुरःसद्भ्यः' पूर्वस्यां दिशि सीदन्तीति तथोक्ताः, तेभ्यः 'देवेभ्यः' 'स्वाहा' सुहुत मस्तु। एव मुत्तरत्रापि योज्यम्। 'दुवस्वद्भ्यः' दुव इत्यन्ननाम §; हविर्लक्षणान्नयुक्तेभ्यः ॥ ५ ॥

इत्थं पञ्चभिर्मन्त्रैः कृतेष्वग्निषु हुत्वा पुनस्तानग्नीनेकीकृत्य तैरेव मन्त्रैर्हवनं विधत्ते— "अथ सार्द्ध मिति ‖। पञ्चाप्य-ग्नीन् 'सार्द्धं' 'समुह्य' समस्य जुहुयात्। तानेव मन्त्रान् ¶ पुनः पठति— "ये देवा इति **। अर्थस्तु पूर्ववत् ॥ ६ ॥

पञ्चवातीयहोमस्य द्रव्यं विधातु माह— "यत्र वै देवा

---

* तै० सं० १. ८. ७. 'पञ्चेध्मीयमन्त्राः'।

† का० श्रौ० सू० १५. १. २०।

‡ वा० सं० ९. ३५, २—६।

§ 'दुवस् परिचरणे परितापे च' कण्ड्वादिः। 'दुवस्यति'—इति परिचरणकर्मसु पठितम् (निघ० ३. ५. ५.)। 'दुवस्यति, दुवस्यती राध्नोतिकर्मा'—इति च निरु० १०. २. ७।

‖ का० श्रौ० सू० १५. १. २१।

¶ तेषा मेव मन्त्राणां पुरस्तात् 'ये देवाः'—इति पदद्वय मुपादायैव विशेषः। संहितायां तु पृथगेवाम्नाताः।

** वा० सं० ९. ३६. १—५।

इति । "तद्धोचुरिति । 'तत्' तत्र विजितप्रदेशे देवाः 'ऊचुः' उक्तवन्तः । किम् ? इति । 'इमानि' 'नाष्ट्रा' नाशकारीणि 'रक्षांसि' 'दिक्षु' 'उत्पिबन्ते' उत्कटं पिबन्ति, प्राणिनो भक्षयन्ति । 'हन्त' इति हर्षे । 'एभ्यः' रक्षोभ्यः 'वज्रं प्रहराम' 'इति' विचार्य, आज्यरूपेण वज्रेण तान् राक्षसान् एव अघ्नन् । श्रूयते हि आज्यस्य वज्रत्वम् । "घृतं वै देवा वज्रं कृत्वा"-इति * । "तथो एवैष इत्यादिना इदानीं मनुष्ठातुरपि तथाविधफलप्राप्तिदर्शनम् ॥ ७ ॥

अग्नीनां समासेन कृत माहुतिपञ्चकं प्रशंसति— "अथ यदेता इति । पूर्वं माहवनीयस्य पञ्चधा व्यूहनेन त मग्निं 'क्षणन्ति' हिंसन्ति । "क्षणु हिंसायाम्"-इति धातुः † । तथा तस्य 'अग्नेः' अवयवान् 'विवृहन्ति' विश्लेषयन्ति । "वृहू उद्यमने"-इति धातुः ‡ । त मनेन पुनः समस्य पञ्चाहुतिकरणेन संहितवान् भवतीति ॥ ८ ॥

तस्य होमस्य त्रियुक्त मश्वरथं दक्षिणात्वेन विधत्ते— "तस्य प्रष्टिवाहन इति § । "सव्य इति । रथस्य सव्यभागे तिष्ठन्नेकः, सारथिश्चैक इति द्वौ ; अश्वगतां त्रित्वसङ्ख्यां सारथिगतां द्वित्वसङ्ख्यां च मिलित्वा पञ्चप्राणात्मना प्रशंसति— 'ते पञ्चेति । प्राणवातयोरेकत्वात् पञ्चवातीयहोमस्य सङ्ख्याद्वारा प्राणात्मकस्य रथो दक्षिणात्वेन युज्यते । 'तस्मात्' कर्मणोऽपि पञ्च वाताः प्राणा अस्मिन् सन्तीति 'पञ्चवातीयं नाम' सम्पन्नम् ॥ ९ ॥

---

* तै० सं० ६. २. २. ७ द्रष्टव्यम् ।

† तना० प० ३ धा० । ‡ तु० प० ५६ धा० ।

§ का० श्रौ० सू० १५. १. २२ ।

[आ]रोग्यकामस्यापीमं होमं विधत्ते— "स हैतेनापीति। ' होमेन 'भिषज्येत्' चिकित्सेत्। "भिषज् चिकित्सायाम्" [इ]ति धातुः *। अत एव सूत्रितम्— "व्याधितस्याप्येव †। प्राणस्यायुष्ट्वं शरीरधारकत्वात्। 'सः' प्राणरूपेण ' अपि पुरुषशरीरेऽनुप्रविष्टः सन् वृत्तिभेदात् दशसु चक्षुः-[रा]दिद्वारेषु सञ्चरन् 'दशधा विहितः' भवति। अत उक्त-[प्र]तिकरणात् 'दश प्राणान्' व्याधिते 'पुरुषे' 'कृत्स्नं' सम्पूर्ण[म्] [आ]मायुः' वि-'दधाति'। 'यः' तु 'गतासुः इव भवति' तम् ' अनेन होमेन 'आहरति एव' पुनर्जीवयत्येवेत्यर्थः ॥ १० ॥

[य]ागान्तरं विधत्ते— "अथेन्द्रेति। 'अथ' पञ्चवातीयहोमा-[नन्तर]म्, इन्द्रस्तुरीयश्चतुर्थहविर्देवता यस्मिन् कर्मणि, तत् [इन्द्रत]ुरीयं' कर्म वक्ष्यत इत्यर्थः ‡। तस्य हविश्चतुष्टयं [दर्शयत]ि— "आग्नेय इत्यादि §। 'गवीधुकाः' आरण्य-[धान्यवि]राः ‖। 'वहलायै' वहं नाम ककुत्प्रदेशः, तद्वत्यै 'अन-षष्ठ्यर्थे चतुर्थी, तस्याः। 'दधि' 'ऐन्द्रम्' इन्द्रदेवत्यं [भवति]। अथ विधत्ते— "तेनेन्द्रतुरीयेणेति।

[य]ागस्येन्द्रतुरीयत्व माख्यायिकया दर्शयति— "इन्द्राग्नी [ह]ैतदिति। 'समूदाते' संवादं कृतवन्तौ ॥ ११ ॥

---

* कण्ड्वा० प० २३ धा०।
† का० श्रौ० सू० १५. १. २३। 'राजसूयाद् वहिः'—इति कर्कः।
‡ का० श्रौ० सू० १५. १. २४। एतच्च काण्वानां श्रोभूति[व]े। तै० सं १. ८. ७।
§ का० श्रौ० सू० १५. १. २५।
‖ 'गवेधुका महतां जलजानां तृणानां श्वेतानि फलानि'—इति देव०।

"स ह्याग्निरित्यादिना, अग्नेस्त्रयो भागाः, इन्द्रस्य तुरीय एको भाग इति यागस्यार्थात् इन्द्रतुरीय मिति नाम निरुक्तम्। स्पष्ट मन्यत् ॥ १२ ॥

अग्नेर्भागत्रयं क्रमेण प्रतिपादयति—"स य आग्नेय इति *। "यो वै वरुण इत्यादि। वरुणो रुद्रश्चोभावप्यग्निरेव। तथाच तैत्तिरीयके— "ते देवा अग्नि मब्रुवन्निति प्रस्तुत्य "स त्रेधात्मानं व्यकुरुताग्निं तृतीयं रुद्रं तृतीयं वरुणं तृतीयम्"—इति †। "वास्तव्य इति। रुद्रः खलु वास्तुभवः। ग्रामाद् बाह्यो यज्ञभूमिश्मशानादिर्वास्तुः। 'गवीधुकाः ‡' अपि 'वास्तुभवाः'। अतो गावीधुकहविषो § रुद्रदेवत्यत्वं युक्त मिति। "अथ यदनडुह्या इत्यादि। उक्तार्थम् ॥

तस्य दक्षिणां विधत्ते— "तस्मादेषैवेति ‖। दक्षिणारूपाया अनडुह्या अग्निवरुणरुद्रेन्द्रदेवताना मौचित्यं दर्शयति— "सा हि वहेनेति। युगवहनप्रदेशे कृष्णवर्णत्वात् अग्नेः सम्बन्धिनी। स्त्रीत्वे सत्यपि, 'अधर्मेण' स्त्रिया अयोग्येनानोवहनेन वारुणी; वरुणो हि स्वपाशैः सर्वान् बध्नाति। गवां रुद्रदेवत्यत्वाद् 'तेन रौद्री'। एतदीयस्य दध्न ऐन्द्रत्वात् 'तेन' 'ऐन्द्री' इन्द्रदेव-

---

* "आग्नेयः, वारुणो यवमयश्चरुः, रौद्रश्च गावेधुकः, वह्निनी-दध्यैन्द्रम्"—इति का० श्रौ० सू० १५. १. २५, २६, २८, २६।

† तै० ब्रा० १. ७. १। इत उत्तरं तत्रैव माम्नातम्— "सोऽब्रवीत्, क इदं तुरीय मिति। अह मितीन्द्रोऽब्रवीत्। ०—०। स इन्द्रस्तुरीय मभवत्। यदिन्द्रस्तुरीय मभवत्, तदिन्द्रतुरीयस्येन्द्रतुरीयत्वम्"—इति।

‡ 'गवेधुकाः'—इति मूलपाठः।

§ 'गवीधुकहविषः'—इति ज।

‖ 'तस्यैषैवेति'—इति मूलपाठः।

ताका *। एतादृशी 'अनडुही' एतस्येन्द्रतुरीयकर्मणो दक्षिणात्वेन संयुज्यत इत्यर्थः † ॥ १३ ॥

विधत्ते— "अथापामार्गेति ‡। तं राज्ञो विजितिसाधनत्वेन प्रशंसति— "अपामार्गैर्वै देवा इति। 'अपामृजत' अपमार्जनं कृतवन्तः। "अपमृष्ट इति। इदानीं मप्यपमार्जनं करोति § ॥ १४ ॥

तस्यानुष्ठानं सविशेष माह— "स पालाशे वेति। पलाशवैकङ्कतयोरन्यतरनिर्मिते 'स्रुवे' अपामार्गतण्डुलानाधाय अन्वाहार्यपचनाग्नेरुल्मुकञ्चादाय प्राङ्मुखा उदङ्मुखा वा 'यन्ति'। तत्राग्निं प्रतिष्ठाप्य होमः कर्त्तव्यः ‖ ॥ १५ ॥

उल्मुकादान मनूद्य मन्त्रं विधत्ते— "स उल्मुकमिति ¶। हे 'अग्ने!' 'पृतनाः' सङ्ग्रामान् 'सहस्व', 'अभिमातीः' अभिमन्यमानान् सपत्नान् 'अपास्य' अपक्षिप। "अस्तु क्षेपणि" **। एव मनिष्टनिवृत्ति मुक्त्वेष्टप्राप्तिं प्रार्थयते— 'तुष्टः'

---

* "वहिनीदध्यैन्द्रम्"—इति का० श्रौ० सू० १५. १. २९। 'वहित्र्या गोर्दधि वहिनीदधि। अनोवहतीति वहिनी गौः'—इति चात्र कर्कः।

† का० श्रौ० सू० १५. १. ३०। 'वहिनी धेनुर्दक्षिणा'—इति तै० सं० १. ८. ७. १। "यद् वहिनी, तेनाग्नेयी; यद् गौः, तेन रौद्री; यद्धेनुस्तेनैन्द्री; यत् स्त्री सती दान्ता, तेन वारुणी समृद्ध्यै"—इति च तत्र तै० ब्रा० १. ७. १।

‡ तै० सं० १. ८. ७=तै० ब्रा० १. ७. १।

§ का श्रौ० सू० १५. २. १। 'इन्द्रतुरीयाच्च श्वोभूते काण्वानां पठन्ति'—इति तत्र कर्कः।

‖ का० श्रौ० सू० १५. २. २।

¶ का० श्रौ० सू० १५. २. ५। ** द्वि० प० ८ घा०।

पश्येस्तरीतु समस्य: स्वयम् 'अराती:' शत्रून् 'तरन्', 'यज्ञवाहसि' यजमाने 'वर्च:' अन्नं 'धा:' धारयसि ॥

मन्त्रं प्रतिपाद मनूद्य व्याचष्टे—"अग्ने सहस्वेति *। वर्च:पदस्य श्रेय:परत्व माह—"साधु यजमान इति। 'दधत्' धारयन्नित्यर्थ: ॥ १६ ॥

हवन मनूद्य मन्त्रं विधत्ते—"तदग्नि मिति †। "देवस्य त्वेति ‡, व्याख्यातम्। "उपांशोरिति। 'उपांशु:' नाम 'यज्ञमुखं' प्रथमो ग्रह:, तस्य 'वीर्येण' 'जुहोमि'। तेन हवनेन 'रक्ष:' हतं निहतं नष्टं भवतु। 'स्वाहा' इदं हवि: सुहुत मस्तु इति ॥ १७ ॥

पालाशवैकङ्कतयोरेकतरस्य हवनोपयुक्तस्य स्रुवस्य क्षेपणं सार्थवादं विधत्ते—"स यदि पालाश इति §। क्षेपणमन्त्रं पठति—"रक्षसा मिति ‖। हे स्रुव ! 'रक्षसां वधाय' 'त्वा' त्वाम्, अस्यामीति शेष: ॥ १८ ॥

"स यदीति। 'यदि' अध्वर्यु: 'प्राङ्' प्राङ्मुख: पूर्वस्यां दिशि गत्वा जुहुयात्, तर्हि 'स्रुवं' 'प्राञ्चं' प्राग्दिक्सम्बन्धम् 'अस्यति' क्षिपति। उदङ्ङित्यादावप्येवं योज्यम्। हवनप्रदेशात् तन्निवर्त्तनं विधित्सुरादौ तन्मन्त्रं ¶ पठित्वा व्याचष्टे— "अवधि-

* वा० सं० ६. ३७. १।

† का० श्रौ० सू० १५. २. ६।

‡ वा० सं० ६. ३८. १।

§ का० श्रौ० सू० १५. २. ७।

‖ वा० सं ६. ३८. १।

¶ वा० सं० ६. ३८. २।

मीति। अनेनापामार्गहोमेन 'रक्षः' 'अवधिष्म' वयं हत-वन्तः। भूते लुङ्॥ १८॥

एतस्मात्प्रकरणात् पुनरागमनं विधत्ते— "अथाप्रतीत्त मिति *। 'अथ' 'अप्रतीत्तं' तं प्रदेशं प्रतिनिवृत्त्य, अनवेक्ष्ये-त्यर्थः। अभिवर्द्धमानस्यापि स्वोपद्रवपरिहारायेमं होमं विधत्ते— "स हैतेनापीति। 'एतेन' अपामार्गहोमेन 'अपि', न केवलं पञ्चवातीयहोमेन, एतेनापि 'प्रतिसरं' स्वरक्षा मभिचार्यमाणः कुर्यात् †। हवने कञ्चिद् विशेषं विधत्ते— "स यस्या मिति। अभिचारको यस्यां 'दिशि' भवेत्, तां दिशं 'प्रतीत्य' गत्वा जुहुयात्। "प्रतीचीनफल इति। अपामार्गमञ्जर्यो ‡ यतः प्रतीचीनफलाः §, स्वात्मानं प्रतिगतैरवाङ्मुखैः फलैर्युक्ताः ‖; अतोऽभिचारकः 'अस्मै' यजमानाय 'किञ्चित्' पीडादिकं कुर्यात्। 'त मेव' एतेनापामार्गहोमेन प्रतिमुखं 'धूर्वति' हिनस्ति, तत्कृतोऽभिचारः त मेव प्रतिनिवृत्त्य हिनस्तीत्यर्थः। निवर्त्तनमन्त्रेण शत्रुनामादेशनं विधत्ते— "तस्य नामेति ¶। "अवधिषामु मिति। 'अमुम्'-'असौ'-इति पदयोः स्थाने अभि-चारकनामधेयं द्वितीयान्तत्वेन प्रथमान्तत्वेन चादिशेदित्यर्थः॥

अत्र सूत्रम्— "देवस्य त्वेति जुहोति, रक्षसां त्वेति स्रुव मस्यति, तां दिशं यस्यां जुहोत्यवधिष्म रक्ष इत्यायस्य-

---

* का० श्रौ० सू० १५. २. ८।

† का० श्रौ० सू० १५. २. ९।

‡ नास्त्येतत् पदं ज-पुस्तके।

§ 'प्रतीचीनफलः'—इति ज।

‖ 'फलैर्युक्तः'—इति ज।

¶ का० श्रौ० सू० १५. २. १०।

मपीच्च मभिचर्यमाणोऽपि तां दिशं गत्वाभिचरतो नामादिशेत्"–इति * ॥ २० ॥ ३ [ २. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे द्वितीयाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम् . )

आग्नावैष्णव मेकादशकपालं पुरोडाशं निर्वपति । ऐन्द्रावैष्णवं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन त्रिषंयुक्तेन यजते पुरुषानेतद्देवा उपायंस्तथो ऽएवैष ऽएतत् पुरुषानेवोपैति ॥ १ ॥

स यदाग्नावैष्णवः † । एकादशकपालः पुरोडाशो भवत्यग्निर्वै दाता वैष्णवाः पुरुषास्तदस्मा ऽअग्निर्दाता पुरुषान् ददाति ॥ २ ॥

अथ यदैन्द्रावैष्णवः । चरुर्भवतीन्द्रो वै

---

* 'होमसुवप्रासनागमनेषु'—इति तत्सूत्रम् । का० श्रौ० सू० १५. २. ६–१०

† 'वः'—इति ख, 'व'—इति ग, घ ।

यजमानो व्वैष्णवाः पुरुषास्तदस्मा ऽअग्निर्दाता पुरुषान् ददाति तैरेवैतत्सꣳस्पृशते तानात्मन् कुरुते * ॥ ३ ॥

अथ यद्वैष्णवः † । त्रिकपालो वा पुरोडाशो भवति चरुर्वा यानेवास्मा ‡ ऽअग्निर्दाता पुरुषान् ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति यद्वै पुरुषवान् कर्म चिकीर्षति शक्नोति वै तत् कर्तुं तत् पुरुषानेवैतदुपैति पुरुषवान्त्स्या ऽइति तस्य व्वामनो गौर्दक्षिणा स हि व्वैष्णवो यद्वामनः § ॥ ४ ॥

अथापरेण त्रिषंयुक्तेन यजते । स आग्नापौष्ण मेकादशकपालं पुरोडाशं निर्व्वपत्यैन्द्रापौष्णं चरुं पौष्णं चरुं तेन त्रिषंयुक्तेन यजते पशूनेव तद्देवा उपायंस्तथो ऽएवैष एतत् पशूनेवोपैति ‖ ॥ ५ ॥

---

* 'कुरुते'—इति क, ख ।

† '०वः'—इति ग, घ ।

‡ 'स यानेवास्मा' —इति क, ख ।

§ '०नः'—इति ग, घ ।

‖ '०पैति"—इति ख ।

स यदाग्नापौष्णः* । एकादशकपालः पुरोडाशो भवत्यग्निर्वै दाता पौष्णाः पशवस्तदस्मा ऽअग्निरेव दाता पशून् ददाति† ॥ ६ ॥

अथ यदैन्द्रापौष्णः । चरुर्भवतीन्द्रो वै यजमानः पौष्णाः पशवः स यानेवास्मा ऽअग्निर्दाता पशून् ददाति तैरेवैतत्सꣳस्पृशते तानात्मन् कुरुते‡ ॥ ७ ॥

अथ यत् पौष्णः । चरुर्भवति यानेवास्मा ऽअग्निर्दाता पशून् ददाति तेष्वेवैतदन्ततः प्रतितिष्ठति यद्वै पशुमान् कर्म चिकीर्षति शक्नोति वै तत् कर्तुं तत् पशूनेवैतदुपैति पशुमान्त्स्या ऽइति तस्य श्यामो गौर्दक्षिणा स हि पौष्णो यच्छ्यामो द्वे वै श्यामस्य रूपे शुक्लं चैव लोम कृष्णं च द्वन्द्वं वै मिथुनं प्रजननं प्रजननं वै पूषा पशवो हि पूषा पशवो हि प्रजननं मिथुनमेवैतत् प्रजननं क्रियते तस्माच्छ्यामो गौर्दक्षिणा ॥ ८ ॥

* '०ष्णः'—इति ग, घ । † 'ददाति'—इति क, घ ।

‡ 'कुरुते'—इति क, ख ।

अथापरेण त्रिषंयुक्तेन यजते *। सो ऽग्नीषोमीय मेकादशकपालं पुरोडाशं निर्व्वपत्यैन्द्रासौम्यं चरुꣳ सौम्यं चरुं तेन त्रिषंयुक्तेन यजते व्वर्चं एव तद्देवा उपायंस्तथो ऽएवैष एतद्वर्च एवोपैति ॥ ९ ॥

स यदग्नीषोमीयः। एकादशकपालः पुरोडाशो भवत्यग्निर्व्वै दाता व्वर्चः सोमस्तदस्मा ऽअग्निरेव दाता व्वर्चो ददाति † ॥ १० ॥

अथ यदैन्द्रासौम्यः। चरुर्भवतीन्द्रो वै यजमानो व्वर्चः सोमः स यदेवास्मा ऽअग्निर्दाता व्वर्चो ददाति तेनैवैतत्सꣳस्पृशते तदात्मन् कुरुते ‡ ॥ ११ ॥

अथ यत् सौम्यः। चरुर्भवति यदेवास्मा ऽअग्निर्दाता व्वर्चो ददाति तस्मिन्नेवैतदन्ततः प्रतितिष्ठति यद्वै व्वर्चस्वी कर्म चिकीर्षति शक्नोति वै तत् कर्तुं तद्वर्च एवैतदुपैति व्वर्चस्वी भूया ऽइति नो ह्यवर्चसो व्याप्त्या चनार्थो-

* 'यजते'—इति ग, घ। † 'ददाति'—इति क।

‡ 'कुरुते'—इति क, ख।

ऽस्ति तस्य बभ्रुर्गौर्द्दक्षिणा स हि सौम्यो यद्बभ्रुः * ॥ १२ ॥

अथ श्वो भूते । वैश्वानरं द्वादशकपालं पुरोडाशं निर्व्वपति वारुणं यवमयं चरुं ताभ्या मनूचीनाहं वेष्टिभ्यां यजते समानबर्हिर्भ्यां वा ॥ १३ ॥

स यद्वैश्वानरो भवति । संवत्सरो वै वैश्वानरः संवत्सरः प्रजापतिः प्रजापतिरेव तद् भूमानं प्रजाः ससृजे भूमानं प्रजाः सृष्ट्वा भूया ऽइति तथो ऽएवैष एतद् भूमानं प्रजाः सृजते भूमानं प्रजाः सृष्ट्वा भूया ऽइति † ॥ १४ ॥

अथ यद् द्वादशकपालो भवति । द्वादश वै मासाः संवत्सरस्य संवत्सरो वैश्वानरस्तस्माद् द्वादशकपालो भवति ‡ ॥ १५ ॥

अथ यद्वारुणो यवमयश्चरुर्भवति । तत्सर्व्वस्मा देवैतद् वरुणपाशात् सर्व्वस्माद् वरुण्यात् प्रजाः प्रमुञ्चति ता अस्यानमीवा अकिल्विषाः प्रजाः

---

* 'यद्बभ्रुः'—इति ग ।

† 'इति'—इति क । ‡ 'भवति'—इति क ।

प्रजायन्ते ऽनमीवा अकिल्विषाः प्रजा अभि सूया ऽइति ॥ १६ ॥

ऋषभो वैश्वानरस्य दक्षिणा। संवत्सरो वै वैश्वानरः संवत्सरः प्रजापतिर्ऋषभो वै पशूनां प्रजापतिस्तस्मादृषभो वैश्वानरस्य दक्षिणा कृष्णं वासो वारुणस्य तद्धि वारुणं यत् कृष्णं यदि कृष्णं न विन्देदपि यदेव किञ्च वासः स्याद् ग्रन्थिभिर्हि वासो वारुणं वरुण्यो हि ग्रन्थिः॥ १७ ॥ ४ ॥

॥ इति द्वितीयप्रपाठके चतुर्थं ब्राह्मणम् [२.५.] ॥

अथ त्रिषंयुक्तेष्टित्रयं विधित्सुः प्रथमं त्रिषंयुक्ता मनुक्रामति— "आग्नावैष्णव मिति। तद् विधत्ते— "तेन त्रिषंयुक्तेनेति *। त्रिभिर्हविर्भिः संयुक्तं [ कर्म त्रिषंयुक्तम् ], तेन यजेत। पुरुषप्राप्तिहेतुता माह— "पुरुषान्वै तदिति। यतो देवा एतेन त्रिषंयुक्तेन सहायभूतान् कर्मकरान् पुरुषान् प्राप्तवन्तः, तथा यजमानोऽपि तथाविधान् पुरुषान् अनेन यागेन प्राप्नोतीत्यर्थः ॥ १ ॥

त्रीणि हवींषि विभज्य स्तौति— "स यदाग्नावैष्णव इति। 'वैष्णवाः पुरुषा इति। विष्णोरवतारस्त्रीकारेण मनुष्यसम्ब-

* का० श्रौ० सू० १५. २. १ ।

न्यात् मनुष्याः सर्वे 'वैष्णवाः' विष्ण्वधिष्ठिता इत्यर्थः। 'तत्' तथा सति 'अस्मै' यजमानाय आग्नावैष्णवयागेन 'दाता अग्निः' विष्ण्वात्मकान् 'पुरुषान्' ददातीत्यर्थः ॥ २ ॥

प्रयोजन माह— "अथ यदैन्द्रावैष्णव इति * ॥ ३ ॥

"अथ यद् वैष्णव इति। "तेष्वेवैतदन्तत इति। 'अन्ततः' अवसाने केवलवैष्णवयागेन 'तेषु' अग्निदत्तेषु स्वसम्बद्धेषु विष्ण्वात्मकेष्वेव पुरुषेषु प्रतिष्ठितो भवति। अथ पुरुषप्राप्तेः फल माह— "यद्वै पुरुषवानिति। यतः पुरुषसहायवानेव 'कर्म' कर्त्तु मिच्छति, 'शक्नोति' च ; अतः 'तत्' तेन प्रथमेन त्रिसंयुक्तेन 'पुरुषानेव' प्राप्नोति। तस्य दक्षिणां विधाय स्तौति— "तस्य वामन इति। 'वामनः' ह्रस्वाङ्गः। यतो वामनो विष्णुसम्बन्धी, अतो वैष्णवयागे दक्षिणात्वेन भवितुं युज्यत इत्यर्थः † ॥ ४ ॥

द्वितीयं त्रिहविष्कं विधत्ते— "अथापरेणेति। अस्य त्रिसंयुक्तस्य पशुप्राप्तिहेतुता माह— "पशूनेवेति। पूर्ववद् योज्यम्। अत्र विष्णुस्थाने पूषैव विशेषः ॥ ५ ॥

"स यदाग्नापौष्ण इति। "पौष्णाः पशव इति। पूषा हि पशूना मुत्पादकः, अतस्ते पौष्णाः। श्रूयते हि—"पूषा पशूनां प्रजनयितेति ‡ ॥ ६ ॥

"अथ यत् पौष्ण इति। "अथैतस्य दक्षिणां विधत्ते—

---

* तै० सं० १. ८. ८ ; तै० ब्रा० १. ७. २।

† "आग्नावैष्णव ऐन्द्रावैष्णवो वैष्णवो वामनो दक्षिणा"—इति का० श्रौ० सू० १५. २. १२।

‡ तै० ब्रा० १. ७. २. १ द्रष्टव्यम्।

"तस्य श्याम इति। श्यामो गौरिति * 'यत्', स हि 'पौष्णः' पूषदेवतात्मकः। तदेवोपपादयति— "द्वे वा इति। श्यामवर्णस्य शुक्लकृष्णात्मकद्विरूपयोगात्। द्वित्वसङ्ख्याद्वारा पूषरूपता माह— "द्वन्द्वं वा इति। लोके हि स्त्रीपुरुषात्मकं 'द्वन्द्वं' 'मिथुनं' परस्परं संसृष्टं तत् 'प्रजननं' प्रजोत्पत्तिकारणम्; पूषणोऽपि तदेव स्वरूप मिति तत्सृष्टाः पशवोऽपि पूषैव। यतः पूषात्मकाः 'पशवः', तेऽपि 'प्रजननं' प्रजोत्पत्तिनिमित्तम्; अतः शुक्लकृष्णात्मकस्य श्यामस्य गोर्दानेन पशूत्पत्तिनिमित्तं मिथुन मेव सम्पादितं भवतीत्यर्थः; अतः पशुफलके यागे दक्षिणात्वेन युज्यत इत्यर्थः † ॥ ८ ॥

तृतीयं त्रिषंयुक्तं विधत्ते— "अथापरेणेति। तस्य वर्चस्साधनता माह— "वर्च एवैतदिति। 'वर्चः' ब्राह्मं तेजः। अत्र विष्णुस्थाने सोमो विशेषः ॥ ९ ॥

"स यदाग्नीषोमीय इति। "वर्चः सोम इति। सोमस्य यागद्वारा ब्रह्मवर्चसनिमित्तत्वात् तादात्म्यव्यपदेशः। अन्यत् पूर्ववद् योज्यम् ॥ १० ॥　　॥ ११ ॥

"अथ यत् सौम्य इति। "नो ह्यवर्चस इति। 'अवर्चसः' अतेजस्कस्य यद्यपि 'व्याप्तिः' सर्वपदार्थव्यापनशक्तिरस्ति, 'चन'-शब्दोऽप्यर्थे, तथापि तया 'व्याप्त्या' अपि 'न' खलु

---

* "अलिङ्गग्रहणे गौः सर्वत्र"— इति का० श्रौ० सू० १५. २. १३। 'यत्र जातिरूपं लिङ्गं न गृह्यते तत्र सर्वत्र गोजातिर्ज्ञेया'— इति चात्र कर्काचार्यः।

† "आग्नापौष्णः ऐन्द्रापौष्णः पौष्णः श्यामो दक्षिणा"— इति का० श्रौ० सू० १५. २. १४।

'अर्थः' प्रयोजनं विद्यते इति। तस्य दक्षिणां विधत्ते— "बभ्रुर्गौरिति *। 'स हि सौम्यः' इति 'बभ्रुः' भवत्येव; "एतद्वै सोमस्य रूपम्"-इति श्रवणात् † ॥ १२ ॥

अथानन्तरदिवसकर्तव्यं हविष्कं यागं विधत्ते— "अथ श्वोभूत इति। "अनूचीनाह्न मिति। अनूचीने पूर्वापरीभूते अहनी 'अनूचीनाहम्', क्रियाविशेषण मेतत्। वैश्वानरेष्ट्या पूर्वस्मिन् दिने यजेत, वारुण्या अपरस्मिन् दिने। एवं भिन्न-तन्त्रेणैतौ यागौ कार्यौ। एकस्मिन्नेवाहनि वा समानतन्त्राभ्यां यष्टव्य मित्याह— "समानबर्हिभ्यां मिति। बर्हिरुपलक्षितं कृत्स्नं तन्त्रं समानं साधारणं ययोः ते समानबर्हिषी ॥ अत्र सूत्रम्— "श्वो वैश्वानरो द्वादशकपालो वारुणश्चैकतन्त्रे, श्वो वैकः"-इति ‡ ॥ १३ ॥

प्रथमस्य हविषो वैश्वानरदेवताकत्वं प्रशंसति— "स यद् वैश्वानर इति। अग्नेः संवत्सरात्मकत्वं मुख्याग्नेः संवत्सरणा-दिति षष्ठे काण्डे समाम्नास्यते §। भूमानं प्रजा इति। भूयसी प्रजा इत्यर्थः ॥ १४ ॥

कपालसङ्ख्यां प्रशंसति— "अथ यद् द्वादशकपाल इति। वैश्वानराग्नेः संवत्सरात्मकत्वात् तस्य मासद्वादशकरूपत्वात् तदी-यस्य हविषः कपालेषु द्वादशसङ्ख्या युज्यत इत्यर्थः ॥ १५ ॥

---

* "आग्नाग्नेमीय ऐन्द्रासौम्यः सौम्यो बभ्रुर्दक्षिणा"- इति का० श्रौ० सू० १५. २. १५। तै० सं० १. ८. ८; तै० ब्रा० १. ७. २।

† तै० सं० २. १. ३. १०। 'सम्बद्धे'—इति तच्छेषः।

‡ का० श्रौ० सू० १५. २. १८, १६। तत्रैको वारुणः।

§ 'संवत्सरोऽग्निः'—इत्यादिकं ६का० ३प्र० ६ब्रा० १२क० द्रष्टव्यम्।

णीयं हविः प्रशंसति— "अथ यद् वारुणं इति।
स्मादिति। 'तत्' तत्र 'एतत्' एतेन वारुणयागेन सर्वस्मा-
णपाशात्', तथा 'वरुण्यात्' वरुणपाशकृतात् सर्वस्माद्
'प्रजाः' 'प्रमुञ्चति' ॥ १६ ॥
योर्हविषोः क्रमेण दक्षिणा मभिधाय प्रशंसति—
इति। "ऋषभो वै पशूना मिति। यतो वैश्वा-
रम्परया 'प्रजापतिः', वृषभोऽपि पशूनां पतित्वात्
:; अतो वैश्वानरदेवताकयागस्य दक्षिणात्वेन युज्यत
"तद्धि वारुण मिति। रात्र्यभिमानिदेवता वरुणः,
कृष्णवर्णा, अतो लोकेऽपि यत् कृष्णं तद् वारुण
। कृष्णवस्त्रालाभे वर्णान्तरयुतं 'वासः' देय मित्यु-
। तस्योपाध्यन्तरेण वरुणसम्बन्धित्व मुपपादयति—
भर्ग्रीति। ग्रन्थिर्नाम पाशः, पाशो हि वरुणस्येति
त्वम्। अयं दक्षिणाभेद इष्ट्योर्भिन्नतन्त्रत्वे वेदितव्यः।
न्त्रत्वे हि एकेनैव द्रव्येण परिक्रीता ऋत्विजः कृत्स्नं
तं कुर्वन्तीतीतरवैयर्थ्यम्। तदुक्तं कर्कोपाध्यायेन—
दे चैतद् भवति; ऐकतन्त्र्ये तु चोदकपरिप्राप्तोऽन्त्या-
-इति † ॥ १७ ॥ ४ [ २. ५. ] ॥

ति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे द्वितीयाध्याये पञ्चमं ब्राह्मणम् ॥

---

"ऋषभः पूर्वस्य दक्षिणा, कृष्णं वास उत्तरस्य, अभावे-
"—इति का० श्रौ० सू० १६. २. २०।
१५. २. २० कण्डिकेयम्।

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ २ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् * पञ्चसीरीं-†-स्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः ‡ सिङ्गणार्यो §,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो ‖ राजतं राजपूज्यः ।
प्राज्योत्थं प्राज्यजन्मा ¶ लवणज मतृषः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गणार्यः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे द्वितीयाध्यायः समाप्तः ॥ २ ॥

---

* 'पञ्चाब्धीन्'—इति ठ (१) ।
† 'सप्तसीरीं'—इति ठ ।
‡ 'सायणः' स्यात् ?
§ स्यात् 'सिङ्गणार्यो' ?
‖ 'मजडं'—इति ठ ।
¶ 'प्राज्यबुद्धिर्'—इति ठ ।
(१) ठ-इति प्रथमकाण्डीयसम्पादकोक्त्या विवृतं द्रष्टव्यम् ।

( अथ तृतीयाध्याये प्रथमं ब्राह्मणम् . )

अरण्योरग्नी समारोह्य। सेनान्यो गृहान् परेत्याग्नये ऽनीकवते ऽष्टाकपालं पुरोडाशं निर्व्वपत्यग्निर्व्वै देवताना मनीकꣳ सेनाया वै सेनानीरनीकं तस्मादग्नये ऽनीकवत ऽएतद्वा ऽअस्यैकꣳ रत्नं यत् सेनानीस्तस्मा ऽएवैतेन सूयते तꣳ स्व मनपक्रमिणं कुरुते तस्य हिरण्यं दक्षिणाग्नेयो वा ऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा * ॥ १ ॥

अथ श्वो भूते। पुरोहितस्य गृहान् परेत्य बार्हस्पत्यं चरुं निर्व्वपति बृहस्पतिर्व्वै देवानां पुरोहित एष वा ऽएतस्य पुरोहितो भवति तस्माद्बार्हस्पत्यो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यत् पुरोहितस्तस्मा ऽएवैतेन सूयते तꣳ स्व मनपक्रमिणं कुरुते तस्य शितिपृष्ठो गौर्दक्षिणैषा वा ऽऊर्ध्वा बृहस्पतेर्दिक्तदेष उपरिष्टादर्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा † ॥ २ ॥

---

† 'दक्षिणा'—इति क, ख।

अथ श्वो भूते। सूयमानस्य गृह ऽऐन्द्र मेकादशकपालं पुरोडाशं निर्व्वपति क्षत्रं वा ऽइन्द्रः क्षत्रꣳ सूयमानस्तस्मादैन्द्रो भवति तस्य ऽर्षभो दक्षिणा स ह्यैन्द्रो यदृषभः * ॥ ३ ॥

अथ श्वो भूते †। महिष्यै गृहान् परेत्य आदित्यं चरुं निर्व्वपतीयं वै पृथिव्यदितिः सेयं देवानां पत्न्येषा वा ऽएतस्य पत्नी भवति तस्मा-दादित्यो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यन्महिषी तस्या ऽएवैतेन सूयते ताꣳ स्वा मनपक्रमिणीं कुरुते तस्यै धेनुर्दक्षिणा धेनुरिव वा ऽइयं मनु-ष्येभ्यः सर्व्वान् कामान् दुहे माता धेनुर्मातेव वा ऽइयं मनुष्यान् बिभर्ति तस्माद्धेनुर्दक्षिणा ‡ ॥ ४ ॥

अथ श्वो भूते। सूतस्य गृहान् परेत्य वारुणं यवमयं चरुं निर्व्वपति सवो वै सूतः सवो वै देवानां वरुणस्तस्माद्वारुणो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यत् सूतस्तस्मा ऽएवैतेन सूयते

* 'यद्दषभः'—इति ग। 'यद्दषभः'—इति घ।

† 'भूते'—इति ख। 'भूते'—इति ग।

‡ 'दक्षिणा'—इति क, ख।

तᳫं स्व मनपक्रमिणं कुरुते तस्याश्वो दक्षिणा स हि व्वारुणो यदश्वः * ॥ ५ ॥

अथ श्वो भूते। ग्रामण्यो गृहान् परेत्य मारुतᳫं सप्तकपालं पुरोडाशं निर्व्वपति व्विशो वै मरुतो व्वैश्यो वै ग्रामणीस्तस्मान् मारुतो भवत्येतद्वा ऽअस्यैकᳫं रत्नं यद् ग्रामणीस्तस्मा ऽएवैतेन सूयते तᳫं स्व मनपक्रमिणं कुरुते तस्य पृषन् गौर्दक्षिणा भूमा वा ऽएतद्रूपाणां यत् पृषतो गोर्व्विशो वै मरुतो भूमो वै व्विट् तस्मात् पृषन् गौर्दक्षिणा † ॥ ६ ॥

अथ श्वो भूते। क्षत्तुर्गृहान् परेत्य सावित्रं द्वादशकपालं व्वाष्टाकपालं वा पुरोडाशं निर्व्वपति सविता वै देवानां प्रसविता प्रसविता वै क्षत्ता तस्मात् सावित्रो भवत्येतद्वा ऽअस्यैकᳫं रत्नं यत् क्षत्ता तस्मा ऽएवैतेन सूयते तᳫं स्व मनपक्रमिणं कुरुते तस्य श्येतो ऽनड्वान् दक्षिणैष वै सविता य एष तपत्येति वा ऽएष एत्यनड्वान्

---

* 'यदश्वः'—इति क, 'यदश्वः'—इति ग, 'यदश्वः'—इति घ।

† 'दक्षिणा'—इति क, ख।

युक्तास्तद्यच्छ्येतो भवति श्येत इव ह्येष उद्यंश्चास्तं च यन् भवति तस्माच्छ्येतो ऽनड्वान् दक्षिणा * ॥ ७ ॥

अथ श्वो भूते । सङ्ग्रहीतुर्गृहान् परेत्याश्विनं द्विकपालं पुरोडाशं निर्व्वपति सयोनी वा ऽअश्विनौ सयोनी सव्यष्टृसारथी समानꣳ हि रथमधितिष्ठतस्तस्मादाश्विनो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यत् सङ्ग्रहीता तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य यमौ गावौ दक्षिणा तौ हि सयोनी यद्यमौ यदि यमौ न विन्देदप्यनूचीनगर्भाविव गावौ दक्षिणा स्यातां ता ऽउ ह्यपि समानयोनी ॥ ८ ॥

अथ श्वो भूते । भागदुघस्य गृहान् परेत्य पौष्णं चरुं निर्व्वपति पूषा वै देवानां भागदुघ एष वा ऽएतस्य भागदुघो भवति तस्मात् पौष्णो भवत्येतद्वा ऽअस्यैकꣳ रत्नं यद्भागदुघस्तस्मा ऽएवैतेन सूयते तꣳ स्वमनपक्रमिणं कुरुते तस्य

---

* 'दक्षिणा'—इति क, ख ।

श्यामो गौर्द्दक्षिणा तस्यासावेव बन्धुर्यो ऽसौ त्रिषंयुक्तेषु * ॥ ९ ॥

अथ श्वो भूते † । अक्षावापस्य च गृहेभ्यो गोविकर्त्तस्य च गवेधुकाः सम्भृत्य सूयमानस्य गृहे रौद्रं गावेधुकं चरुं निर्व्वपति ते वा ऽएते द्वे सती ते ऽएकं करोति सम्पदः कामाय तद्यदेतेन यजते यां वा ऽइमाᳬ सभायां घ्नन्ति रुद्रो हैता मभिमन्यते ऽग्निर्व्वै रुद्रो ऽधिदेवनं वा ऽअग्निस्तस्यैते ऽअङ्गारा यदक्षास्त मेवैतेन प्रीणाति तस्य ह वा ऽएषानुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वैतदेवं वेदैतद्वा ऽअस्यैकᳬ रत्नं यदक्षावापश्च गोविकर्त्तश्च ताभ्या मेवैतेन सूयते तौ स्वावनपक्रमिणौ कुरुते तस्य द्विरूपो गौर्द्दक्षिणा शितिबाहुर्व्वा शितिवालो वासिर्नखरो व्वालदाम्नाक्षावपनं प्रबद्ध मेतद् हि तयोर्भवति ‡ ॥ १० ॥

* 'त्रिषंयुक्तेषु'—इति क, 'त्रिषंयुक्तेषु'—इति ग, 'त्रिषंयुक्तेषु'—इति घ ।

† 'भूते'—इति क, ख । 'भूते'—इति ग ।

‡ 'भुवति'—इति क ।

अथ श्वो भूते। पालागलस्य गृहान् परेत्य चतुर्गृहीत माज्यं गृहीत्वाध्वन माज्यं जुहोति जुषाणो ऽध्वाज्यस्य वेतु स्वाहेति प्रहेयो वै पालागलो ऽध्वानं वै प्रहित एति तस्मादध्वन माज्यं जुहोत्येतद्वा ऽअस्यैकᳪ रत्नं यत् पालागलस्तस्मा ऽएवैतेन सूयते तᳪ स्व मनपक्रमिणं कुरुते तस्य दक्षिणा प्युक्षावेष्टितं धनुश्चर्ममया वाणवन्तो लोहित उष्णीष एतदु हि तस्य भवति ॥ ११ ॥

तानि वा ऽएतानि *। एकादश रत्नानि सम्पादयत्येकादशाक्षरा वै त्रिष्टुब् वीर्यं त्रिष्टुब् वीर्य मेवैतद्रत्नान्यभिसम्पादयति तद्यद्रत्निनाᳪ हविर्भिर्यजत ऽएतेषां वै राजा भवति तेभ्य एवैतेन सूयते तान्स्वाननपक्रमिणः कुरुते † ॥ १२ ॥

अथ श्वो भूते। परिवृक्त्यै गृहान् परेत्य नैर्ऋतं चरुं निर्वपति या वा अपुत्रा पत्नी

* 'एतानि'—इति ग, 'एमानि'—इति घ।

† 'कुरुते'—इति ग, घ।

सा परिवृक्ती स कृष्णानां व्रीहीणां नखैर्निर्भिद्य तण्डुलान्नैर्ऋतं चरुꣳ श्रपयति स जुहोत्येष ते निर्ऋते भागस्तं जुषस्व स्वाहेति या वा ऽअपुत्रा पत्नी सा निर्ऋतिगृहीता तद्यदेवास्या ऽअत्र नैर्ऋतꣳ रूपं तदेवैतच्छमयति तथो हैनꣳ सूयमानं निर्ऋतिर्न गृह्णाति तस्य दक्षिणा कृष्णा गौः परिमूर्णी पर्यारिणी सा ह्यपि निर्ऋतिगृहीता तामाह मा मे ऽद्येशायां वात्सीदिति तत् पाप्मानमपादत्ते ॥ १३ ॥ ५ ॥

॥ इति द्वितीयप्रपाठके पञ्चमं ब्राह्मणम् [३.१.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

तृतीयाध्याये * प्रथमब्राह्मणे द्वादश रत्नहवींष्युदितं क्रमेण कर्त्तव्यान्युच्यन्ते †। अत्र कात्यायनो नैर्ऋतहविषा द्वादश हवींषीति सूत्रितवान्— "द्वादशोत्तराणि रत्नहवींषि, प्रतिगृह

* एतत् पदं नास्ति क-पुस्तके ।

† "रत्निनामेतानि हवींषि भवन्ति, एते वै राष्ट्रस्य प्रदातारः"—इत्यादि तै० ब्रा० १. ७. ३ द्रष्टव्यम् ।

मेकैकं स्वः स्वः, समारूढेऽग्नौ निर्मथिते ऽग्नये ऽनीकवते"— इत्यादि *। तत्र प्रथमं हविर्विधत्ते— "अरण्योरग्नी इति। 'अग्नी' गार्हपत्याहवनीयौ 'अरण्योः' पृथक् पृथक् 'समारोप्य' † प्रतिदिवसं तत्तद्गृहं गत्वा तत्र तत्र निर्मथ्य यष्टव्य मिति सर्वेष्टिसाधारण मिदम् ‡।

'सेनान्यः' सेनापतेः 'गृहान्' 'परेत्य' प्रथमं गत्वा 'अनीकवते' अनीकवद्गुणकाय 'अग्नये' अष्टाकपालेन पुरोडाशेन प्रचरेत्। सेनानीगृहे अनीकवद्गुणकाग्निदेवत्यहविरनुष्ठाने कारण माह— "अग्निर्वा इति। देवानाम् 'अनीकं' मुखम् 'अग्निः', 'सेनायाः' 'अनीकं' मुखं 'सेनानीः'। अस्य रत्नहविष्ट्व मुपपादयितु माह— "एतद्वा इति। "सेनानीरिति। 'एतत्' खलु 'अस्य' राज्ञो यजमानस्य 'एकं' 'रत्नं' रत्नवत् प्रशस्तं गवेषणीयं वस्तु, 'एतेन' तस्य गृहेऽनुष्ठितेनाग्नेययागेन 'तस्मै' सेनान्ये 'सूयते', तेनानुज्ञायत इत्यर्थः। तद्गृहगमनेन 'तं' सेनान्यं 'स्वम्' आत्मीयम् 'अनपक्रमिणम्' अनतिलङ्घिनं कृतवान् भवतीति। एव मुत्तरत्रापि व्याख्येयम् §।

दक्षिणां विधत्ते— "तस्य हिरण्य मिति ‖। 'तस्य' अग्निदेवताकस्य यागस्य अग्निरेतोरूपं 'हिरण्यं' दक्षिणात्वेन युक्त मित्यर्थः। हिरण्यस्याग्निरेतस्त्व माम्नायते— "आपो वरु-

---

* का० श्रौ० सू० १५. ३. १, २, ३।

† 'संरोप्य'—इति ख। 'समारोह्य'—इति मूलपाठः।

‡ इहैवानुपदवक्ष्यमाणानां सर्वत्रैवेवं बोध्य मिति भावः।

§ तै० सं० १. ८. ६. ४ विशेषत आम्नातम्।

‖ का० श्रौ० सू० १५. ३, १७।

ख्य पत्नय आसन्, ता अग्निरभ्यध्यायत्, ताः समभवत्, तस्य रेतः परापतत्, तद्धिरण्य मभवत्"–इति * ॥ १ ॥

द्वितीयदिवसेऽनुष्ठेयं रत्नहविः विधत्ते— "अथ श्वोभूत इति। पुरोहितस्य गृहे बार्हस्पत्यचरुप्रचारे † उपपत्ति माह— "बृहस्पतिर्वै देवाना मिति। बृहस्पतेर्दैवपुरोहितत्वात् तद्देवत्यो यागः पुरोहितगृहे कर्त्तु मुचित इत्यर्थः। "एतद्वा इत्यादि, गतम् ॥

दक्षिणां विधत्ते— "तस्य शितिपृष्ठ इति। श्वेतपृष्ठः। तत् प्रशंसति—"ऊर्द्ध्वे ति। 'उर्द्धा दिक्' बृहस्पतिदेवताका, तस्या उपरिभागे 'अर्यम्णः' सूर्यस्य 'एषः' परिदृश्यमानः 'पन्थाः' मार्गः। स च किरणसम्बन्धात् श्वेतः। अतो बृहस्पतियागदक्षिणाभूतस्य गोः श्वेतपृष्ठत्वं युक्तम् ‡ ॥ २ ॥

तृतीयदिवसे कर्त्तव्यं यागं विधत्ते— "अथ श्वोभूते इति। "सूयमानस्येति। सुन्वतो यजमानस्यैव 'गृहे'। अत एवास्मिन् पर्याये एतद्वा अस्यैकं रत्नम्"–इत्यादिवाक्यानुपन्यासः §। सूयमानपदं यजमानवाचक मित्यभिप्रेत्य सूत्रकृता यजमानपद मेवोक्तम्— "ऐन्द्रो यजमानस्य"–इति ‖। "क्षत्रं वा इत्यादि।

---

* तै० ब्रा० १. १. ३. ८। "आपो ०—० परापतत्, तदिय मभवत्"–इति तु तै० सं० ५. ५. ४. १।

† "बार्हस्पत्यश्चरुः पुरोहितस्य"–इति का० श्रौ० सू० १५. ३. ४।

‡ का० श्रौ० सू० १५. ३. १८। तै० सं० १. ८. ६. १।

§ अस्मिन्नेव ब्राह्मणे पुरस्तात् (१६३पृ० ५पं०) द्रष्टव्यम्।

‖ का० श्रौ० सू० १५. ३. ५। 'ऐन्द्र एकादशकपालः'—इत्यादि कः। तै० सं० १. ८. ६. २।

इन्द्रयजमानयोरेकजात्यभिसम्बन्धात् यजमानस्य गृहे ऐन्द्रस्य हविषो निर्वापो युक्तः ॥

दक्षिणां विधत्ते— "तस्य ऋषभ इति *। "स ह्यैन्द्र इति। "माध्यन्दिनः"-इति † प्रागाम्नातत्वात् तद्दत ऋषभस्येन्द्रत्वं प्रसिद्ध मिति 'हि'-शब्दस्यार्थः ॥ ३ ॥

चतुर्थदिवसकर्त्तव्या मिष्टिं विधत्ते— "अथ श्वोभूत इति। "महिष्या इति ‡। कृताभिषिक्तस्य राज्ञो मुख्या स्त्री महिषी; तस्या गृहे। षष्ठ्यर्थे चतुर्थी। "इयं वै पृथिवीति। देवानां हविस्सम्पादनद्वारा भोग्यत्वात् पृथिव्यात्मिकाया अदितेर्देवपत्नीत्वम्। "तस्मादिति। यस्माददितेर्देवपत्नीत्वम्, 'तस्मात्' तद्देवत्यहविषः पत्नीगृहे निर्वापो युक्त इत्यर्थः ॥

दक्षिणां विधत्ते— "तस्यै धेनुरिति §। 'तस्यै' अदित्यै, तद्देवत्यस्य यागस्येत्यर्थः। "धेनुरिव वा इति। यथा 'धेनुः' क्षीरादिरूपान् सर्वान् कामान् दोग्धि, एवम् 'इयं' पृथिव्यात्मिका अदितिः 'मनुष्येभ्यः' सर्वान् 'कामान्' 'दुहे' दुग्धे। दुहेः "लोपस्त आत्मनेपदेषु"-इति ‖ त-लोपः। 'धेनुः' हि 'माता' प्रत्यग्रप्रसूतत्वात्, तथा 'इयं' भूमिरपि 'मातेव' 'मनुष्यान्' 'बिभर्त्ति' पोषयति। 'तस्मात्' उदीरितरीत्या अदितेर्द्धेनोः, तत्सम्बन्धात् आदित्यचरोः धेनुर्दक्षिणात्वेन युज्यते ¶ ॥ ४ ॥

---

* का० श्रौ० सू० १५. ३. १६।

† पुरस्तात् (१२५पृ० २पं०) द्रष्टव्यम्।

‡ का० श्रौ० सू० १५. ३. १९।

§ का० श्रौ० सू० १५. ३. २०। ‖ पा० सू० ७. १. ४१।

¶ तै० सं० १. ८. ६. ३ अप्येव मेव।

पञ्चमदिवसे कर्त्तव्या मिष्टिं विधत्ते— × × × ॥ ५ * ॥

[ षष्ठदिवसे कर्त्तव्या मिष्टिं विधत्ते † — ] "अथ श्वोभूत इति। 'ग्रामण्यः' ग्रामं नयतीति ग्रामणीः, वैश्यानां मध्यस्थः तस्य 'गृहान्'। मरुतां सप्तगणात्मकत्वात् तद्देवत्यहविषः सप्तसु कपालेषु श्रपणं युक्त मित्याह— "सप्तकपाल मिति। ग्रामणी-गृहे मारुतकरण मुभयोर्वैश्यत्वनिबन्धनकृत मित्याह— "विशो वा इति। 'विशः' प्रजाः देवाना मिति शेषः ॥

मारुतस्य दक्षिणां विधत्ते— "तस्य पृषन्निति ‡। 'पृषन्' विन्दुमान्, श्वेतरक्तकृष्णविन्दुयुत इत्यर्थः। पृषत्त्वं प्रशंसति— "भूमा वा इति। 'पृषतः'-इति षष्ठ्यन्तं गोविशेषणम्। पृषतो गोर्यदस्ति एतद् रूपाणां भूमा इति पदयोजना। तादृशे गवि नानाविधवर्णानां सद्भावात् रूपबाहुल्य मित्यर्थः। भूमान मेवावलम्ब्य विचित्रवर्णस्य गोर्मारुतहविर्योग्यता माह— "विशो वा इति। "भूमो वा इति। भूमा उ इति। भूमरूपेव खलु वैश्यजातिः ॥ ६ ॥

सप्तमदिवसकर्त्तव्या मिष्टिं विधत्ते— "अथ श्वोभूत इति § ।

---

* मत्सम्पादितानां चतुर्णां भाष्यपुस्तकानां मेकतमेऽपि इत उत्तरच पाठाः पञ्चमकाण्डीयाख्यग्रन्थो नावलोक्यते; लिपिकरप्रमाद एवात्र हेतुः स्यात्।

† का० श्रौ० सू० १५. १. ८ सूत्रे षष्ठदिवसे ग्रामण्यो विहित इतीहैवावतराणिका पूर्वपूर्ववत्तया सम्भाव्यते; आदर्शेषु तु नास्ति।

‡ का० श्रौ० सू० १५. ३. २२। 'पृषन् = विचित्रो गौः षण्ढ'— इति च तत्र कर्कः। तै० सं० १. ८. ६. ७।

§ का० श्रौ० सू० १५. ३. ६।

"क्षत्तुर्गृहानिति । क्षत्ता नाम यष्टिहस्तोऽन्तःपु सर्वेषां नियन्ता, प्रतिहारापरपर्यायः * । 'सावित्रं' देवत्यम् । क्षत्तुः सवितुश्च प्रसवितृत्वं साधारणो धर्म । "सविता वै देवाना मिति ॥

दक्षिणां विधत्ते—"तस्य श्वेत इति । 'श्वेतः' वर्णः 'अनड्वान्' ‡। श्वेतस्यानडुहः सवितृसम्बन्ध "एष वा इति । 'यः' 'एषः' सूर्यः 'तपति', 'र खलु 'सविता', स च सूर्यः, 'एति' प्रकर्षप्रक जगन्निर्वाहं कुर्वन् सर्वदा सञ्चरति; 'अनड्वान्' अ रथवहनादौ 'युक्तः' सन् सर्वत्र गच्छति, अतो गन्तृत सम्बन्धहेतुः साधारणो धर्मः । श्वेतत्व मनूद्य स्तौति— इति । 'एषः' सूर्यात्मकः सविता 'उद्यन्' उदयन् ' च' उदयास्तकालेषु 'श्येतः' शुक्लो वर्णः 'इव हि भवति' ।

अष्टमदिवसकर्त्तव्या मिष्टिं विधत्ते—"अथ श्वोभू "सङ्ग्रहीतुर्गृहानिति § । सङ्ग्रहीता नाम रथयोजयिता । नम्' अश्विदेवत्यम् । सङ्ग्रहीतृगृहे आश्विनहविषो कारण माह—"सयोनी इति । 'हि' यस्मात् 'सव्यष्ठ सव्यष्ठृपदेन सङ्ग्रहीतोच्यते, स च सारथिश्च 'सयोनी' स्थानी, एवम् 'अश्विनौ' अपि 'सयोनी' सहोत्पन्नं

* 'मन्त्रीत्येके । मन्त्री दूतो वा । क्षत्रियायां शू क्षत्ता'—इत्यादिः कातीयवृत्तिग्रन्थः ।

† अत्र सर्वत्रैव श्येतेति मूलपाठः श्वेतेति भाष्यस्थे

‡ का॰ श्रौ॰ सू॰ १५. ३. २३ । तै॰ सं॰ १. ८. ६.

§ का॰ श्रौ॰ सू॰ १५. ३. १० । तै॰ सं॰ १. ८. ६. ६ ।

हविषी 'समानम्' एकं 'रथम्' 'अधितिष्ठतः' ; "युवं कवी ष्ठः पर्यश्विना रथम्"–इति श्रवणात् * ॥

आश्विनस्य हविषो योग्यदक्षिणां विधत्ते— "तस्य यमाविति। यमौ सहैवैकस्या मातुर्गर्भादुत्पन्नौ †। यमयोरश्विसाम्य माह— "तौ हि सयोनी इति। यमयोरलाभे पक्षान्तर माह— "यदि यमाविति। 'अनूचीनगर्भौ' अनुक्रमेण पौर्वापर्येण जातगर्भौ। तयोरपि समानयोनित्वं दर्शयति— "ता उ हीति। यौ क्रमेणोत्पन्नौ 'तौ उ अपि हि' 'समानयोनौ' मध्ये गर्भान्तरेणाव्यवहितत्वात् ‡ ॥ ८ ॥

नवमदिवसकर्त्तव्या मिष्टिं विधत्ते— "अथ श्वोभूत इति। "भागदुघस्य गृहानिति §। यो राज्ञः प्राप्यं ‖ षष्ठं भागं प्रजाभ्यो गृहीत्वा राज्ञे दोग्धि प्रयच्छति, स भागदुघः ¶। "पूषा वा इति। 'पूषा' नाम मार्गसंरक्षको देवः, 'देवानां' 'भागदुघः' भागं दोग्धि ; स हि यजमानदत्तानि हवींषि मार्गे रक्षोभ्यः संरक्ष्य तान् ** देवान् गमयतीत्यर्थः †† ॥

पौष्णः चरुयागे श्यामवर्णं गां दक्षिणां विधत्ते— "तस्य

---

* ऋ० सं० १०. ४०. ६।

† का० श्रौ० सू० १५. ३. २४। 'यमलजौ द्वौ गावौ'—इति कर्कः।

‡ का० श्रौ० सू० १५. ३. २५।

§ का० श्रौ० सू० १५. ३. ११।

‖ 'प्राप्तं'—इति च, ज।

¶ 'भागदुघो भोजयिता। परिवेष्टा, भाग मंशं दोग्धीति इति च का० टी०।    ** 'तांस्तान्'—इति ज।

†† इहैव पुरस्तात् २. ५. ८ (१५४पृ० ८पं) द्रष्टव्यम्।

श्याम इति *। श्यामत्वस्तावक मतिदिशति— "तस्यासा-विति। 'बन्धुः' वाक्यशेषः। कः पुनरसाविति स आह— "यो ऽसौ त्रिषंयुक्तेष्विति। त्रिषंयुक्तानि उक्तानि तत्र द्वितीये, पौष्णचरोर्दक्षिणात्वेन विहितस्य गोः श्यामत्वस्तावकः ; "स हि पौष्णो यच्छ्यामो द्वे वै श्यामस्य रूपे इत्यादिः † यो वाक्यशेषः, सोऽत्रापि समान इत्यर्थः॥ ८॥

यजमानगृहे कर्त्तव्यं दशमं रत्नहविर्विधत्ते— "अथ श्वो भूत इति ‡। 'अक्षावापः नाम अक्षाणां वेप्ता, अक्षगोप्ता वा द्यूतकारः; 'गोविकर्त्तः' मृगयासहायभूतो गो-हिंसको व्याधः ; तयोरुभयोर्गृहेभ्यो 'गवीधुकाः' § आरण्यगोधूमान् 'सम्भृत्य' तैः रुद्रदेवत्यं चरुं 'सूयमानस्य' यजमानस्य 'गृहे' निर्वपेत् ॥। उभयोर्गृहेभ्यो गवीधुकानां युगपत् सम्भरणं प्रशंसति— "ते वा इति। अक्षावाप-गोविकर्त्तरूपयोर्द्वयोः सतोरनयोरेकत्वकरणं सम्पद्धेतुरित्यर्थः। 'सम्पदः कामाय' सम्पदभिलाषसिद्ध्यर्थ मिति। अक्षावाप-गोविकर्त्तसम्भृतैरेवा-रण्यगोधूमैः रौद्रश्चरुः कर्त्तव्य इत्यत्रोपपत्ति माह— "यां वा

---

* का० श्रौ० सू० १५. ३. ११। तै० सं० १. ८. ६. १०।

† इहैव पुरस्तात् २. ५. ८ ( पृ०१५४ १२पं० ) द्रष्टव्यम्।

‡ तै० सं० १. ८. ६. ११।

§ 'गवेधुकाः'—इति मूलपाठः।

॥ 'द्यूतकारकः'—इति, 'द्यूताध्यक्षः'—इति च, एवं 'गोविकर्त्तः कर्षुकः अथवा गोहिंसको व्याधः'—इति च, तथा 'गवेधुकाव्रीहि-मध्ये तृणविशेषे प्रद्धाकाराणि गोधूमप्रायाणि फलानि कसेया-लोक-प्रसिद्धानि'—इति चैतत् सर्वं का० श्रौ० १५. ३. १२ सूत्रव्याख्यादिषु।

इमा मिति। 'सभायां' सभास्थले द्यूतस्थाने 'याम् इमाम्' पणत्वेन कृतां गां 'घ्नन्ति' कितवाः *। अत एव चतुर्थाध्याये आम्नास्यते— "एतेष्वक्षेष्वाह गां दीव्यध्व मिति"-इति †। तत्र सूत्रम्— "गा मस्याग्नीध्र घ्नन्ति"-इति ‡। तत्र ताम् 'एतां' 'रुद्रः अभिमन्यते'; क्रूरकर्मत्वात्। स तत्र रुद्रः परम्परया § अधिदैवतात्मकः ‖ इत्याह— "अग्निर्वा इति। अग्निरेव खलु रोदनाद्रुद्रनामा सम्पन्नः। अतएव तैत्तिरीयके अग्निं प्रस्तुत्याम्नातम्— "सोऽरोदीद् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्"-इति ¶। स च 'अग्निः' 'अधिदेवनं' द्यूताधिकरणं स्थानम्, अधिदेवनात्मकस्याग्नेः अक्षावापाङ्गाराः 'त मेव' अधिदेवनात्मकं रुद्रम् 'एतेन' अक्षावापगृहसम्भृतगवीधुक-निष्पन्नहविषा 'प्रीणाति' तर्पयति। "तस्य ह वेत्यादि। 'यो राजसूयेन यजते', 'यो वा' 'एतत्' एतं राजसूयप्रयोगं 'वेद', 'तस्य गृहेषु' 'अनुमता' अध्वर्युप्रभृतिभिरनुज्ञाता सती 'गौः हन्यते' गोविकर्त्तेन हिंस्यते, अतो गोविकर्त्तगृहादानीतगवीधुका हननाभिमानिनो रुद्रस्य हविष्टे योग्या इत्यर्थः॥

तस्य रौद्रहविषो दक्षिणां विधत्ते— "तस्य द्विरूप इति **। 'शितिबाहुः' श्वेतबाहुः 'वा' भवेत्, श्वेतवालो 'वा'; वाशी

* ४. ५. २३ द्रष्टव्यम्।

† उपरिष्टात् ४. ४. २३ द्रष्टव्यम् "गां दीव्यध्व मित्याह"-इति च का० श्रौ० सू० १५. ७. १७।

‡ का० श्रौ० सू० १५. ७. २०।

§ 'परम्परा'—इति च, ज। ‖ 'अधिदेवतात्मक'—इति च।

¶ तै० सं० १. ५. १. २। ** तै० सं० १. ८. ६. ११।

वाले वा श्वेतत्वम्, सर्वाङ्गे कृष्णवर्ण इति द्विरूपत्वम् ‌सरं विधत्ते— "असिरिति। 'नखरो' निःकोषः कृपाणः। 'वालदाम्ना रोमस्रजा 'प्रबद्धम्' 'अक्षावपन अक्षा उप्यन्ते अस्मिन्निति 'अक्षावपनम्' अक्षस्थानावप एवं गौः, असिः, अक्षावपन मिति त्रीण्यपि दक्षिणेत्यर्थः। तथैव कात्यायनः— "त्रिदक्षिणो रौद्र बाहुश्चितिवालयो रन्यतरः, असिर्नखरो, वालदामव वपनम्"—इति *। किमर्थं नखरोमाक्षपात्रद्वयं दी च्यते? इति। तत्राह— "एतद्वै द्वीति। 'तयोः' गोविकर्त्तयोः तद्द्वयं स्वं 'भवति' एकैकस्यैकैक अतोऽत्र तदुभयसम्बन्धात् तद् द्वयं दक्षिणात्वेन इत्यर्थः ॥ १० ॥

दूतगृहे कर्त्तव्य माज्यहोमरूप मेकादशं रत्नहवि "अथेति। पालागलो नाम दूतः। तथैव कात्याय गलस्थाने दूतशब्दं प्रयुक्तवान्— "चतुर्गृहीतं जुषाणो वेत्त्विति दूतस्य"—इति †। आपस्तम्बेन तु यूपवि व्याख्यातः— "अध्वने स्वाहेति पालागलस्य गृहे दूतं ब्रुवते"—इति ‡। 'पालागलम् अनृतवादिनं ब्रुवते आचार्या इत्यर्थः। अध्वदेवत्यश्चतुर्गृहीताज्यहो दशं हविरित्यर्थः ॥

मन्त्रस्यार्थः;— 'आज्यं जुषाणः' आज्यभागं

* का० श्रौ० सू० १५. ३. २७—३०।

† का० श्रौ० सू० १५. ३. १३।

‡ आप० श्रौ० सू० १८. १०. २५। तत्र 'पालाकलस्य'—इति

'अध्वा' देवता 'आज्यस्य वेतु' आज्यं पिबतु। 'स्वाहा' सुहुतमस्तु 'इति'। दूतगृहेऽध्वदेवत्यहोमस्य उपपत्ति माह— "प्रहेय इति। 'पालागलः' दूतः 'प्रहेयः' राज्ञा प्रेष्यः, प्रस्थापनीयः। प्रेष्यत्व मेवाह— "अध्वान मिति। प्रहितः प्रेषितः प्रस्थापितः सन् अध्वानं गच्छति, अतोऽध्वसम्बन्धात् तद्गृहे होमः कार्यं इत्यर्थः ॥

तस्य होमस्य दक्षिणां विधत्ते— "तस्य दक्षिणेति। 'उक्षा-वेष्टितम्' 'उक्षा'-शब्देन * स्नाय्वभिधीयते, उक्षविकारैः स्नायुभिः 'वेष्टितं' स्यूतं 'धनुः', 'चर्ममयाः वाणवन्तः' इषुधयः, 'लोहितः' लोहितवर्णः 'उष्णीषः' शिरोवेष्टनम्। एतत् सर्वं दक्षिणेत्याह— "एतद्धु हीति। एतावदेव हि 'तस्य' दूतस्य स्वं 'भवति' † ॥ ११ ॥

एतेषां रत्नहविषाम् एकादश सङ्ख्यां प्रशंसति— "तानि वा एतानीति। सङ्ख्यासाम्यात् त्रिष्टुप्त्वम्। त्रिष्टुभो वीर्यत्व मिन्द्रेण सहोत्पत्तेरित्यवगन्तव्यम्। 'एतत्' एतेन रत्नहविरनुष्ठानेन यजमाने वीर्यं मेव सम्पादितवान् भवति। प्रकारान्तरेण तदेव प्रशंसति— "तद्यदिति। यथोक्तसेनानीपुरोहितमहिष्यादयो रत्निनः; तदभिमानिदेवतानां प्रियार्थे तानि हवींषि; अतस्तद्गृहेष्वेव कर्त्ता गत्वा निर्वपेत्। एतैः

---

* 'उक्षशब्देन'—इति ग। 'प्यृक्षा वेष्टितत्'—इति का० श्रौ० सू० १५. ३. ३१। 'प्युक्षाशब्देन स्नायुरभिधीयते, अजगरचर्मेत्यपरे'—इति कर्कः। 'प्युक्षावेष्टितं कोशकारवेष्टितम् ( कोशकारः = धनुषः कोठीरचयिता ); मयूरपुच्छवेष्टित मिति केचित्'—इति का० श्रौ० सू० वृत्त्यन्तरम्।

† का० श्रौ० सू० १५. ३. ३१, ३२, ३३।

'रत्निनां' हविर्भिर्यागेन सेनानी प्रभृतीनां रत्नानां स्वयं 'राजा' भवेत्। 'तेभ्यः' तत्सङ्ग्रहार्थम् 'एतेन' रत्नहविरनुष्ठानेन 'सूयते' प्रेर्यते ॥ १२ ॥

परिवृक्तिगृहे कर्त्तव्यं नैर्ऋतहविर्विधत्ते— "अथ श्वो भूत इति *। 'परिवृक्ति'-शब्दस्यार्थं माह— "या वा इति। 'अपुत्रा' राजपत्नी केवलं भोगार्था परिवृक्तिः †। हविषो द्रव्यं विदधच्चोदकप्राप्त मवघातं निषेधति— "स कृष्णाना मिति। नखैर्निर्भिन्नानां कृष्णव्रीहीणां तण्डुलैः नैर्ऋतं चरुं निर्वपेत्। हवनं समन्त्रकं विधत्ते— "स जुहोतीति। जुहोतिचोदितत्वात् स्वाहाकारप्रदानत्वाच्चायं होमो दर्विहोमः। कात्यायनेन तु पश्चान्तरं सूचितम्— "दर्विहोम एष ते निर्ऋत इति ‡ जुहोति, वषट्कृते वा"-इति §। परिवृक्तिगृहे नैर्ऋतचर्वनुष्ठानस्योपपत्ति माह— "या वा इति। अपुत्रा स्त्री न ह्येनेन ग्रसितवान् भवति ॥

तस्य दक्षिणां विधत्ते— "तस्य दक्षिणा कृष्णा गौरिति। 'परिमूर्णी'। "मुर्च्छा मोहसमुच्छ्राययोः" ‖। अस्मात् क्तिनि 'राल्लोपः'-इति ¶ छस्य लोपे, निष्ठा-नत्वे च कृते रूपम्। परिमूढा (अक्षमा **)। 'पर्यारिणी' परित आर्त्तिमती,

* तै० सं० १. ८. ६. ३।

† 'परिवृत्ता परिगत्ता निर्ऋत्या ईकारश्छान्दसः, पुत्रादिभिः परित्यक्ता'-इति का० श्रौ० १५. ३. १४ सू० टी० देव०।

‡ वा० सं० ६. ३५. १।

§ का० श्रौ० सू० १५. ३. १४. १५। ‖ भ्वा० प० ३० धा०।

¶ पा० सू० ६. ४. २१। ** इद मधिकं पदं ज पुस्तके।

व्याधिगृहीता केन चिदङ्गेन अपहृता वा 'कृष्णा गौः, दक्षिणा'। अत्र सूत्रम्— "कृष्णापरिमूर्ण्यपहृतोत्तमस्य"-इति * ॥

तैत्तिरीयके तु परिवृक्तिगृहकर्त्तव्यनैर्ऋतचरोः कृष्णा भग्नशृङ्गा गौर्दक्षिणात्वेन श्रुता— "नैर्ऋतं चरुं परिवृत्त्यै गृहे कृष्णानां व्रीहीणां नखनिर्भिन्नं कृष्णा कूटा दक्षिणा"-इति †। 'कूटा' भग्नशृङ्गा इति हि व्याख्यातम्। दक्षिणाभूताया गोर्नैर्ऋतचरुयोग्यता माह— "सा ह्यपीति। जीर्णा निवृत्तप्रसवा गौः निर्ऋतिगृहीता भवति ॥

इष्ट्यन्ते किञ्चित् कर्त्तव्यं विधत्ते— "तां माहेति। 'तां' परिवृक्तिम् 'आह' वदेत्। वाक्यस्याय मर्थः— 'अद्य' इदानीम् इतः परं 'मे' मम 'ईशायां' स्वाम्ये 'मा वात्सीः' मद्भोग्या मा भूरित्यर्थः ‡। वचनं स्तौति— "तदिति। निर्ऋतिगृहीतां परिवृक्तिं प्रति एतेन वचनेन 'पाप्मानम् एव' अपादत्ते' अपसारितवान् भवतीति ॥ १३ ॥ ५ [ ३. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये प्रथमं ब्राह्मणम् ॥

---

* का० श्रौ० सू० १५. ३. ३४।

† तै० सं० १. ८. ६. ३।

‡ "परिवृत्तिमाह मा मे ऽद्येशायां वात्सीरिति"—इति का० श्रौ० सू० १५. ३. ३५। 'ततश्चासौ ब्राह्मणगृहं प्रविशति तत्र राज्ञो न स्वाम्य मिति'—इति तत्र कर्कः।

(अथ द्वितीयं ब्राह्मणम्.)

उपरिष्टाद्रत्नानाꣳ सौमारौद्रेण यजते। स श्वेतायै श्वेतवत्सायै पयसि शृतो भवति तद्य-दुपरिष्टाद्रत्नानाꣳ सौमारौद्रेण यजते * ॥ १ ॥

स्वर्भानुर्ह वा ऽआसुरः †। सूर्यं तमसा विव्याध स तमसा विद्धो न व्यरोचत तस्य सोमारुद्रा-वेवैतत्तमो ऽपाहताꣳ स एषो ऽपहतपाप्मा तपति तथो ऽएवैष एतत्तमः प्रविशत्येतं वा तमः प्रविशति यदयज्ञियान् यज्ञेन प्रसजत्ययज्ञियान्वा ऽएतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वत् तस्य सोमा-रुद्रावेवैतत्तमो ऽपहतः सो ऽपहतपाप्मैव दीक्षते तद्यत्कृतायै श्वेतवत्सायै पयसि शृतो भवति कृष्णं वै तमस्तत्तमो ऽपहन्ति तस्यैषैव श्वेता श्वेतवत्सा दक्षिणा ॥ २ ॥

स हैतेनापि यजेत। यो ऽलं यशसे सन्न यशो भवति यो वा ऽअनूचानः सो ऽलं यशसे सन्न यशो भवति यो न यशो भवति स

* 'यजते'—इति ग। 'यजते'—इति घ।

† 'आसुरः'—इति ग।

तमसा वै स तत् प्रावृतो भवति तस्य सोमारुद्रावेवैतत्तमोऽपहतः सोऽपहतपाप्मा ज्योतिरिव श्रिया यशसा भवति * ॥ ३ ॥

अथ मैत्राबार्हस्पत्यं चरुं निर्व्वपति। ह्वलति वाऽएष यो यज्ञपथादेत्येति वाऽएष यज्ञपथाद्यदयज्ञियान्यज्ञेन प्रसजत्ययज्ञियान्वाऽएतद्यज्ञेन प्रसजति शूद्रांस्त्वद्यांस्त्वन्मित्रावृहस्पती वै यज्ञपथो ब्रह्म हि मित्रो ब्रह्म हि यज्ञो ब्रह्म हि बृहस्पतिर्ब्रह्म हि यज्ञस्तत् पुनर्यज्ञपथमपिपद्यते सोऽपि पद्यैव यज्ञपथं दीक्षते तस्मान् मैत्राबार्हस्पत्यं चरुं निर्व्वपति ॥ ४ ॥

तस्यावृत् †। या स्वयम्प्रशीर्णाश्वत्थी शाखा प्राची वोदीची वा भवति तस्यै मैत्रं पात्रं करोति व्वरुण्या वाऽएषा या परशुवृक्णाथैषा मैत्री या स्वयम्प्रशीर्णा तस्मात् स्वयम्प्रशीर्णायै शाखायै मैत्रं पात्रं करोति ‡ ॥ ५ ॥

अथातच्य दधि। व्विनाटऽआसिच्य रथं

---

* 'भवति'—इति क।

† '०वृत्'—इति ग। 'वृत'—इति घ। ‡ 'करोति'—इति क।

युक्त्वावध्य देदीयित वा ऽआह तद्यत् स्वय मुदितं नवनीतं तदाज्यं भवति व्वरुण्यं वा ऽएतद्यन् मथित मथैतन् मैत्रं यत् स्वय मुदितं तस्मात् स्वय मुदित माज्यं भवति ॥ ६ ॥

द्वेधा तण्डुलान् कुर्व्वन्ति । स ये ऽणीयाꣳसः परिभिन्नास्ते बार्हस्पत्या ऽअथ ये स्थवीयाꣳसो ऽपरिभिन्नास्ते मैत्रा न वै मित्रः कं चन हिनस्ति न मित्रं कश्चन हिनस्ति नैनं कुशो न कण्टको व्विभिनत्ति नास्य व्रणश्चनास्ति सर्वस्य ह्येव मित्रो मित्रम् * ॥ ७ ॥

अथ बार्हस्पत्यं चरु मधिश्रयति । तं मैत्रेण पात्रेणापिदधाति तदाज्य मानयति तत्तण्डुलाना-वपति स एष ऊष्मणैव श्रप्यते व्वरुण्यो वा ऽएष यो ऽग्निना शृतो ऽथैष मैत्रो य ऊष्मणा शृतस्तस्मादूष्मणा शृतो भवति तयोरुभयोरवदायाह मित्रावृहस्पतिभ्या मनुब्रूहीत्याश्राव्याह मित्रावृहस्पती यजेति व्वषट्कृते जुहोति ॥ ८ ॥ ३ ॥

॥ इति द्वितीयप्रपाठके षष्ठं ब्राह्मणम् [३.२.] ॥

* 'मित्रम्'—इति ग । 'मित्त्रम्'—इति घ ।

अथ सौमारौद्रयागं विधत्ते — 'उपरिष्टाद्रत्नाना मिति *। रत्नहविषा मुपरि ऊर्ध्वं सौमारौद्रयागः कर्त्तव्यः। स च कः? 'श्वेतवत्सायै श्वेतायै'। उभयत्र षष्ठ्यर्थे चतुर्थी। शुक्लवत्सायाः शुक्लाया गोः 'पयसि' 'शृतः' पक्वो 'भवति' ॥ १ ॥

रत्नहविर्भ्यो ऽनन्तरं विहितं सौमारौद्रयाग मनूद्याख्यायिकया प्रशंसति— "स्वर्भानुर्हेति। 'आसुरः' असुरपुत्रः 'स्वर्भानुः' 'सूर्यं' 'तमसा' 'विव्याध' आच्छादितवान्। 'सः' सूर्यः 'तमसा' 'विद्धः' आच्छादितः 'न व्यरोचत' नातिप्रकाशवान् जातः। 'तस्य' 'तत् तमः' 'सोमारुद्रौ एव' 'अपाहताम्' अपहतवन्तौ। तत आरभ्य सूर्यो निवृत्ततमस्कः सन् 'तपति' नभसि दीप्यते। इदानीं तदनुष्ठातुरपि तमसाच्छादन माह— "तथो एवैष इति। 'अयज्ञियान्' अयज्ञार्हान् सेनान्यादीन् 'यज्ञेन' 'प्रसजति' प्रसक्तान् तत्तद्यागानुष्ठानेन सम्बद्धान् करोतीति 'यत्' 'एतत्' एतेन 'एषः' अनुष्ठाता राजन्यः 'तथा उ' तथैव सूर्यवदेव 'तमः प्रविशति'। 'तमः वा' कर्त्तृ 'एतं' † सुन्वन्तं 'प्रविशति'। सेनान्यादीना मयज्ञीयत्वं प्रसिद्ध मित्याह— "अयज्ञियान् वा इति। ता मेव प्रसिद्धिं दर्शयति— "शूद्रानिति। 'त्वत्'-इति एकपर्यायः। एकदा 'शूद्रान्' सेनान्यादीन्, 'त्वत्' एकदा 'यान्' कांश्चन गोविकर्त्रादीन् हीनजातीनपि 'यज्ञे' 'प्रसजति'। तेन अयज्ञियसम्बन्धेन तमः प्रविशतीति अतः 'तस्य' यष्टुः तथाविधं तमः 'सोमारुद्रौ एव' 'एतत्' एतेन चरुणा प्रीणीतौ 'अपहतः' विनाशयतः। ततः पाप-

---

* का० श्रौ० सू० १५. ३. ३६। तै० सं० १. ८. ६. १४।

† 'एनं'—इति च, ज।

सोमासंसृष्टः सन् 'दीक्षते' दीक्षार्हो भवतीत्यर्थः। श्वेतापयसि श्रपणं प्रशंसति—"तद्यदिति। 'तद्' 'यत्' यदि, 'तमो नाम कृष्णं', श्वेतवत्सायाः श्वेतायाः शुक्लवर्णे 'पयसि' श्रपणेन कृष्णरूपं तमः अपसारितवान् भवतीत्यर्थः॥

यस्याः पयसि चरुः पक्वः, ता मेव दक्षिणात्वेन विधत्ते —"तस्यैषैवेति *॥ २॥

(प्रसङ्गात् †) फलान्तरायास्य होमस्य वाह्यप्रयोगं दर्शयति— "स हैतेनापीति। 'अपिः' भिन्नक्रमः। 'सोऽपि' 'एतेन' सोमारौद्रेण चरुणा 'यजेत'। स इत्युक्तं क इत्याह ‡ — 'यः' यज्ञियः पुरुषः 'यशसे' यशसां प्राप्तये 'अलं सन्' समर्थो योग्यो भवन्नपि 'अयशः' कीर्त्तिरहितः 'भवति'। यच्छब्दार्थं विशिनष्टि— "यो वा अनुचान इति। साङ्गवेदाध्यायी 'अनूचानः', 'सः' 'यशसे' 'अलं' योग्यो भवन्नपि 'अयशः' यशोरहितो 'भवति'। 'यः' तु यशोरहितः, 'सः' 'तमसा' 'प्रावृतः', 'तस्य' 'एतत्' एतेन हविषा 'सोमारुद्रौ एव' कीर्त्त्यभावरूपं 'तमः' 'अपहतः' § तं कीर्त्तिमन्तं कुरुत इत्यर्थः; 'सः' यजमानः अयशोरूपतमसा वियुक्तः सन्, ज्योतिरात्मको भूत्वा 'श्रिया' सम्पदा 'यशसा' चोपलक्षितो भवति ‖ ॥ ३॥

---

* का० श्रौ० सू० १५. ३. ३७।

† नास्त्येतत् पदं ज-पुस्तकादन्यत्र।

‡ 'सः कः?'—इत्येव ज। § 'अपहत्य'—इति ज।

‖ 'अनूचानोऽप्ययशो यजेत'—इति का० श्रौ० सू० १५. ३. ३८। इत उत्तरस्त्वेतत्र ३६ सूत्रम्— 'किलासा वाघन्तु'—इति। 'किलासशब्देन व्याधिविशेष उच्यते, तद्बाध मिच्छंश्च यजते। तु-शब्दश्चार्थे'—इति तद्वृत्तिः।

विधत्ते—"अथ मैत्रेति। 'मैत्राबार्हस्पत्यं' मित्राबृहस्पतिदेवत्यं 'चरु' निर्वपेत् *। देवतासम्बन्धं प्रशंसति— "छलति वा इति। अयज्ञियानां सेनान्यादीनां यज्ञे प्रसञ्जन मेव यज्ञपथादपगमन मित्यर्थः। मित्राबृहस्पत्योर्यज्ञपथात्मकत्वं निर्वक्ति— "ब्रह्म हि मित्र इति। 'ब्रह्म' वेदः, तदेव हि 'यज्ञः'; तत्साध्यत्वात् यज्ञ एव पन्थाः। "यज्ञपथ मिति। समासं विवक्षित्वा, तयोः परम्परया यज्ञरूपत्वोक्तिः। "तत् पुनर्यज्ञेति। 'तत्' तस्मात् यज्ञात्मकमित्राबृहस्पतिदेवत्ययागानुष्ठानात् पुनर्यज्ञपथं प्राप्य 'दीयते' दीक्षां कर्त्तुं मर्हतीत्यर्थः॥ ४॥

तस्य चरोरनुष्ठानप्रकारं वक्तुं प्रतिजानीते-- "तस्यावृदिति। 'तस्य' मैत्राबार्हस्पत्ययागस्य 'आवृत्' क्रिया, अनुष्ठानप्रकारो वक्ष्यत इति शेषः। 'स्वयम्प्रशीर्णा' स्वय मेव भग्ना, 'प्राची' प्रागायता, 'उदीची' उदगायता 'वा' या 'आश्वत्थी' अश्वत्थस्य 'शाखा' 'भवति', तस्याः शाखातः 'मैत्रं' मित्रसम्बन्धिचरुपाकार्थं 'पात्रं' कुर्यात् †। स्वयम्भग्नाया मैत्रत्वं व्यतिरेकपूर्व मुपपादयति-- "वरुण्या वा एषेति। 'या' शाखा 'परशुवृक्णा' छिन्ना अश्वनेन, सा हिंसितत्वाद् 'वरुण्या' वरुणदेवत्या; स्वयम्भग्नपत्रा तु मित्रार्हा, हिंसाविरहात्; सर्वसुहृत्त्वान्मित्रदेवस्य परशुच्छिन्नशाखानिर्मितं पात्र मयोग्य मित्यर्थः॥ ५॥

मैत्रचर्वर्थ माज्यकरणं विधत्ते— "अथातश्चेति। पयोविशेषस्तैत्तिरीयके श्रुतः— "श्वेतायै श्वेतवत्सायै दुग्धे स्वयं

* का० श्रौ० सू० १५. ३. ४०। तै० सं० १. ८. ६. १३।

† का० श्रौ० सू० १५. ३. ४१. क।

मूर्त्ते"–इति *। तादृशं पयः 'आतच्य' आतञ्चनद्रव्येण 'दधि' कृत्वा 'विनाटे' चर्ममये पात्रे दृतौ 'आसिच्य', 'रथं' 'युक्त्वा' अश्वैः संयोज्य, 'आबध्य' दधिपूर्णं विनाटं रथे सम्बध्य, 'देदीयितवै' रथधावनाय 'आह' नियुञ्जीत। दीतेर्वा गति-कर्मणो यङ्लुगन्तात् कृत्यार्थे तवैप्रत्ययः। तत्र रथधावनेन दध्नो यत् स्वय मुदितम् मथन मन्तरेण निष्पन्नं, नवनीतं, तदेव स्वय मेव विलीनं सत् आज्यं भवति †। आज्य-करणप्रकारस्त्वापस्तम्बेन विशद उक्तः— "श्वेतां श्वेतवत्सा मामस्ये दृतौ दुहन्ति, तत् स्वयं मूर्त्तं संयोगेन परिवहन्ति, तत् स्वयं मथित मातपे विषजन्ति, तत् स्वयं विलीन माज्यं भवति"–इति ‡। स्वयमुदिताज्यस्य मित्रयोग्यत्वं व्यतिरेक-मुखेन दर्शयति— "वरुण्य मिति। यन्मन्थननिष्पन्न माज्यं तद् 'वरुण्यम्' उपद्रवकारिणो वरुणस्य योग्यम्, न तु सर्व-सुहृदो मित्रस्य। यत्तु उदीरितरूपं स्वयमुदितं तन्मन्थनरूपस्य हिंसनस्य विरहात् मैत्रम् ॥ ६ ॥

देवताद्वयस्य पृथक् चरोः श्रपणं विधित्सुः तण्डुलानां द्वेधाकरणं विधत्ते— "द्वेधेति। 'ये' 'अणीयांसः' अणुतराः 'परिभिन्नाः' छिन्नाग्रास्तण्डुलाः, 'ते' बृहस्पतिदेवत्याः कर्त्तव्याः। 'ये' 'स्थवीयांसः' स्थूलतराः 'अपरिभिन्नाः' अच्छिन्नाग्राः

---

* तै० सं० १. ८. ६. १३।

† 'विनाटो हतिर्मेषक इति प्रसिद्धः। विनाटे दध्यासेकः मुख-बन्धनम् रथे स्थापनम् रथधावनम् आन्दोलायमानेन नवनीतं जायते, तदाज्यं चरुपाकार्थं ग्राह्यम्'–इति टीप्पनी।

‡ आप० श्रौ० सू० १८. ११. ३—६।

पशूर्णीयताः, 'ते' मित्रदेवत्याः कर्त्तव्याः *। मैत्रापा मभिमत्वं प्रशंसति— "न वै मित्र इति। 'मित्रो' देवः 'कञ्चन' प्राणिनं 'न हिनस्ति'; 'मित्रम्' अपि 'न कश्चन हिनस्ति'। 'एनं' मित्रं 'कुशः' दर्भो वा 'कण्टकः' वा 'न भिनत्ति' न विध्यति; अत एव तस्य 'व्रणः' अपि 'नास्ति'। सर्वस्य मित्रत्वादिति हेतु माह— "सर्वस्य ह्येवेति। पुंलिङ्गो मित्रशब्दो देवतावाची, नपुंसकलिङ्गस्तु सुहृद्वचनः ॥ ७ ॥

अपणप्रकारं विधत्ते— "अथ बार्हस्पत्य मिति। 'बार्हस्पत्यं चरुम्' अधिश्रित्य, अग्निमध्ये स्थाल्या मधिश्रितायां बृहस्पत्यर्थांस्तण्डुलानोप्य, 'तं' चरुम् अश्वत्थशाखानिर्मितेन 'मैत्रेण पात्रेण' 'अपि'-दध्यात् †। 'तत्' तस्मिन् पात्रे स्वय मुत्पन्नम् 'आज्यम्' 'आनयति' आसिञ्चेत्। 'तत्' तत्र स्वविष्ठान् अपरिभिन्नात् मैत्रान् 'तण्डुलान्' 'आ'-वपेत्। 'स एषः' ‡ मैत्रचरुः "ऊष्मणैव' 'श्रप्यते' पच्यते §। 'अग्निना' 'शृतः' पक्वो 'वारुणः', दाहप्रयुक्तहिंसासम्बन्धात् 'वारुणः' वरुणार्हो न मित्रार्हः। 'ऊष्मणा शृतः तु 'मैत्रः' मित्रदेवत्यो युक्तः, दोषविरहात्।

एवं पृथक्-श्रपण मभिधाय देवता-प्रदाने साहित्यं विधत्ते —"तयोरुभयोरिति। 'तयोरुभयोः' चर्वोर्दधिपयसोर्दाक्षिकयोरिव एकैकस्माद् द्विर्द्विरवद्यन् शुक्ला सहावदानं कुर्वन् "मित्रा-

---

* का० श्रौ० सू० १५. ३. ४२, ४४।

† का० श्रौ० सू० १५. ३. ४१ स।

‡ 'स एव'—इति ज।

§ का० श्रौ० सू० १५. ३. ४३।

बृहस्पतिभ्या मनुब्रूहि''–'इति' एवं संयुज्य * अनुवाक्याप्रैषं ब्रूयात् ; एवं 'यजेति' याज्याप्रैषेऽपि 'वषट्कृते' सहैव प्रक्षेपः † ॥ ८ ॥ ६ [ ३. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे तृतीयाध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् . )

स वै दीक्षते। स उपवसथेऽग्नीषोमीयं पशु मालभते तस्य वपया प्रचर्याग्नीषोमीय मेकादशकपालं पुरोडाशं निर्व्वपति तदनु देवस्वाᳬ हवीᳬषि निरूप्यन्ते ॥ १ ॥

सवित्रे सत्यप्रसवाय। द्वादशकपालं वाष्टाकपालं वा पुरोडाशं निर्व्वपति ग्राशुकानां व्रीहिणाᳬ सविता वै देवानां प्रसविता सवितृ-

---

* 'संस्तुत्य'—इति ज ।

† "एकं दानम्, गौर्दक्षिणा"—इति का० श्रौ० सू० १५. ३. ४५। 'स चाय मेक एव यागः मैत्राबार्हस्पत्य इति समुदायात् तद्धितोत्पत्तेः ; अतश्च एकं प्रदानम्, अर्द्धार्द्धिकया चावदानग्रहणम्'—इति तत्र कर्कोपाध्यायः ।

प्रसूतः सुवत्यथ यत् प्राशुकानां व्रीहीणां क्षिप्रे मा प्रसुवानिति * ॥ २ ॥

अथाग्नये गृहपतये। अष्टाकपालं पुरोडाशं निर्व्वपत्याशूनाᳬ श्रीव्वीं गार्हपतं यावतो यावत ईष्टे तदेन मग्निरेव गृहपतिर्गार्हपत मभि परिणयत्यथ यदाशूनां क्षिप्रे मा परिणयानिति † ॥ ३ ॥

अथ सोमाय व्वनस्पतये। श्यामाकं चरुं निर्व्वपति तदेनᳬ सोम एव व्वनस्पतिरोषधिभ्यः सुवत्यथ यच्छ्यामाको भवत्येते वै सोमस्यौषधीनां प्रत्यक्षतमां यच्छ्यामाकास्तस्माच्छ्यामाको भवति ‡ ॥ ४ ॥

अथ बृहस्पतये व्वाचे। नैवारं चरुं निर्व्वपति तदेनं बृहस्पतिरेव व्वाचे सुवत्यथ यन्नैवारो भवति ब्रह्म वै बृहस्पतिरेते वै ब्रह्मणा पच्यन्ते यन्नीवारास्तस्मान्नैवारो भवति ॥ ५ ॥

अथेन्द्राय ज्येष्ठाय। हायनानां चरुं निर्व्व-

* 'प्रसुवानिति'—इति क। 'प्रसुवानिति'—इति ग।

† 'परिणयानिति'—इति क। 'परिणयानिति'—इति ग।

‡ 'भवति'—इति क। एव मिहोत्तरत्रापि।

पति तदेन मिन्द्र एव ज्येष्ठो ज्येष्ठा मभि पर्
ायत्यथ यद्धायनानां भवत्यतिष्ठा वा ऽएत
ओषधयो यद्धायना अतिष्ठो वा ऽइन्द्रस्तस्माद्धा
नानां भवति ॥ ६ ॥

अथ रुद्राय पशुपतये। रौद्रं गावेधु
चरुं निर्वपति तदेनꣳ रुद्र एव पशुपति
पशुभ्यः सुवत्यथ यद्गावेधुको भवति वास्तव
वा ऽएष देवो वास्तव्या गवेधुकास्तस्माद्गावेधु
भवति ॥ ७ ॥

अथ मित्राय सत्याय। नाम्बानां च
निर्वपति तदेनं मित्र एव सत्यो ब्रह्मणे सु
त्यथ यन्नाम्बानां भवति वरुण्या वा ऽएत
ओषधयो याः कृष्टे जायन्ते ऽथैते मैत्रा यन्नाम्ब
स्तस्मान्नाम्बानां भवति ॥ ८ ॥

अथ वरुणाय धर्मपतये। वारुणं यवम
चरुं निर्वपति तदेनं वरुण एव धर्मपतिर्धर्म
पतिं करोति परमता वै सा यो धर्मस्य पति
रसद्यो हि परमतां गच्छति तꣳ हि धर्म ऽउप
यन्ति तस्माद्वरुणाय धर्मपतये ॥ ९ ॥

| | Rs. | As. |
|---|---|---|
| Nyāyavārtika (Text) Fasc. 1 1-6 @ /10/ | 3 | 12 |
| *Nirukta, (Text) Vol. IV, Fasc. 1-8 @ /10/ each | 5 | 0 |
| *Nītisāra, Fasc. 2-5, @ /10/ each | 2 | 8 |
| Nityacārapaddhati Fasc. 1-7 (Text) @ /10/ each | 4 | 6 |
| Nityacraāpradiph, Fasc. 1-7 @ /10/- | 4 | 6 |
| Nyāyabinduṭikā, Fasc 1 | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1-6, Vol. II, Fasc. 1-3 @ /10/ each | 5 | 10 |
| Padumawati, Face. 1-4 @ 2/ | 8 | 0 |
| Pariciṣta Parvan, Fasc. 1-5 @ /10/ each | 3 | 2 |
| P .k ta - Paingalam, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Pr̥thivirāj Rāsa, Part II, Fasc. 1-5 @ /10/ each | 3 | 2 |
| Ditto (English) Part II Fasc 1, @ 1/- | 1 | 0 |
| Lakṣaṇam, Fasc. 1 @ 1/8/- | 1 | 8 |
| Parācara Smriti, Vol. I, Fasc. 1-8 ; Vol. II, Fasc. 1-6 ; Vol. III, Fasc. 1-6 @ /10/ each | 12 | 8 |
| Parācara, Institutes of (English) @ 1/ | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each | 3 | 12 |
| *Sāma Vēda Saṁhitā, Vols. I, Fasc. 5-10 ; II, 1-6 ; III, 1-7 ; IV, 1-6 ; V, 1-8 ; @ /10/ each | 20 | 10 |
| Sānkhya Sūtra V tti, Fasc. 1-4 @ /10/ | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each | 3 | 0 |
| *Sankara Vejay, Fasc. 2-3 @ /10/ | 1 | 4 |
| Shaddarsana-Samuccaya, Fasc. 1 @ /10/ | 0 | 10 |
| Sraddha Kriya Kaumudi, Fasc. 1-6 | 3 | 12 |
| Sucruta Saṁhitá, (Eng.) Fasc. 1 @ 1/- | 1 | 0 |
| Suddhi Kaumudi, Fasc. 1-4 | 2 | 8 |
| *Taittereya Saṁhitā, Fasc. 22-45 @ /10/ each | 15 | 0 |
| * Ditto Brāhman, Fasc 3-25 @ /10/- | 14 | 6 |
| Ditto Prātisākhya, Fasc. I 3 @ /10/ | 1 | 14 |
| Tāṇdya Brāhmaṇ, (Text) Fasc. 1-19 @ /10/ each | 11 | 14 |
| Tantra Vārtika (English) Fasc. 1-6 @ 1/4/ | 7 | 8 |
| Tattva Cintāmaṇī, Vol. I, Fasc. 1-9 : Vol. II, Fasc. 2-10, ; Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V. Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each | 23 | 12 |
| Tattvārthādhigama Sutrom, Fasc. 1-3 | 1 | 14 |
| Trikāṇda-Maṇdanom, Fasc. 1-3 @ /10/ | 1 | 14 |
| Tul'sī Satsai Fasc. 1-5 @ /10/ | 3 | 2 |
| Upamita-bhava-prapañcha-kathā Fasc. 1-9 @ /10/ each | 5 | 10 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/ | 6 | 0 |
| Vallāla Carita, Fasc. 1 | 0 | 10 |
| Varsa K yā Kaumudi, Fasc 1-6 @ /10/ | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 2-6 ; Vol. II, Fasc. 1-7, @ /10/ each | 7 | 8 |
| Vidhāno Pārigāt, Fasc. 1-8 | 5 | 0 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each | 4 | 6 |
| Vrhat Sayambhū Purāṇa, Fasc. 1-6 | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 2-5 @ /10/ each | 2 | 8 |
| *Tibetan Series.* | | |
| Pag-Sam Thi Śiñ, Fasc. 1-4 @ 1/ each | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 2-5 ; Vol. II, Fasc. 1-3 ; Vol. III, Fasc. 1-6 @ 1/ each | 14 | 0 |
| Rtogs brjod dpag hkhari Śiñ (*Tib. & Sans.* Abadān Kalpalatā,) Vol. I, Fasc. 1-6 ; Vol. II. Fasc. 1-5 @ 1/ each | 11 | 0 |
| *Arabic and Persian Series.* | | |
| Ālamgirnamah, with Index, (Text) Fasc. 1-13 @ /10/ each | 8 | 2 |
| Al-Muquaddasi (English) Vol. I, Fasc. 1-3 @ 1/ | 3 | 0 |
| Āin-i-Akbari, Fasc. 1-22 @ 1/8/ each | 33 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/ each | 34 | 0 |
| Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/8/ | 55 | 8 |
| Ditto (English) Vol. I, Fasc. 1-8 ; Vol. II, Fasc. 1-3 @ 1/4/ | 13 | 12 |
| Arabic Bibliography, by Dr. A. Sprenger | 0 | 10 |
| *Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /10/ | 11 | 14 |
| Catalogue of Arabic Books and Manuscripts 1-2 | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each | 3 | 0 |
| Conquest of Syria, Fasc. 1-9 @ /10/ | 5 | 10 |
| Dictionary of Arabic Technical Terms & Appendix Fasc 1-21 @ 1/8/- | 31 | 8 |
| Farhang-i-Rashidi, (Text) Fasc. 1-14 @ 1/8/ each | 21 | 0 |
| Fihrist-i-Ṭūsi, or Ṭūsy's list of Shy'ah Books Fasc. 1-4 @ 1/ each | 4 | 0 |
| Futūh-ush-Shām of Wāqidī, Fasc. 1-9 @ /10/ each | 5 | 10 |
| Ditto of Āzādi, (Text) Fasc. 1-4 @ /10/ each | 2 | 8 |

The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

Haft Asmān, History of the Persian Masnawi, Fasc. 1. @ /12/ ... Rs 0
History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... 7
Iqbālnāmah-i-Jahāngiri, (Text) Fasc. 1-3 @ /10/ each ... ... 1
Iṣābah, with Supplement, (Text) 51 Fasc. @ 1/ each ... ... 51
Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. I I. Fasc. 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12; @ 1/- each ... ... 35
Maghāzi of Wāqidī, (Text) Fasc. 1-5 @ /10/ each ... ... 3
Muntakhabu-t-Tawārikh, Fasc. 1-15 @ /10/ each ... ... 9
Muntakhabu-t-Tawārikh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... ... 15
Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... ...
Ma'āṣir-i-'Ālamgīrī, Fasc. 1-6 @ /10/ each ...
Nukhbatu-l-Fikr, Fasc. 1 ... ... ... ... 0
Niẓāmī's Khiradnāmah-i-Iskandari, Fasc. 1-2 @ /12/ each ... 1
Riyāẓu-s-Salātīn Fasc. 1-5 @ /10/ each ... ... 3
Ditto Ditto (English) Fasc. 1-5 @ 1/ ... ... 5
Tabaqāt-i-Nāṣirī, Fasc. 1-5 @ /10/ each ... ... 3
Ditto (English) Fasc. 1-14 @ 1/ each ... ... 14
Ditto Index ... ... ... 1
Tārīkh-i-Fīrūz Shāhi of Ẓiyāu-d-dīn Barni Fasc 1-7 @ /10/ each ... 4
Tārīkh-i-Fīrūshāhi, of Shams-i-Sirāj Alif, Fasc 1-6 @ /10/ each ... 3
Ten Ancient Arabic Pcems, Fasc. 1-2 @ 1/8/ each ... ... 3
Tuzuk-i-Jahāngirī, (English) Fasc. 1 ... ... ... ... 1
Wīs o Rāmīn, (Text) Fasc. 1-5 @ /10/ each ... ... ... 3
Ẓafarnāmah, Vol. I, Fasc. 1-9 Vol. II, Fasc. 1-8 @ /10/ each ... 10

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES, Vols. XIX and XX @ 10/ each ... ... 20
2. PROCEEDINGS of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members.
*N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.*
4. Journal and Proceedings, N. S., 1905, to date, @ 1-8 per No. to members ana Rs. 2/ per No. to Non-members.
5. Memoirs 1905 to date. Price varies from No. to No. Discount of 25% to Membe
6. Centenary Review of the Researches of the Society from 1784–1883 ... 3
A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J. A. S. B.*, 1878) ... ... ... 4
Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., *J. A. S. B.*, 1868) ... ... ... ... 2 0
Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J. A. S. B.*, 1875) ... ... ... ... ... 4 0
7. Catalogue of the Library of the Asiatic Society, Bengal ... ... 3 8
8. Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... 40 0
9. Moore and Hewitson's Descriptions of New Indian Lepidopters, Parts I—III with 8 colored plates, 4to. @ 6/ each ... ... 1[illegible] 0
10. Tibetan Dictionary, by Csoma de Körös ... ... ... 1[illegible] 0
11. Ditto Grammar ,, ,, ... ... ... [illegible] 0
12. Kacmīracabdāmrta, parts I and II @ 1/8/ ... ... ... 3 0
13. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... ... 1
14. Memoir on maps illustrating the Ancient Geography of Kacmīr, by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... ... ... 4
15. Persian Translation of Hāji Bābā of Ispāhān, by Hāji Shaikh Ahmad-i-Ki and edited with notes by Major D. C. Phillott. ... ... 1[illegible]

---

Notices of Sanskrit Manuscripts, Fasc. 1–33 @ 1/ each ... ... 33
Nepalese Buddhist Sanskrit Literature, by *Dr.* R. L. Mitra ... 5

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treas Asiatic Society," only.

23-4-07

BOOKS ARE SUPPLIED BY V.-P.-P.

BIBLIOTHECA INDICA:
A
Collection of Oriental Works
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, NO. 1174.

# ॥ शतपथब्राह्मणम् ॥

## ॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRĀHMAṆA
## OF THE WHITE YAJURVEDA,
WITH THE
## COMMENTARY OF SĀYAṆA ĀCĀRYA




EDITED BY
ĀCĀRYA SATYAVRATA SĀMAS'RAMI.

VOL. V, FASCICULUS III.

CALCUTTA:
PRINTED BY HITAVRATA CHATTERJI, SATYA PRESS.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET,
1907.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

## Asiatic Society of Bengal

No, 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM THE SOCIETY'S AGENTS
MR. BERNARD QUARITCH, 15, PICCADILLY, LONDON. W.,
AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

BIBLIOTHECA INDICA.

*Sanskrit Series.*

| | | |
|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2,4 @ /10/ each ... Rs. | 1 | 4 |
| Advaitachintā Kaustubhe, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| *Agni Purāṇa, Fasc 3-14 @ /10/ each ... ... ... | 7 | 8 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc 1-5, Vol, IV, Fasc. 1-8 @ /10/ ... ... ... | 14 | 6 |
| Aitareyālochanum, (the preface of the Ditto) by Ācārya S. V. Sāmasrami ... | 2 | 0 |
| *Anu Bhāshya, Fasc 2-5 @ /10/ each ... ... ... | 2 | 8 |
| Aphorisms of Sāṇdilya, (English) Fasc. 1 ... ... ... | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | 3 | 12 |
| Acvavaidyaka, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| *Ātharvana Upanishad, Fasc. 2-5 @ /10/ each ... ... | 2 | 8 |
| Avadāna Kalpalatā, (*Sans. and Tibetan*) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... ... | 11 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-3 @ 1/- each ... | 3 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1-2 @ /10/ ... ... ... | 1 | 4 |
| Baudhāyana Srauta Sutra, Fasc. 1-3 @ /10/ each ... ... | 1 | 14 |
| *Bhā natī, Fasc 4-8 @ /10/ ... ... ... ... | 3 | 2 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-5 @ /10/- ... ... ... | 3 | 2 |
| Brahma Sutra, Fasc. 1, @ /10/- ... ... ... ... | 0 | 10 |
| Bṛhaddēvatā, Fasc. 1-4 @ /10/ each ... ... ... | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... ... | 3 | 12 |
| Bodhicāryāvatāra of Cāntidevi, Fasc. 1-4 ... ... ... | 2 | 8 |
| Çatadusani, Fasc. 1 2 ... ... ... ... | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | 8 | 0 |
| Çatapatha Brāhmaṇa Vols. I Fasc 1-7, II Fasc 1-5, III Fasc 1-7, V Fasc 1-4 | 14 | 6 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-12 @ /10/ each ... | 7 | 8 |
| *Caturvarga Chintāmani, (Text) Vols. II, 1-25; III. Part I, Fasc. 1-18, Part II, Fasc. 1 10 @ /10/ each; Vol. IV, Fasc. 1-5 ... ... | 36 | 4 |
| Çlokavārtika, (English) Fasc. 1-5 @ 1/4/ ... ... ... | 6 | 4 |
| *Çrauta Sūtra of Āpastamba, Fasc. 6-17 @ /10/ each ... ... | 7 | 8 |
| Ditto Āçvālāyan, Fasc 1-11 @ /10/ each ... ... | 6 | 14 |
| Ditto Çānkhāyan, (Text) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-4; Vol. III, Fasc. 1-4, Vol IV Fasc. 1 @/10/ each ... | 10 | 0 |
| Ditto Lātyāyan Fasc. 1-9 @ /10/ each ... ... | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1-3 @ /10/ each ... ... ... | 1 | 14 |
| Dān Kriyā Kaumudi, Fasc. 1-2 ... ... ... ... | 1 | 4 |
| Gadādhara Paddhati Kālasāra, Vol I, Fasc. 1-7... ... ... | 4 | 6 |
| Ditto Ācārasāra, Vol II, Fasc. 1 2 ... ... | 1 | 4 |
| Gobh liya G hyo Sutrum, Fasc. 1-12 @ /10/ ... ... ... | 7 | 8 |
| Kāla Viveka, Fasc. 1-7 ... ... ... ... | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... ... | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc 1-14 @ /1/4/- each ... ... | 17 | 8 |
| Kūrma Purāṇa, Fasc. 1-9 @ /10/ each ... ... ... | 5 | 10 |
| Lalita-Vistāra, (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| Ditto Fasc. 3-6 @ /10/ each ... ... ... | 2 | 8 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... | 6 | 14 |
| Mahā-bhāsya-pradīpodyota, Vol. I Fasc. 1-9 & Vol. II, Fasc. 1-12, Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... | 16 | 14 |
| Manuṭīkā Sangraha, (Text) Fasc 1-3 @ /10/ each ... ... | 1 | 14 |
| Mārkaṇdeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... | 9 | 0 |
| * Ditto (Text) Fasc. 4-7 @ /10/ ... ... ... | 2 | 8 |
| *Mimāmsā Darçaṇa, (Text) Fasc. 3-19 @ /10/ each ... ... | 10 | 10 |

मितिवद् वारुण मिति व्याख्येयम्। 'तत्' तेन 'एनं' यजमानं तादृशो 'वरुणः' 'धर्मस्य पतिं' कुर्यात्। धर्मपतित्वं प्रशंसति— "परमतेति। 'यः' पुमान् 'धर्मस्य पतिः' 'असद्' भवेत्, 'सा वै' 'परमता' परमत्वम्। तदेव विवृणोति— "यो हीति। 'तं' परम' 'धर्मे' 'उपयन्ति' प्राप्नुवन्ति ॥ ८ ॥

एतेषां निरुप्तानां हविषां प्रचरणकालं विधत्ते— "अथाग्नीषोमीयेणेति। चोदकप्राप्तेन अग्नीषोमीयपशुपुरोडाशेन प्रचर्य तदीयस्विष्टकृतः प्राक् एतैर्हविर्भिर्यजेतेत्यर्थः ॥ १० ॥

विधत्ते— "अथैन मिति। 'अथ' देवसुवां हविर्यागानन्तरं स्विष्टकृतः पूर्वम् 'एनं' यजमानं 'दक्षिणे बाहौ' 'अभिपद्य' गृहीत्वा 'जपति', अध्वर्युरिति शेषः। सूत्रम्— "उत्तमेन चरित्वा सविता त्वेत्याह यजमान बाहुं दक्षिणं गृहीत्वा"-इति *।

मन्त्रस्यार्थः †;— हे यजमान! 'त्वा' त्वां 'सविता' 'सवानां' प्रसवानां स्वामित्वेन 'सुवताम्' अनुजानातु। तथा 'अग्निः' अन्येषां 'गृहपतीनाम्' ईश्वरम् अनुजानातु। 'त्वाम्'-इत्यनुषङ्गः। एव मुत्तरत्रापि त्वां सुवता मिति योज्यम्। 'वाचे', 'ज्यैष्ठ्याय' इत्यादौ तादर्थ्ये चतुर्थी। 'मित्रः सत्यः'-इत्यत्र सत्यशब्दात् चतुर्थ्यर्थे सुः, सत्यायेत्यर्थः ‡ ॥ ११ ॥

परोक्षवदुक्त्वा, अथ प्रत्यक्षवदाह-- "इमं देवा इति §। हे 'देवाः!' सवित्रादयः 'इमं' यजमानम् 'असपत्नं' शत्रुरहितं

---

* का० श्रौ० सू० १५. ४. १४।

† तत्पाठस्तु वा० सं० ९. ३९. १।

‡ पा० सू० ७. १. ३९ द्रष्टव्यम्।

§ वा० सं० ९. ४०. १।

'सुवध्वम्' अनुजानीत। तथा 'महते क्षत्राय' अतिप्रभूताय क्षत्रियकुलाय, 'महते ज्यैष्ठ्याय' अप्रतिहतनियमसामर्थ्यायेत्यर्थः। 'महते जानराज्याय' जनसम्बन्धि यद्राज्यं तत्र सागरपर्यन्तभूमिविषयत्वात्, महत्सार्वभौमत्वाय। 'इन्द्रस्य' सम्बन्धिने 'इन्द्रियाय' वीर्याय 'इमम्' एतन्नामानं यजमानम्, 'अमुष्य' पितुः 'पुत्रम्', 'अमुष्यै' अमुष्या मातुः पुत्रम्, सुवध्व मित्यनुषङ्गः। 'अस्यै' अस्याः 'विशः' प्रजायाः 'राजा', एष यजमान इत्यर्थः। प्रजा अपि सम्बोध्याः— "एष इति। 'अमी'-इति सम्बोधनप्रथमाबहुवचनान्तम्। अदःशब्दस्थाने जनपदनाम सम्बोधनप्रथमाबहुवचनान्तं गृह्णीयादित्यर्थः। तत एवामी इत्यस्य स्थाने भरतपदं प्रक्षिप्य पठितं बोधायनेन— "अथैनं रत्निभ्य आवेदयति, एष वो भरता राजा"-इति। आपस्तम्बेन तु राजविशेषेण जनपदनामग्रहण मुक्तम्— "अथैनं रत्निभ्य आवेदयति, एष वो भरतां राजेत्येष वः कुरवो राजेति कौरव्य मेष वः पञ्चाला राजेति पाञ्चाल मेष वः कुरुपाञ्चाला राजेति वा कुरुपञ्चाल मेष वो जनता राजेत्यन्यान् राज्ञः'''-इति *। कात्यायनेन त्विदं सर्वं सङ्गृहीतम्— "यस्याश्च जाते राजा भवति देशस्यानवस्थितत्वात्"-इति †। हे प्रजाः! 'वः' युष्माकम् एष राजा, एनं स्वामिनं यथेरितं सेवध्व मित्यर्थः। 'ब्राह्मणाना मस्माकं' 'सोमः' एव 'राजा', न तु क्षत्रिय इत्यर्थः॥

---

* आप० श्रौ० सू० १८. १२. ७। 'सोमो ऽस्माकं ब्राह्मणानां राजेति ब्रह्मा जाति'—इति च तत्र तदुत्तरसूत्रम् (८)।

† का० श्रौ० सू० १५. ४. १७। "ये देवा देवसुवः स्थः"— इत्यादि तै० सं० १. ८. १० द्रष्टव्यम्।

सर्वं वस्तुजातम् 'अभि' 'एनं' यजमानं गृहपतिगुणकोऽग्निः 'परिणयान्' परिणयति प्रापयति। व्रीहीणा माशुत्वं प्रशंसति— "अथ यदिति। 'क्षिप्रे' क्षिप्रं 'मा' मां परिणयेयुः 'इति' अतो हेतोराशुभिरेव हविः कर्त्तव्य मित्यर्थः ॥ ३ ॥

तृतीयं हविर्विधत्ते— "अथ सोमायेति *। 'वनस्पतये' वनाना मोषधीनां पतिः वनस्पतिः। पारस्करादित्वात् सुट्। तस्मै 'सोमाय' श्यामाकप्रकृतिकं 'चरु' निर्वपेत्। देवता-सम्बन्धं प्रशंसति – "तद्देन मिति। श्यामाकानां सोमार्हत्व मुपपादयति— "अथ यच्छ्यामाका इति। 'श्यामाका इति यत्', 'एते' खलु 'ओषधीनां' मध्ये 'सोमस्य' 'प्रत्यक्षतमां' अतिशयेन प्रत्यक्षं रूप मित्यर्थः ॥ ४ ॥

चतुर्थं हविर्विधत्ते— "अथ बृहस्पतय इति †। 'वाचे' वागूपायतत्वेन नैवारचरुणा प्रीतो 'बृहस्पतिरेव' 'एनं' यजमानं 'वाचे' 'सुवति' अनुजानाति। "अथ यन्नैवारो भवति"–इत्या-दिकं वाजपेये व्याख्यातम् ‡ ॥ ५ ॥

पञ्चमं हविर्विधत्ते— "अथेन्द्रायेति §। ज्येष्ठत्वगुणकाये-न्द्राय 'हायनानां' संवत्सरपक्वानां रक्तशालीनां 'चरु' निर्वपेत्। संवत्सरपक्वानां ज्येष्ठगुणकेन्द्रयोग्यत्व मुपपादयति— "अथ यद्धाय-नाना मिति। 'हायनाः' संवत्सरपक्वा व्रीहय इति ‖ 'यत्'

---

* का० श्रौ० सू० १५. ४. ८। तै० सं० १. ८. १०. २।

† का० श्रौ० सू० १५. ४. ६। तै० सं० १. ८. १०. ४।

‡ पुरस्तात् ५१ पृ० १५ पं० द्रष्टव्यम्।

§ का० श्रौ० सू० १५. ४. १०। तै० सं० १. ८. १०. ५।

‖ पा० सू० ३. १. १४८ द्रष्टव्यम्।

'एताः' 'अतिष्ठाः' अतीत्य तिष्ठन्त्यः 'ओषधयः' चिरकालेन पाकात् 'इन्द्रः' अपि 'अतिष्ठः' * सर्वानतिक्रम्य स्थितः † ॥ ६ ॥

षष्ठं हविर्विधत्ते— "अथ रुद्रायेति ‡। 'पशुपतये' पशुपतिगुणकाय 'रुद्राय'। रौद्र मिति तद्धितेन विहित एव रुद्रसम्बन्धः, पुनः 'पशुपतये'-इति विशेषसम्बन्धाय 'रुद्राय'-इति चतुर्थी उक्ता। पशुपतिपदं प्रशंसति— "तदेन मिति। 'तत्' तेन हविषा एनं सुन्वन्तं 'पशुपतिः रुद्र एव' 'पशुभ्यः' तदर्थं 'सुवति' प्रेरयति, पशुमन्तं करोतीत्यर्थः। 'वास्तव्यः'-इत्यादि पूर्ववद् व्याख्येयम् ॥ ७ ॥

सप्तमं हविर्विधत्ते— "अथ मित्रायेति §। 'सत्याय' सत्यगुणकाय 'मित्राय' 'नाम्बानां' नाम्बा नाम अकृष्टपच्याः स्वयञ्जाता व्रीहयः। नाम्बानां मित्रयोग्यत्व मुपपादयति— "अथ यन्नाम्बाना मिति। कृष्टपच्येतरोत्पन्ना: 'ओषधयः' 'वरुण्याः' कर्षणादिलक्षणहिंसासम्बन्धात् वरुणार्हाः, अकृष्टपच्यास्तु तद्विरहात् 'मैत्राः' ॥ ८ ॥

अष्टमं हविर्विधत्ते— "अथ वरुणायेति ‖। 'धर्मपतये' धर्मपतिगुणकाय 'वरुणाय' 'यवमयं चरु' निर्वपेत्। रौद्र

---

* 'अतिष्ठाः'—इति च, ज।

† 'तिष्ठति'—इति ज।

‡ का० श्रौ० सू० १५. ४. ११। 'गावेधुकश्चरुर्भवति'—इति १. २८ द्रष्टव्यम्। तै० सं० १. ८. १०. ६।

§ का० श्रौ० सू० १५. ४. १२। 'अकृष्टपच्याः'—इति। तै० सं० १. ८. १० ७।

‖ का० श्रौ० सू० १५. ४. १३। 'यवमयश्चरुर्भवतीति प्रैषः'—इति १. २७ द्रष्टव्यम्। तै० सं० १. ८. १०. ८।

रेणाहुती ऽएतत् कर्म क्रियत * ऽआश्राव्याहाग्नये स्विष्टकृते प्रेष्येति व्वषट्कृते जुहोति ॥ १५ ॥ ७ ॥

॥ इति द्वितीयप्रपाठके सप्तमं ब्राह्मणम् [३. ३.] ॥

एवं पवित्राख्यात् प्रथमसोमयागादनन्तरभावीनि अनुमत्यादीनि इष्टिदर्विहोमात्मकानि संवत्सरपर्यन्त मनुष्ठेयानि कर्माण्यनुक्रान्तानि †, अथ द्वितीयस्याभिषेचनीयाख्यस्य सोमयागस्य प्रयोगोऽभिधास्यते; तत्राभिषेचनीयस्य चोदकप्राप्तां दीक्षा माह— "स वै दीक्षत इति। तत्कालः सूत्रे दर्शितः – "फाल्गुनीपक्षयजनीयेऽभिषेचनीयाय दीक्षते"–इति ‡।

देवसुवां हवींषि विधित्सुस्तेषा मग्नीषोमीयपशुपुरोडाशानन्तरभावित्वं वक्तु माह— "स उपवसथ इति। 'उपवसथः' सुत्यादिवसात् पूर्व महः। अग्नीषोमीयं पशुपुरोडाशं निरूप्य, तदनु देवसुवां हवींषि निर्वपेत् §। सुवन्त्यनुजानन्तीति सुवः, देवाश्च ते सुवश्चेति देवसुवः, तेषां 'देवस्वाम्'; "ओः सुपि"–इति ‖

---

* 'क्रियत'—इति क, ख।

† पुरस्तात् २प्र० २ब्रा० २कण्डीतः (१२१ पृ०) द्रष्टव्यम्।

‡ का० श्रौ० सू० १५. ३. ४६। 'फाल्गुन्याः पक्षेऽतीते यद् यजनीयम्, तत्र दीक्षा; शुक्लप्रतिपदीत्यर्थः'—इति तद्वृत्तिः।

§ का० श्रौ० सू० १५. ४. १—२। "देवसुवा मेतानि हवींषि भवन्ति"—इत्यादि तै० ब्रा० १. ७. ४ द्रष्टव्यम्।

‖ पा० सू० ६. ४. ८३।

यथादेशः । प्रसवितृत्वं चैषा माम्नायते— "देवसुवा मेतानि हवींषि भवन्ति , एतावन्तो वै देवानां सवाः , त एवास्मै सवान् प्रयच्छन्ति , त एनं सुवन्ते"–इति * ॥ १ ॥

तत्र प्रथमं सावित्रं हविर्विधत्ते – "सवित्रे सत्यप्रसवायेति † । 'सत्यप्रसवाय' अमोघाभ्यनुज्ञाय 'सवित्रे' 'प्राशुकानाम्' प्रकर्षेण आशु शीघ्रं पच्यमानानां पुनःप्ररूढानां व्रीहीणाम् ‡ । रेफस्य छान्दसो लत्वनिर्देशः । सवितृदेवतासम्बन्धं प्रशंसति – "सवितेति । 'सूयै' सर्वं करवाणि । प्राशुकव्रीहिसाध्यत्वं प्रशंसति— "अथ यदिति । 'क्षिप्रे' क्षिप्रकाले 'मा' मां 'प्रसुवान्' । सवितृदेवत्याः प्राशुका व्रीहयः ; प्रसुवन्तु प्रेरयन्त्विति प्राशुकत्वम् । प्रसुवानिति, प्रपूर्वात् सुवतेर्लेट्यडागमे सेरिकारलोपे कृते रूपम् ॥ २ ॥

द्वितीयं हविर्विधत्ते— "अथाग्नय इति । 'गृहपतये' गृहपतित्वगुणकाय 'अग्नये' 'आशूनां व्रीहीणां 'पुरोडाशं' निर्वपेत् । "आशूना मिति § । प्राशुकाः पुनःप्ररूढा व्रीहय इत्युक्तम् , ततोऽप्यधिककाले पक्वतये पच्यमानाः षष्टिका व्रीहय आशवः । तेषा माशुत्वं च त्रिचतुरमासनियतपरिपाकव्रीह्यपेक्षम् । गृहपतिपदं प्रशंसति – "श्रीर्वा इति । 'श्रीः' खलु 'गार्हपतं' गृहपतित्व मेव ; तस्माद् यजमानो 'यावतः' धनस्य 'ईष्टे' ईश्वरो भवति । 'तद्' 'गार्हपतं' गृहपतिसम्बन्धि

---

* तै० ब्रा० १. ७. ४ । 'देवस्वाम्'—'देवसुवाम्'—इति शुक्लकृष्णयोर्भेदः ।

† का० श्रौ० सू० १५. ४. ५ । तै० सं० १. ८. १०. ३ ।

‡ पूर्वं छिन्नाः सन्तः पुनराशु प्ररोहन्तीति पुनराशुका इत्यर्थे प्राशुकाः छान्दसः'—इति का०–टीप्पनी ।

§ का० श्रौ० सू० १५. ४. ६ । तै० सं० १. ८. १०. १ ।

अथाग्नीषोमीयेन पुरोडाशेन प्रचरति । तस्याग्निष्ट एव स्विष्टकृद् भवत्यथैतैर्हविर्भिः प्रचरति यद्दैतैर्हविर्भिः प्रचरति * ॥ १० ॥

अथैनं दक्षिणे बाहावभिपद्य जपति । सविता त्वा सवानाᳪ सुवता मग्निर्गृहपतीनाᳪ सोमो व्वनस्पतीनाम् । बृहस्पतिर्व्वाच ऽइन्द्रो ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो व्वरुणो धर्मपतीनाम् ॥ ११ ॥

इमं देवाः । असपत्नᳪ सुवध्व मितीमं देवा अभ्रातृव्यᳪ सुवध्व मित्येवैतदाह महते क्षत्राय महते ज्यैष्ठ्यायेति नात्र तिरोहित मिवास्ति महते जानराज्यायेति महते जनानाᳪ † राज्यायेत्येवैतदाहेन्द्रस्येन्द्रियायेति व्वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेतीम ममुष्यै ‡ पुत्र ममुष्यै पुत्र मिति तद्यदेवास्य जन्म तत एवैतदाहास्यै व्विश ऽइति यस्यै व्विशो राजा भवत्येष वोऽमी राजा

* 'प्रचरति'—इति क ।

† 'जानानाᳪ'—इति ख । ‡ 'मसुष्य'—इति क, ख ।

सोमो ऽस्माकं ब्राह्मणानाᳩ राजेति तदस्मा ऽइदᳩ सर्व्वं माद्यं करोति ब्राह्मण मेवापोद्धरति तस्माद् ब्राह्मणो ऽनाद्यः सोम राजा हि भवति ॥ १२ ॥

एता ह वै देवाः * सवस्येशते । तस्माद् देवस्वो नाम तदेन मेता एव देवताः सुवते ताभिः सूतः श्वः सूयते ॥ १३ ॥

ता वै द्विनाम्न्यो भवन्ति । द्वन्द्वं वै व्वीर्य्यं व्वीर्यवत्यः सुवान्ता ऽइति तस्माद् द्विनाम्न्यो भवन्ति † ॥ १४ ॥

अथाहाग्नये स्विष्टकृते ऽनुब्रूहीति । तद्यद-न्तरेणाहुती ऽएतत् कर्म क्रियत ऽएष वै प्रजा-पतिर्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवै-तस्य प्रजापतेर्दधाति मध्यतः सुवति तस्मादन्त-

---

* 'देवताः'—इति क, ख ।

† 'भवन्ति'—इति क ।

मन्त्रं भागशोऽनूद्य व्याचष्टे— "इमं देवा इति *। आढ्यः प्रभुः। "व्यन् सपत्ने"–इति † व्यन् प्रत्ययः। शेषं सुगमम्। यजमानस्य मातापित्रोश्च नामग्रहणस्थानं दर्शयति— "इम ममु-ष्येति। इम मित्यस्यानन्तरं यजमानस्य नाम; 'अमुष्य'– 'अमुष्याः'–इत्येतयोः स्थाने तस्य मातापित्रोर्नामेत्यर्थः। अत एव सूत्रम्— "नामास्य गृह्णाति मन्त्रे यथास्थानं, मातापित्रोश्च"–इति ‡। मन्त्रभागस्य तात्पर्य्य माह— "तदस्मा इति। 'तत्' तेन, एष वो राजेति स्वामित्वप्रतिपादनेन 'अस्मै' राज्ञे 'इदं' दृश्यमानं 'सर्वं' जगत् ब्राह्मणव्यतिरिक्तम् 'आद्यं' भोग्यं करोति। सोमोऽस्माक मिति मन्त्रभागस्य तात्पर्य्य माह— "ब्राह्मण मेवेति। यतः सोमोऽस्माकं ब्राह्मणानां राजेति ब्राह्मणजातिः सोम-स्वामित्वेन पृथक् कृता, तस्माद् ब्राह्मणः क्षत्रियेण नाद्यः। 'हि' यस्माद् 'ब्राह्मणः' 'सोमराजा' सोमो राजा यस्येति बहु-व्रीहिः, अतएव "राजाहस्सखिभ्यः"–इति § टच्-समासान्तो न कृतः। यस्मान्मन्त्रेणाध्वर्युः स्वकीयं राजानं विभज्य निर्द्दिष्ट-वान्, तस्माल्लोकेऽपि ब्राह्मणा अग्निष्टोमादियागेषु सोम मेव राजशब्दोदितं "सोम राजन्नेह्यवरोह मा भेः"–इत्यादिभिर्मन्त्रै-रुपचरन्ति ‖ ॥ १२ ॥

* वा० सं० १०. १८. १।

† पा० सू० ४. १. १४५।

‡ का० श्रौ० सू० १५. ४. १५, १६।

§ पा० सू० ५. ४. ९१।

‖ तै० सं० १. ३. १३. २। तत्रोपावरोहमन्त्रयोर्द्वितीय एषः। ताविमौ विहितौ बोधायनेन यथा— "अथैतच्चर्म्मफलकयोः प्राचीनग्रीव

उक्ताह्विरष्टकस्य देवतानां सम्भूय नाम निर्वक्ति— "एता ह वा इति । "तदेन मिति । यस्माद् 'एताः' देवताः 'सर्वस्य' ईशयितारः, 'तत्' तस्मात् 'एताः देवताः' देवसूनामिकं सवितृप्रसूतम्, 'एनं' सुन्वन्तं हविः 'सुवते' अनुजानन्ति; 'ताभिः' देवताभिः 'सूतः' अनुज्ञातः सन् 'श्वः' सुत्यादिवसे 'सूयते' अनुज्ञायते; देवसूहविःप्रचारस्य अग्नीषोमीयदिवसकर्त्तव्यत्वात् श्व इत्यनेन सुत्यादिनं विवक्ष्यत इत्यभिप्रायः ॥ १३ ॥

उक्तानां देवताना मेकैकस्य 'सवित्रे सत्यप्रसवाय'–इत्यादि-विशेषणविशेष्यात्मकं नामद्वयं तद् द्वन्द्वात्मना प्रशंसति— "ता वै द्विनाम्न्य इति । 'सुवान्तै'–इति पञ्चमलकारान्तं पदम् । "लेटोऽडाटौ"–इत्यडागमः *, "एत ऐ"–इत्यैकारादेशश्च † ॥ १४ ॥

अग्नीषोमीयपशुपुरोडाशप्रधानाहुतेरनन्तरं कर्त्तव्यं विधाय प्रकृतं स्विष्टकृद्-याग मनुवदति—"अथाग्नय इति ‡ । प्रधान-

---

सुत्तरलोमोपस्तृणाति, यज्ञप्रतिष्ठेति वा तूष्णीं वा तस्मिन् सम्मुखान् ग्राव्णः कृत्वा दक्षिणस्य हविर्द्धानस्यान्तरेषे सोमः राजान मुपावहरति 'हृदे त्वा मनसे त्वेति द्वाभ्याम्"—इति [ आप० श्रौ० सू० १२. ३. १३. ] । समाम्नातौ चेमौ मन्त्रौ तै० १. ३. १३. १, २ । पर मेनयोरेक एव व्याख्यातस्तत्रोत्तरत्र (६. ४. ३.) "ब्रह्मवादिनो वदन्ति"—इत्यादिना । उक्तश्चैतद्व्याख्याने सायणाचार्येण— 'सोम राजन्निति मन्त्र उपेक्षितः'—इति । तदिदं सर्वं विशेषतो विवेच्यम् ।

* पा० सू० ३. ४. ९४ ।

† पा० सू० ३. ४. ९३ ।

‡ 'अयाडेति'—इति च ।

स्विष्टकृदाहुत्योर्मध्ये देवसूहविःप्रचारेण यज्ञरूपप्रजापतिमध्ये एव यजमानं निहितवान् भवतीत्यर्थः * ॥ १५ ॥ ७ [ ३. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये तृतीयं ब्राह्मणम् ॥

## ॥ इति पञ्चमकाण्डे द्वितीयः प्रपाठकः † ॥

---

* "पशुपुरोडाशतत्त्वं प्राधान्यात्, इतरेषां वा भूयस्त्वात्, स्विष्टकृच्च तेऽषु"—इति का० श्रौ० सूत्रे ( १५. ४. १८, १६ ) इह पर्यालोच्ये । 'उभयरूपा हि स्विष्टकृच्छ्रुतिः,—काण्वानां यजतिप्रैष्यः स्विष्टकृत्, माध्यन्दिनानां प्रैष्यप्रैष्य इति'—इति चात्र कर्कः ।

† इत उत्तर मिह, 'कण्डिकाः १०४'—इति क, 'कण्डिकासङ्ख्या ११४'—इति ख, 'कण्डिकासङ्ख्या १०४'—इति ग, घ । तत्र १ब्रा० २१ क०, २ ब्रा० १० क०, ३ ब्रा० २० क०, ४ ब्रा० १७ क०, ५ ब्रा० १३ क०, ६ ब्रा० ८ क०, ७ ब्रा० १५ क० । एतासां सङ्कलनयास्मिन् प्रपाठके सप्तसु ब्राह्मणेषु १०४ कण्डिकाः सम्पन्ना इति शिवम् ॥

अथ

तृतीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

तृतीयेऽध्याये चतुर्थं ब्राह्मणम्।

॥ हरिः ॐ ॥

स वा अपः सम्भरति। तद्यदपः सम्भरति वीर्यं वा ऽआपो वीर्य्यमेवैतद्रस मपाᳪ सम्भरति * ॥ १ ॥

औदुम्बरे पात्रे †। अन्नं वा ऽऊर्गुदुम्बर ऊर्जो ऽन्नाद्यस्यावरुध्यै तस्मादौदुम्बरे पात्रे ॥ २ ॥

स सारस्वतीरेव प्रथमा गृह्णाति। अपो देवा मधुमतीरगृभ्णन्नित्यपो देवा रसवतीरगृह्णन्नित्येवैतदाहोर्जस्वती राजस्वश्चिताना इति रसवतीरित्येवैतदाह यदाहोर्जस्वतीरिति राजस्वश्चि-

* 'सम्भरति'—इति क।

† 'पात्रे'—इति ख। 'पात्रे'—इति ग, घ।

माना इति याः प्रज्ञाता राजस्व इत्येवैतदाह याभिर्मित्रावरुणावभ्यषिञ्चन्नित्येताभिर्हि मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्र मनयन्नत्यरातीरित्येताभिर्हीन्द्रं नाष्ट्रा रक्षाᳪस्यत्यनयंस्ताभिरभिषिञ्चति वाग्वै सरस्वती वाचैवैन मेतदभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति * ॥ ३ ॥

अथाध्वर्युः। चतुर्गृहीत माज्यं गृहीत्वापो ऽभ्यवैति तद्या ऽऊर्मी व्युद्हतः पशौ वा पुरुषे वाभ्यवेते तौ गृह्णाति ॥ ४ ॥

स यः प्राङुदूहति। तं गृह्णाति वृषा ऊर्मिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृष्ण ऊर्मिरसि राष्ट्रदा राष्ट्र ममुष्मै देहीति † ॥ ५ ॥

अथ यः प्रत्यङ्ङुदूहति। तं गृह्णाति ‡ वृषसेनोऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहा वृषसेनो ऽसि राष्ट्रदा राष्ट्र ममुष्मै देहीति ताभिरभिषिञ्चति वीर्यं वा ऽएतदपा मुदूहति पशौ वा

---

* 'सम्भरति'—इति क।

† 'देहीति'—इति क। 'देहीति'—इति ख, ग घ,।

‡ 'गृह्णाति'—इति ख।

पुरुषे वाऽप्यवेते व्वीर्य्यणैवैन मेतदभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति * ॥ ६ ॥

अथ स्यन्दमाना गृह्णाति । अर्थेत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहार्थेत स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चति व्वीर्य्यण वा ऽएताः स्यन्दन्ते तस्मादेनाः स्यन्दमाना न किञ्चन प्रतिधारयते व्वीर्य्यणैवैन मेतदभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति † ॥ ७ ॥

अथ याः स्यन्दमानानां प्रतीपꣳ स्यन्दन्ते । ता गृह्णात्योजस्वती स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहौजस्वती स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चति व्वीर्य्यण वा ऽएताः स्यन्दमानानां प्रतीपꣳ स्यन्दन्ते व्वीर्य्यणैवैन मेतदभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति ‡ ॥ ८ ॥

अथापयतीर्गृह्णाति । आपः परिवाहिणी स्थ राष्ट्रदा [ राष्ट्रं मे दत्त स्वाहापः परिवाहिणी स्थ

---

*, †, ‡ 'सम्भरति'—इति क ।

राष्ट्रदा *] राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चत्ये-
तद्वै वा ऽएषापच्छिद्यैषैव पुनर्भवत्यपि ह वा
ऽअस्यान्यराष्ट्रीयो राष्ट्रे भवत्यप्यन्यराष्ट्रीय मवहरते
तथास्मिन् भूमानं दधाति भूमन्नेवैन मेतदभि-
षिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भ-
रति † ॥ ९ ॥

अथ नदीपतिं गृह्णाति। अपां पतिरसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां पतिरसि राष्ट्रदा राष्ट्र ममुष्मै देहीति ताभिरभिषिञ्चत्यपां वा ऽएष पतिर्यन्नदीपतिर्विशा मेवैन मेतत् पतिं करोत्येता वा ऽएका आपस्ता एवैतत् सम्भरति ‡ ॥ १० ॥

अथ निवेष्यं गृह्णाति। अपां गर्भो ऽसि राष्ट्रदा राष्ट्रं मे देहि स्वाहापां गर्भो ऽसि राष्ट्रदा राष्ट्र ममुष्मै देहीति ताभिरभिषिञ्चति गर्भं वा ऽएतदाप उपनिवेष्टन्ते विशा मेवैन

---

* बन्धनीचिह्नान्तर्गतपाठो ग-पुस्तके नास्ति।

†, ‡ 'सम्भरति'—इति क।

मेतद् गर्भं करोत्येता वा ऽएका आपस्ता एवै-
तत् सम्भरति * ॥ ११ ॥

अथ याः स्यन्दमानानाᳫं स्थावरा ह्रदा भव-
न्ति। प्रत्यातापे ता गृह्णाति सूर्यत्वचस स्थ
राष्ट्रदा राष्ट्रं मे दत्त स्वाहा सूर्यत्वचस स्थ राष्ट्र-
दा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति
व्वर्चसैवैन मेतदभिषिञ्चति सूर्यत्वचस मेवैन मेतत्
करोति व्वृद्ध्या वा ऽएता आपो भवन्ति याः
स्यन्दमानानां न स्यन्दन्ते व्वृद्धासवो वा ऽएष
यद्राजसूयं तस्मादेताभिरभिषिञ्चत्येता वा ऽएका
आपस्ता एवैतत् सम्भरति † ॥ १२ ॥

अथ या आतपति व्वर्षन्ति। ता गृह्णाति
सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा
सूर्यवर्चस स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति
ताभिरभिषिञ्चति व्वर्चसैवैन मेतदभिषिञ्चति
सूर्यवर्चस मेवैन मेतत् करोति मेध्या वा ऽएता
आपो भवन्ति या आतपति व्वर्षन्त्यप्राप्ता

*, † 'सम्भरति'—इति क।

हौमां * भवन्त्यथैना गृह्णाति मेध्य मेवैन मेतत् करोत्येता वा ऽएका आपस्ता एवैतत् सम्भरति † ॥ १३ ॥

अथ वैशन्तीर्गृह्णाति । मान्दा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा मान्दा स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चति व्विश मेवास्मा ऽएतत् स्थावरा मनपक्रमिणीं करोत्येता वा ऽएका आपस्ता एवैतत् सम्भरति ‡ ॥ १४ ॥

अथ कूप्या गृह्णाति । व्रजक्षित स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्रजक्षित स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चति तद्या इमां परेणापस्ता एवैतत् सम्भरत्यपामु चैव सर्वत्वाय तस्मादेताभिरभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति § ॥ १५ ॥

अथ प्रुष्वा गृह्णाति । व्वाशा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा व्वाशा स्थ राष्ट्रदा राष्ट्र

---

* 'हौमा'—इति च का०-वेवरेण इष्टः ।

†, ‡, § 'सम्भरति'—इति क ।

ममुष्मै दत्तेति ताभिरभिषिञ्चत्यन्नाद्येनैवैन मेतदभिषिञ्चत्यन्नाद्य मेवास्मिन्नेतद्दधातीदं वा ऽअसावादित्य उद्यन्नेव यथाय मग्निर्निर्दहेदेव मोषधीरन्नाद्यं निर्दहति तदेता आपो ऽभ्यवयत्यः शमयन्ति न ह वा ऽइहान्नाद्यं परिशिष्यते यदेता आपो नाभ्यवेयुरन्नाद्येनैवैन मेतदभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति * ॥ १६ ॥

अथ मधु गृह्णाति। शविष्ठा स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शविष्ठा स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चत्यपां चैवैन मेतदोषधीनां च रसेनाभिषिञ्चत्येता वा एका आपस्ता एवैतत् सम्भरति † ॥ १७ ॥

अथ गोर्व्विजायमानाया उल्ब्या गृह्णाति। शक्करी स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा शक्करी स्थ राष्ट्रदा राष्ट्र ममुष्मै दत्तेति ताभिरभिषिञ्चति पशुभिरेवैन मेतदभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति ‡ ॥ १८ ॥

*, † 'सम्भरति'—इति क।

‡ 'सम्भरति'—इति च डा०-वेबर-दृष्टः पाठः।

अथ पयो गृह्णाति। जनभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा जनभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशुभिरेवैनमेतदभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति * ॥ १९ ॥

अथ घृतं गृह्णाति। विश्वभृत स्थ राष्ट्रदा राष्ट्रं मे दत्त स्वाहा विश्वभृत स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेति ताभिरभिषिञ्चति पशूनामेवैनमेतद्रसेनाभिषिञ्चत्येता वा ऽएका आपस्ता एवैतत् सम्भरति † ॥ २० ॥

अथ मरीचीः। अञ्जलिना सङ्गृह्यापिसृजत्याप: स्वराज स्थ राष्ट्रदा राष्ट्रममुष्मै दत्तेत्येता वा ऽआप: स्वराजो यन्मरीचयस्ता यत् स्यन्दन्त ऽइवान्यो ऽन्यस्या एवैतच्छ्रिया ऽअतिष्ठमाना उत्तराधरा इव भवन्त्यो यन्ति स्वाराज्यमेवास्मिन्नेतद्दधात्येता वा ऽएका आपस्ता एवैतत् सम्भरति ॥ २१ ॥

---

*, † 'सम्भरति'—इति क।

ता वा ऽएताः। सप्तदशापः सम्भरति सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तस्मात् सप्तदशापः सम्भरति ॥ २२ ॥

षोडश ता आपो या अभिजुहोति। षोडशाहुतीर्जुहोति ता द्वात्रिꣳशद्द्वयीषु न जुहोति सारस्वतीषु च मरीचिषु च ताश्चतुस्त्रिꣳशत्त्रयस्त्रिꣳशद्वै देवाः प्रजापतिश्चतुस्त्रिꣳशस्तदेनं प्रजापतिं करोति * ॥ २३ ॥

अथ यद्धुत्वा हुत्वा गृह्णाति। वज्रो वा ऽआज्यं वज्रेणैवैतदाज्येन स्पृत्वा स्पृत्वा स्वीकृत्य गृह्णाति † ॥ २४ ॥

अथ यत् सारस्वतीषु न जुहोति। वाग्वै सरस्वती वज्र आज्यं नेद्वज्रेणाज्येन वाचꣳ हिनसानीति तस्मात् सारस्वतीषु न जुहोति ‡ ॥ २५ ॥

अथ यन्मरीचिषु न जुहोति। नेदनद्धे-

---

* करोति'—इति क।

† 'गृह्णाति'—इति क।

‡ 'जुहोति'—इति क।

वैता माहुतिं जुहवानीति तस्मान् मरीचिषु न जुहोति ॥ २६ ॥

ताः सार्द्धं मौदुम्बरे पात्रे समवनयति । मधुमतीर्मधुमतीभिः पृच्यन्ता मिति रसवती रसवतीभिः पृच्यन्ता मित्येवैतदाह महि क्षत्रं क्षत्रियाय व्वन्वाना इति तत्परोऽक्षं क्षत्रं यजमानायाशिष माशास्ते यदाह महि क्षत्रं क्षत्रियाय व्वन्वाना इति ॥ २७ ॥

ता अग्रेण मैत्रावरुणस्य धिष्ण्यꣳ सादयति । अनाधृष्टाः सीदत सहौजस इत्यनाधृष्टाः सीदत रक्षोभिरित्येवैतदाह सहौजस इति सवीर्या इत्येवैतदाह महि क्षत्रं क्षत्रियाय दधतीरिति तत्प्रत्यक्षं क्षत्रं यजमानायाशिष माशास्ते यदाह महि क्षत्रं क्षत्रियाय दधतीरिति ॥ २८ ॥ १ ॥

॥ इति तृतीयप्रपाठके प्रथमं ब्राह्मणम् [३. ४.] ॥

चतुर्थब्राह्मणे यजमानाभिषेकार्थं सप्तदशसङ्ख्यकाना मपां सम्भरण मुच्यते । कात्यायनः कञ्चिद् विशेषं सूचयामास— "इडान्तेऽपो गृह्णाति, यूप मुत्तरेण नैमित्तिकीरसम्भवाद्,

गत्वेतराः, पृथक् पात्रेष्वौदुम्बरेषु"–इति *। आतपवर्ष्याण्युदकानि यूपस्योत्तरप्रदेशे निधाय गृह्णीयात्। इतराः सम्भविनीरपस्तु तत्र तत्र गत्वा गृह्णीयात्। तदिद मपसम्भरणं विधत्ते— "स वा अप इति। उदकसम्भरणं वीर्यात्मना प्रशंसति— "तद्यदिति। अपां वीर्यरूपं रस मेव सम्भृतवान् भवतीत्यर्थः ॥ १ ॥

सम्भरणस्य पात्रविशेषं विधत्ते— "औदुम्बर इति †। 'पात्रे'–इति जात्येकवचनम्। सर्वाणि सप्तदश पात्राणि औदुम्बराणि भवेयुः। तथा च सूत्र मुदाहृतम् ‡। औदुम्बरत्व मन्नावरोधकत्वेन प्रशंसति— "अन्नं वा इति ॥ २ ॥

जलसम्भरणे क्रमं विधत्ते— "स सारस्वतीरेवेति। सरस्वत्यां नद्यां भवाः अपः प्रथमं गृह्णीयात् §। 'एव'–शब्दोऽन्ययोगव्यवच्छेदार्थः। तत्र मन्त्रं विधत्ते— "अपो देवा इति ‖। 'मधुमतीः' मधुररसवतीः, 'ऊर्जस्वतीः' विशिष्टान्नरसवतीः। 'राजस्वः' राजानं सुवते, जनयन्ति, अनुजानन्तीति राजस्वः; ताः 'चितानाः' देवतात्वेन चेतयमानाः, 'अपः' उदकानि 'देवाः' 'अगृभ्णन्' भकारश्छान्दसः। ता अपो विशिनष्टि— 'याभिः' अद्भिः 'मित्रावरुणौ' 'अभ्यषिञ्चन्' देवाः, 'याभिः' च 'इन्द्रम्'। 'अरातीः' अदानशीलाः शत्रुसेनाः 'अत्यनयन्' अतिक्रम्य नीतवन्तः इति ॥

---

* का० श्रौ० सू० १५. ४. २१–२४ क।

† का० श्रौ० सू० १५. ४. २४ ख।

‡ प्रथमकण्डीभाष्ये।

§ का० श्रौ० सू० १५. ४. २५, ४३।

‖ वा० सं० १०. १. १।

मन्त्रं प्रतिपाद मनूव्याचष्टे— "अपो देवा इति। चिताना इत्यस्य व्याख्यानम्— 'प्रज्ञाता:'–इति। शेषं निगदसिद्धम्।

एतासा मभिषेकार्थत्वं प्रशंसति— "ताभिरभिषिञ्चतीति। यस्या अपो गृह्णन्ते, तां सरस्वतीं नदीं वागात्मना प्रशंसति— "वाग् वै सरस्वतीति। सारस्वतीभिरद्भिरभिषेककरणेन वाचैवाभिषेकं कृतवान् भवतीत्यर्थ:। "एता वा एका इति। सारस्वत्य: 'आप:' 'एका:' एक मुदकम्। एवं सारस्वतीरपो गृहीत्वा षोडशापो गृह्णीयात् ॥

तत्र विशेषं दर्शयामास कात्यायन:— "सारस्वतीर्गृह्णात्यपो देवा इति, जुहोत्युत्तरासु चतुर्गृहीतानि वृष्णऊर्म्यादिभि: स्वाहाकारान्तै: पूर्वै: पूर्वै: प्रतिमन्त्र मुत्तरैरुत्तरैर्गृह्णाति"–इति *। उत्तरासु षोडशासु चतुर्गृहीतेनाज्येन पूर्वं स्वाहान्तैर्मन्त्रैर्हुत्वा हुत्वा उत्तरैरुत्तरैस्तास्ता अपो गृह्णीयादित्यर्थ: ॥ ३ ॥

तदिदानीं क्रमेण विधास्यते; तत्र प्रथमा मूर्मिद्वयग्रहणं विधत्ते— "अथाध्वर्युरिति †। चतुर्गृहीताज्येन सह 'आप:' वक्ष्यमाणा: षोडश 'अभि'–लक्ष्य 'अवैति' गच्छतीति सर्वशेष:। 'तत्' तत्र नद्यां पशुपुरुषयोरन्यतरस्मिन् 'अभ्यवेते' अवगाढे सति 'यौ ऊर्मी' 'व्यूहत:' विविधं पूर्वापरीभावेन गच्छत: 'तौ गृह्णीयात्' ‡ ॥ ४ ॥

---

* का० श्रौ० सू० १५. ४. ४३, ४४। अत्र "काण्वानाञ्च यथाश्रुति विनियोगक्रमेण च आपो ग्रहीतव्या:'–इति कर्काचार्य:।

† का० श्रौ० सू० १५. ४. २६।

‡ 'ऊर्मी कल्लोलौ'–इति कर्काचार्य:।

तत्रोर्मिद्वयस्यानियमेन समस्य वाचा ग्रहणे प्राप्ते क्रमं विधत्ते— "स यः प्राङ्ङिति। 'यः' ऊर्मिः 'प्राङ्' प्राङ्मुखः 'उदङ्ङिति' उत्तरच्छेत्, 'तं' गृह्णीयात् ॥

तत्र हवनमन्त्रं ग्रहणमन्त्रं च विधत्ते— "वृष्ण ऊर्मिरिति। स्वाहान्तो हवनमन्त्रः, द्वितीयो ग्रहणमन्त्र इति विभागः। अर्थस्तु— हे ऊर्मे ! 'वृष्णोः' वर्षितुः सेतुर्वा सम्बन्धी 'ऊर्मिः' भवसि। 'राष्ट्रदाः' त्वं तु स्वभावत एव राष्ट्रं जनपदं ददातीति राष्ट्रदाः। अतो 'राष्ट्रं' 'मे' मह्यं 'देहि'। 'स्वाहा' –इति होमार्थः * ॥

द्वितीयोऽप्येवं व्याख्येयः; तत्र 'अमुष्मै'–इति विशेषः। एतन्नामकाय यजमानाय मह्यं देहीति तस्यार्थः † ॥

एव मुपरितना अपि मन्त्रा व्याख्येयाः ॥ ५ ॥

द्वितीयस्योर्मेर्ग्रहणं विधत्ते— "अथ यः प्रत्यङ्ङिति। "वृषसेन इति ‡। 'वृषसेनः' "वृष सेचने", सेनो नाम संहतिः; वर्षणशीलजलसङ्घो भवसि। शिष्टं पूर्ववत् ॥

ऊर्मिद्वयं जलवीर्यात्मना प्रशंसति— "वीर्यं वा इति। उभयोरप्यूर्म्योरेकत्वेन परिगणन माह— "एता वा एका आप इति ॥ ६ ॥

---

* वा० सं० १०. २. १।

† वा० सं० १०. २. २।

‡ तत्र होममन्त्रः—वा० सं० १०. २. ३। ततो ग्रहणमन्त्रः— वा० सं० १०. २. ४। 'पूर्वं मासु चतुर्गृहीतहोमः पश्चात् तासां ग्रहणम्'—इति कर्कः। 'सारस्वतीषु मरीचिषु न होमः प्रतिविधात्' —इति च तत्रैव ( ४५ सू० )।

प्रवहन्तीना मपां ग्रहणं विधत्ते — "अथ स्यन्दमाना इति *। 'स्यन्दमानाः' प्रवहन्तीरपो गृह्णीयात् ॥

तन्मन्त्रस्याप्यय मर्थः— हे आपः ! 'अर्थेतः' अर्थं प्रयोजनं गच्छन्तीति तादृश्यः 'स्थ' भवथ । अत्र 'दत्त'—इति विशेषः † । प्रवहन्तीना मपां वीर्यात्मकत्व माह— "वीर्येणेति । यत आपो वीर्येणैव 'स्यन्दन्ते', 'तस्मात्' 'स्यन्दमानाः' 'एनाः' अपः 'किञ्चन' वस्त्वपि 'प्रति'-मुखं 'न धारयते' न धृतं भवति । यद्वा, प्रवहन्तीरपो न कश्चिदपि धारयितुं शक्नोतीत्यर्थः ॥ ७ ॥

प्रतिलोमं प्रवहन्तीना मपां ग्रहणं विधत्ते— "अथ याः स्यन्दमानाना मिति । 'स्यन्दमानानाम्' अपां मध्ये 'प्रतीपं' प्रतिकूलं ‡ 'स्यन्दन्ते', 'ताः' गृह्णीयात् § । 'ओजस्वतीः' बलवत्यः 'स्थ' "वीर्येणेत्यादि, पूर्ववद् व्याख्येयम् ‖ ॥ ८ ॥

नद्याः सकाशाद् अपच्छिद्य गच्छन्तीना मपां ग्रहणं विधत्ते— "अथापयतीरिति । 'अपयतीः' नदीप्रवाहं परित्यज्य पृथक्-प्रवाहरूपेण याः स्यन्दन्ते अपयत्यः, ता गृह्णीयात् ¶ ॥

---

* का० श्रौ० सू० १५. ४. २७ । 'नद्यादिस्था वहन्त्य आपः स्यन्दमाना उच्यन्ते'—इति कर्काचार्यः ।

† वा० सं० १०. ३. १, २ ।

‡ चन्द्राकर्षणात् स्फीता विपरीतवाहिन्यः ( जोआर—इति प्रसिद्धाः ) आपः प्रतिलोमा उच्यन्ते ।

§ का० श्रौ० सू० १५. ४. २८ ।

‖ वा० सं० १०. ३. ३, ४ ।

¶ का० श्रौ० सू० १५. ४. २९ ।

हे 'आपः' आप्नुवन्ति सर्व मित्यापः, 'परिवाहिणीः' परितः सर्वतो वाहो यासां ताः। यद्वा, 'परिवाहिणीः' परित्यज्य पृथग् वहन्त्यः स्थ। तत्र स्वाहान्तो हवनमन्त्रः, उत्तरो ग्रहणमन्त्र इति प्रागुक्तम्। एव मुत्तरत्राप्यवगन्तव्यम् ॥

परिवाहिणीभिरभिषेकं प्रशंसति— "एतस्यै वा इति। 'एषा' परिवाहिणी *, 'एतस्याः' महानद्याः सकाशाद् 'अवच्छिद्य' पृथक्-कृत्य परिवहति, 'एषैव पुनर्भवति'। संसृष्टा परिणादी पुनरेषैव महानदी भवतीत्यर्थः। यस्मादपच्छिन्ना नदी, पुनस्तां महानदीं प्राप्नोति। तस्मादस्यैताभिरद्भिरभिषिक्तस्यान्यराष्ट्रीयः पुरुषः 'राष्ट्रे' स्वराष्ट्रे भवति, अन्यराष्ट्रीयम् 'अवहरते' वशयति। यथा महानदी परिणादीसंसर्गेण भूयसी जाता, 'तथा' तस्मिन् राजनि अन्यराष्ट्रीयसमवधानेन 'भूमानं' भूयस्त्वं 'दधाति' † ॥ ८ ॥

अथ समुद्रोदकग्रहणं विधत्ते— "अथ नदीपतिं गृह्णातीति ‡। नदीपतिसमुद्रस्थिताना मपा मविशेषेण ग्रहणे प्राप्ते सृद्यानाम् उच्छलन्तीना मपां ग्रहणं कर्त्तव्य मिति विशेषः; "नदीपतेः सृद्याः"-इति श्रुत्यन्तरात् §। सुष्ठु उद्यन्ति ऊर्द्ध्वं यान्तीति सृद्याः, ता गृह्णीयादित्यर्थः। अपाम् उदकानां पतिः पालकः ‖ ॥ १० ॥

---

* 'परिणादी'—इति ङ, क, ञ। 'परिवाहिणी स्थेति परिणदीनाम्'—इति चेह आप० श्रौ० सू० १८. १३. ८।

† वा० सं० १०. ३. ५, ६। ‡ का० श्रौ० सू० १५. ४. ३०।

§ का० श्रौ० सू० १५. ४. ३१। 'सृद्याः वीचिस्थाः'।

‖ अत्र मन्त्रौ— वा० सं० १०. ३. ७, ८।

अथावर्त्तोदकग्रहणं विधत्ते— "अथ निवेष्य मिति * । निवेष्यते † आवर्त्त्यतेऽस्मिन् तृणादिक मिति 'निवेष्यः' आवर्त्तः । तत्रत्य मुदकं गृह्णीयात् । 'अपाम्' उदकानां 'गर्भः' अपत्यं भवति । "गर्भं वा एतद्"–इत्यादिष्वय मर्थः ‡ ॥ ११ ॥

"अथ यः स्यन्दमानाना मिति । हे 'आपः !' 'सूर्यत्वचसः' सूर्यस्य त्वक् दीप्तिर्यासां ताः ; यद्वा , सूर्यस्य त्वक् शरीरं प्रतिबिम्बरूपेण यासु तिष्ठति ताः ; तथाविधाः 'स्थ' । "वर्च्चसैवेति । 'वर्चसा' दीप्त्या अभिषिक्तवान् भवति । 'सूर्यत्वचसं' सूर्यसमानतेजस्कं कृतवान् भवति § ॥

"वरुण्या इति । स्थावरा आपो वरुणदेवत्या इत्यर्थः ‖ । "वरुणसव इति । 'राजसूयम्'–इति यत् 'एषः वरुणसवः' वरुणाभिषेकः ; वरुणोऽभिषिच्यते यस्मिन्निति सः । अतो वरुणदेवत्याभिः कूप्याभिरद्भिरभिषेकः कर्त्तव्यः ॥ १२ ॥

अथातपवर्ष्याग्रहणं विधत्ते— "अथ या आतपतीति ¶ । सूर्ये आतपति सति या वर्षन्ति , स्यन्दन्ते , ता गृह्णीयात् । "सूर्यवर्चस इत्यातपति वर्ष्याणाम्"–इति हि आपस्तम्बः ** ।

---

* का० श्रौ० सू० १५. ४. ३३ ।

† 'निवेष्यते'—इति ज ।

‡ अत्र मन्त्रौ— वा० सं० १०. ३. ६ , १० ।

§ वा० सं १०. ४. १ , २ ।

‖ का० श्रौ० सू० १५. ४. ३४ । 'स्यन्दमानानां मध्ये याः स्थावराः स्थिराः न वहन्ति'—इत्यादिस्तद्वृत्तिरिहालोच्या ।

¶ का० श्रौ० सू० १५. ४. ३५ ।

** आप० श्रौ० सू० १८. १३. १० ।

'सूर्यवर्चसः' सूर्यदीप्तियुक्ताः * । शिष्टं पूर्ववत् । "मेध्या वा इति । सूर्यतेजसा युक्तत्वात् आतपवर्ष्याः शुद्धा इत्यर्थः । तासां ग्रहणे कश्चिद् विशेषं विधत्ते— "अप्राप्ता हीति । 'इमां' भूमिम् 'अप्राप्ताः भवन्ति', भूमौ न पतिता भवन्ति; 'अथ' तदानी मेव 'एताः' अपः गृह्णीयात् ॥ १३ ॥

अथ सरस्याना मपां ग्रहणं विधत्ते— "अथ वेशन्ती-रिति । वेशन्तोऽल्पसरः, तत्र भवा अपो गृह्णीयात् † । हे आपः ! 'मान्दाः स्थ' प्रवाहाभावात् मन्दस्वभावाः स्थ । यद्वा, मन्दते रूपम् । भूतानि यत्र मन्दन्त इति मान्दाः । "विश मेवेति । मान्दाभिः अद्भिरभिषेकेण 'अस्मै' 'विशं' प्रजां 'स्थावरां' स्थिराम् अनपक्रमिणीं स्वाधीनां कृतवान् भवतीत्यर्थः ‡ ॥ १४ ॥

कूप्याना मपां ग्रहणं विधत्ते— "अथ कूप्या इति § । कूपे भवाः कूप्याः । "व्रजक्षित स्थेति । 'व्रजः'-इति मेघनामसु पठितः ‖, इह तूदकधारणसामान्यात् कूपोऽभिधीयते । व्रजे कूपे क्षिताः निवसन्त्यः । "क्षि निवासगत्योः" ¶, क्विप् । कूपस्थाः स्थ ** । "तया इमा मिति । 'इमां' भूमिं 'परेण'

---

* वा० सं० १०. ४. ३, ४ ।

† का० श्रौ० सू० १५. ४. ३६ ।

‡ वा० सं० १०. ४. ५, ६ ।

§ का० श्रौ० सू० १५. ४. ३७ ।

‖ निघ० १. १०. ११ ।

¶ तु० पं० २२७ धा० ।

** वा० सं० १०. ४. ७, ८ ।

भूमेरधस्तात् विप्रकृष्टे देशे कूपे स्थिताः अपः गृह्णीयात्। किमर्थं भूमिस्थितानामपां ग्रहणम्? तत्राह— "अपां सु चेति। 'अपां सर्वत्वाय' सर्वेषामुदकानां समष्ट्या इत्यर्थः ॥ १५ ॥

अथ नीहारोदकानां ग्रहणं विधत्ते— "अथ प्रुष्वा इति*। 'प्रुष्वाः' नीहाराः। हे आपः! 'वाशाः स्थ'। "वश कान्तौ"†। सर्वैः काम्यमाना भवथ‡। यद्वा, वश्याः स्थ; नीहारो हि नदीप्रवाहवत् मनुष्यादिगतिं न प्रतिबध्नाति, अतो वश्यत्वम्। प्रुष्वाणामन्नाद्यात्मत्व मुपपादयति— "इदं वा असाविति। 'उद्यन्' 'असौ' अन्तरिक्षे दृश्यमानः 'आदित्यः' 'इदम्' ओषधिरूपम् 'अन्नाद्यं' निर्दहति। अन्नं च तदाद्य मदनीयं चेत्यन्नाद्यम्। तत्र दृष्टान्तः— "यथाय मग्निर्निर्दहेदेव मित्यादि। 'तत्' तदा सस्यानामातपजातम्लानिसमये§ नीहारगताः 'आपः' 'अभ्यवयत्यः'। सव्यतिरेकं दर्शयति— "न ह वेत्यादिना। तस्मादोषधिवर्द्धनहेतुभूताभिः प्रुष्वाभिरद्भिः अभिषेकेण यजमाने अन्नाद्य मेव निहितवान् भवतीत्यर्थः ॥ १६ ॥

अथ मधुनो ग्रहणं विधत्ते— "अथ मध्विति‖। हे 'मधु!' द्रवरूपा आपः! 'शविष्ठाः' बलवत्तमाः 'स्थ'¶। "अपाञ्चेति। 'एतत्' एताभिः मधुद्रवरूपाभिरद्भिः अभि-

---

* का० श्रौ० सू० १५. ४. ३८।

† अदा० प० ६६ धा०।

‡ वा० सं० १०. ४. ६, १०।

§ ०म्रमाय (?)'—इति ज।

‖ का० श्रौ० सू० १५. ४. ३६।

¶ वा० सं० १०. ४. ११, १२।

षेकेण 'अपां च ओषधीनाञ्च' 'रसेन' अभिषिक्तवान् भवति; मधुनो द्व्यात्मकत्वादित्यर्थः ॥ १७ ॥

अथ गोरुल्व्यानां ग्रहणं विधत्ते—"अथ गोरिति *। 'विजायमानायाः' प्रसूयमानायाः 'गोः' 'उल्व्याः' उल्वे गर्भवेष्टने भवाः अपः गृह्णीयात्। हे आपः! 'शक्करीः' गर्भरक्षणे शक्ताः समर्था भवथ †। "पशुभिरिति। पशुसम्बन्धिनीभिरेताभिरद्भिः अभिषेकेण 'पशुभिः एव' 'एनं' सुन्वन्तमभिषिक्तवान् भवतीत्यर्थः ॥ १८ ॥

अथ पयसां ग्रहणं विधत्ते—"अथ पय इति ‡। हे क्षीरात्मिका आपः! 'जनभृतः स्थ' जनान् बिभ्रतीति जनभृतः; क्षीरेण हि प्राणिजातं पुष्यते § ॥ १९ ॥

अथ घृतस्य ग्रहणं विधत्ते—"अथ घृत मिति ‖। 'विश्वभृतः स्थ' हे घृतद्रवरूपाः आपः! विश्वपोषिका भवथ ¶। "पशूना मिति। घृतस्य पशुरसत्वं क्षीरादिद्वारा प्रसिद्धम् ॥ २० ॥

एतदेव सारस्वतवर्जं चतुर्गृहीताज्येन पूर्वं हुत्वा-हुत्वा पञ्चदशाना मपां ग्रहणं विहितम्, अथान्तिमस्य जलस्य ग्रहणं सविशेषं विधत्ते—"अथ मरीचीरिति। 'मरीचीः' 'अञ्जलिना' पात्रेण 'सङ्गृह्य' गृहीत्वा ** 'अपिसृजति'। सर्वासु गृहीतासु

* का० श्रौ० सू० १५. ४. ४० ।
† वा० सं० १०. ४. १३, १४ ।
‡ का० श्रौ० सू० १५. ४. ४१ )
§ वा० सं० १०. ४. १५, १६ ।
‖ का० श्रौ० सू० १५. ४. ४२ ।
¶ वा० सं० १०. ४. १७, १८ ।
** 'गृहीत्वा-गृहीत्वा'—इति च ।

अप्सु संसृजेदित्यर्थः। अत्र सूत्रम्— "आपः स्वराज इति मरीचीर्गृहीत्वाञ्जलिना सर्वासु संसृजति"–इति * ॥

हे मरीचिरूपा आपः! 'स्वराजः स्थ' स्वय मेव राजमाना भवथ †। अत्र होमाभावात् स्वाहान्तः पूर्वो मन्त्रो न पठितः ‡। कथं मरीचीना मप्त्वेन परिगणन मिति तदुपपादयति— "एता वा आप इति। 'मरीचयः'–इति 'यत्', 'एताः' 'स्वराजः' स्वय मेव दीप्यमानाः 'आपः'। "ता यत् स्यन्दन्त इति। 'यत्' यस्मात् 'ताः' मरीचयः 'स्यन्दन्त इव' प्रवहन्तीव। 'इव'–शब्दः उपमार्थे §; साक्षात् प्रवहणाभावात्। यथा जलसङ्घा उपर्युपरिभावेन वर्त्तन्ते, तद्वदेता मरीचयः 'अन्योऽन्यस्य' मरीचेः 'श्रियै' शोभायै 'अतिष्ठमानाः' स्थातु मसहिष्णवः 'उत्तराधरा इव भवन्त्यः' 'यन्ति' गच्छन्ति। अतो जल-साम्यादप्त्वेन परिगणन मित्यर्थः ‖। मरीचीनां ग्रहणं स्वाराज्य-हेतुत्वेन प्रशंसति— "स्वाराज्य मिति। यतो 'मरीचयः' स्वराज आपः ¶ ॥ २१ ॥

---

* का० श्रौ० सू० १५. ४. ४५।

† वा० सं० १०. ४. १६।

‡ इह संहितापाठ, सत्त्वयोऽवलोक्यो वा।

§ 'अल्पार्थे'—इति ज।

‖ सारस्वत्यः, पूर्वोर्म्यः, अपरोर्म्यः, स्यन्दमानाः, प्रतिलोमाः, अपयत्यः, समुद्रियाः (वीचिस्थाः, तीराहृताश्च), निवेष्याः, स्था-वराः, आतपवर्ष्याः, सरस्याः, कूप्याः, प्रुष्वाः, मधव्याः, गोउल्व्याः, पयस्याः, घृतात्मिकाश्चेति सप्तदशविधा आपो भवन्तीति।

¶ 'सूर्यरश्मिभिरुद्धृता आपो मरीचयः'—इति का० वृ०।

सम्भूतानामेषां समदशसङ्ख्यां प्रजापत्यात्मना स्तौति— "ता वा एताः समदशेति। प्रजापतेः समदशत्वं प्रागुक्तम् * ॥ २२ ॥

अथोक्तानां सारस्वतीप्रभृतिमरीच्यन्तानामेषामाहुतीनां च सङ्ख्यां समस्य प्रजापत्यात्मना प्रशंसति— "षोडश ता आप इति। 'याः' 'आपः' अभिलक्ष्य जुहोति, 'ताः' 'षोडश'; ऊर्मिद्वयस्य विवेके षोडशसङ्ख्याका भवन्ति; आहुतयोऽपि षोडश; आहुतिभिः रहिताः सारस्वत्यो मरीचय इति द्व्यः; ताः सम्भूय चतुस्त्रिंशत् सम्पद्यते। अत्र चतुस्त्रिंशत्सम्पत्त्या चतुस्त्रिंशद्देवतात्मकं प्रजापतिमेव कृतवान् भवतीति तत्करणं प्रशस्तमित्यर्थः ॥ २३ ॥

होमपूर्वकं ग्रहणं प्रशंसति— "अथ यद्धुत्वा-हुत्वेति। आज्यस्य वज्रात्मकत्वश्रुतिः प्रागुदाहृता †। वज्ररूपेण 'आज्येन' 'स्तृत्वा-स्तृत्वा' हिंसित्वा-हिंसित्वा, ततः 'स्वीकृत्य' स्वाधीनं कृत्वा गृह्णानो भवेत्। यथा लोके राजादिः प्रबलं शत्रु-प्रभृति जनं प्रथमं बाधित्वा पश्चात् स्वाधीनं करोति, तद्वदित्यर्थः ॥ २४ ॥

सारस्वतीषु मरीचिषु च होमाभावे कारणमाह— "अथ यदिति ‡। सरस्वत्या वाक्त्वात् वाचो वज्रेण हिंसा माभूदिति न होतव्यम् ॥ २५ ॥

---

* इहैव पुरस्तात्— २४ पृ० १ पं० द्रष्टव्यम्।

† प्रथमकाण्डे— ३६१ पृ० ७ पं० द्रष्टव्यम्।

‡ सारस्वतीषु मरीचिषु च न होमः, प्रतिषेधात्। अत एव संहितायामपि एतदुभयञ्च स्वाहान्तमन्त्राम्नानो न श्रूयते।

"अथ यन्मरीचिष्विति। मरीचिष्वपि 'अनवा' अस्थाने तासां होमाधिकरणत्वासम्भवान्न होतव्य मित्यर्थः। 'नेत्'-इति निपातः परिभये, 'जुहवानि'-इत्यनेन सम्बध्यते ॥ २६ ॥

विधत्ते — "ताः सार्द्धं मिति। 'ताः' विहिताः, पृथक्-पृथक्-पात्रे गृहीताः आपः 'सार्द्धं' सम्भूय एकस्मिन् 'पात्रे' 'समवनयति' आसिञ्चेदित्यर्थः *। 'मधुमतीः' मधुररसवत्यः आपः 'मधुमतीभिः' अद्भिः 'पृच्यन्ताम्'। "पृची सम्पर्के †", सम्पृच्यन्ताम्। ता विशिनष्टि— 'महि' महत् 'क्षत्रं' बलं क्षत्रियकुलं वा 'क्षत्रियाय' यजमानाय 'वन्वानाः' दातुं याचयमानाः कामयमाना इति। मन्त्र मनूद्य ‡ व्याचष्टे— "मधुमतीरित्यादि। 'महि क्षत्रं क्षत्रियाय वन्वाना इति यदाह', 'तत्' तेन 'यजमानाय' 'परोक्षं' क्षत्र माशासन माशासितवान् भवतीति योजना। 'क्षत्रियाय'-इति तादर्थ्याभिधानाद्, 'वन्वानाः'-इति याचनाभिधानाद्वा, आशिषः परोक्षत्व मित्यर्थः ॥ २७ ॥

संसृष्टाना मपां मैत्रावरुणधिष्ण्यस्य पुरोदेशे सादनं समन्त्रकं विधत्ते — "ता अग्रेणेति §। हे आपः! 'अनाधृष्टाः' रक्षोभिरबाधिताः, 'सहौजसः' ओजसा बलेन सहिताः, सवीर्याः 'सीदत' उपविशत। 'महि' महत्, 'क्षत्रं' बलं क्षत्रियत्वं वा, 'क्षत्रियाय' 'दधतीः' दधत्यः, धारयन्त्यः,

---

* का० औ० सू० १५. ४. ४६।
† अदा० आ० २० धा०।
‡ वा० सं० १०. ४. २०।
§ का० औ० सू० १५. ४. ४७

२९

प्रयच्छन्त्व इति । मन्त्रं व्याचष्टे— "अनाधृष्टा इति * । 'दधती:' -इति प्रदानस्य साक्षादुक्तेः प्रत्यक्षत्व माशिष: , 'सीदत'-इति मध्यमपुरुषप्रयोगाद्वेति वेदितव्यम् ॥ २८ ॥ १ [ ३. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम् . )

तं वै माध्यन्दिने सवनेऽभिषिञ्चति । एष वै प्रजापतिर्य एष यज्ञस्तायते यस्मादिमा: प्रजा: प्रजाता एतम्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति मध्यत: सुवति † ॥ १ ॥

अगृहीते माहेन्द्रे । एष वा ऽइन्द्रस्य निष्केवल्यो ग्रहो यन्माहेन्द्रो ऽप्यस्यैतन्निष्केवल्य मेव स्तोत्रं निष्केवल्यं शस्त्र मिन्द्रो वै यजमानस्त-

* वा० सं० १०. ४. २१ ।

† 'सुवति'—इति क ।

देनᳫं स्व एवायतनेऽभिषिञ्चति तस्मादगृहीते माहेन्द्रे * ॥ २ ॥

अग्रेण मैत्रावरुणस्य धिष्ण्यᳫं । शार्दूलचर्मोपस्तृणाति सोमस्य त्विषिरसीति यत्र वै सोम इन्द्र मत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषिस्तस्मादाह सोमस्य त्विषिरसीति तवेव मे त्विषिर्भूयादिति शार्दूलत्विषि मेवास्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति † ॥ ३ ॥

अथ पार्थानि जुहोति । पृथी ह वै ‡ वैन्यो मनुष्याणां प्रथमोऽभिषिषिञ्चे § सोऽकामयत सर्व्वमन्नाद्य मवरुन्धीयेति तस्मा एतान्यजुहवुः स इदᳫं सर्व्वमन्नाद्य मवरुरुधेऽपि ह स्मास्मा आरण्यान् पशूनभिह्वयन्त्यसावेहि राजा त्वा

---

* 'माहेन्द्रे'—इति ग, घ।

† '०दिति'—इति क, '०दिति'—इति ग।

‡ 'पृथुर्ह वै'—इति घ।

§ 'ऽभिषिषिचे'—इति ख, घ। 'ऽभिषिषिचे', 'ऽभिषिषिचे'—इति द्वावेव पाठौ डा०-वेबर-दृष्टौ।

पश्यत ऽइति तथेदꣳ सर्व्व मन्नाद्य मवरुन्धे सर्वꣳ ह वा ऽअन्नाद्य मवरुन्धे यस्यैवं विदुष एतानि हूयन्ते ॥ ४ ॥

तानि वै द्वादश भवन्ति। द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति ॥ ५ ॥

षट् पुरस्तादभिषिकस्य जुहोति। षडुपरिष्टात्तदेनं मध्यत एवैतस्य प्रजापतेर्दधाति मध्यतः सुवति ॥ ६ ॥

स यानि पुरस्तादभिषेकस्य जुहोति। बृहस्पतिस्तेषा मुत्तमो भवत्यथ यान्युपरिष्टादभिषेकस्य जुहोतीन्द्रस्तेषां प्रथमो भवति ब्रह्म वै बृहस्पतिरिन्द्रियं वीर्य मिन्द्र एताभ्या मेवैन मेतद्वीर्याभ्या मुभयतः परिबृꣳहति ॥ ७ ॥

स जुहोति। यानि पुरस्तादभिषिकस्य जुहोत्यग्नये स्वाहेति तेजो वा ऽअग्निस्तेजसैवैन मेतदभिषिञ्चति सोमाय स्वाहेति क्षत्रं वै सोमः क्षत्रेणैवैन मेतदभिषिञ्चति सवित्रे स्वाहेति सविता वै देवानां प्रसविता सवितृप्रसूत एवैन मेतदभिषिञ्चति सरस्वत्यै स्वाहेति वाग्वै सर-

स्वती व्याचैवैन मेतदभिषिञ्चति पूष्णे स्वाहेति पशवो वै पूषा पशुभिरेवैन मेतदभिषिञ्चति बृहस्पतये स्वाहेति ब्रह्म वै बृहस्पतिर्ब्रह्मणैवैन मेतदभिषिञ्चत्येतानि पुरस्तादभिषेकस्य जुहोति तान्येतान्यग्निनामानीत्याचक्षते * ॥ ८ ॥

अथ जुहोति। यान्युपरिष्टादभिषेकस्य जुहोतीन्द्राय स्वाहेति व्वीर्यं वा ऽइन्द्रो व्वीर्येणैवैन मेतदभिषिञ्चति घोषाय स्वाहेति व्वीर्यं वै घोषो व्वीर्येणैवैन मेतदभिषिञ्चति श्लोकाय स्वाहेति व्वीर्यं वै श्लोको व्वीर्येणैवैन मेतदभिषिञ्चत्यꣳशाय स्वाहेति व्वीर्यं वा ऽअꣳशो व्वीर्येणैवैन मेतदभिषिञ्चति भगाय स्वाहेति व्वीर्यं वै भगो व्वीर्येणैवैन मेतदभिषिञ्चत्यर्यम्णे स्वाहेति तदेन मस्य सर्वस्यार्यमणं करोत्येतान्युपरिष्टादभिषेकस्य जुहोति † तान्येतान्यादित्यनामानीत्याचक्षते ‡ ॥ ९ ॥

---

* 'त्याचक्षते'—इति क। † 'जुहोति'—इति ख।

‡ '०त्याचक्षते'—इति क, ख।

अग्रेण मैत्रावरुणस्य धिष्ण्यम्। अभिषेचनीयानि पात्राणि भवन्ति यत्रैता आपो ऽभिषेचनीया भवन्ति ॥ १० ॥

पालाशं भवति। तेन ब्राह्मणो ऽभिषिञ्चति ब्रह्म वै पलाशो ब्रह्मणैवैन मेतदभिषिञ्चति* ॥ ११ ॥

औदुम्बरं भवति। तेन स्वो ऽभिषिञ्चत्यन्नं वा † ऽऊर्गुदुम्बर ऊर्ग्वै स्वं यावद्वै पुरुषस्य स्वं भवति नैव तावदशनायति तेनोर्क् स्वं तस्मादौदुम्बरेण स्वो ऽभिषिञ्चति ॥ १२ ॥

नैयग्रोधपादं भवति। तेन मित्र्यो राजन्यो ऽभिषिञ्चति पद्भिर्वै न्यग्रोधः प्रतिष्ठितो मित्रेण वै राजन्यः प्रतिष्ठितस्तस्मान्नैयग्रोधपादेन मित्र्यो राजन्यो ऽभिषिञ्चति ‡ ॥ १३ ॥

आश्वत्थं भवति। तेन वैश्यो ऽभिषिञ्चति स यदेवादो ऽश्वत्थे तिष्ठत इन्द्रो मरुत उपा-

* '०षिञ्चति'—इति क ।

† '०त्यन्नाद्वा'—इति ख ।

‡ '०षिञ्चति'—इति क ।

मन्वयत तस्मादाश्वत्थेन वैश्यो ऽभिषिञ्चत्येता-न्यभिषेचनीयानि पात्राणि भवन्ति * ॥ १४ ॥

अथ पवित्रे करोति। पवित्रे स्थो वैष्णव्याविति सो ऽसावेव बन्धुस्तयोर्हिरण्यं प्रवयति ताभ्या मेता अभिषेचनीया अप उत् पुनाति तद्य-द्धिरण्यं प्रवयत्यमृत मायुर्हिरण्यं तदा स्वमृत मायुर्दधाति तस्माद्धिरण्यं प्रवयति ॥ १५ ॥

स उत्पुनाति। सवितुर्व्वः प्रसव उत्पुनाम्य-च्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिरिति सो ऽसावेव बन्धुरनिभृष्ट मसि व्वाचो बन्धुस्तपोजा इत्य-नाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानिभृष्ट मसीति व्वाचो बन्धुरिति यावद्वै प्राणेष्वापो भवन्ति तावद्वाचा व्वदति तस्मादाह व्वाचो बन्धुरिति ॥ १६ ॥

तपोजा इति। अग्नेर्व्वै धूमो जायते धूमा-दभ्र मभ्राद्वृष्टिरग्नेर्वा ऽएता जायन्ते तस्मादाह तपोजा इति ॥ १७ ॥

---

* 'भवन्ति'—इति क।

सोमस्य दात्र मसीति। यदा वा ऽएन मेता भिरभिषुण्व*न्त्यथाहुतिर्भवति तस्मादाह सोमस्य दात्र मसीति स्वाहा राजस्व इति तदेनाः स्वाहाकारेणैवोत्पुनाति ॥ १८ ॥

ता एतेषु पात्रेषु व्यानयति। सधमादो द्युम्निनीराप एता इत्यनतिमानिन्य इत्येवैतदाह यदाह सधमाद इति द्युम्निनीराप एता इति वीर्यवत्य इत्येवैतदाहानाधृष्टा अपस्यो वसाना इत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानाधृष्टा अपस्यो वसाना इति पस्त्यासु चक्रे वरुणः सधस्थ मिति विशो वै पस्त्या विक्षु चक्रे वरुणः प्रतिष्ठा मित्येवैतदाहापाꣳ शिशुर्मातृतमास्वन्तरित्यपां वा ऽएष शिशुर्भवति यो राजसूयेन यजते तस्मादाहापाꣳ शिशुर्मातृतमास्वन्तरिति † ॥ १९ ॥

---

* 'मेताभिरभिषुण्व०'—इति क, ख। 'मेताभिरभिषुण्व०'—इति च दृष्टं डा०-वेबरेण।

† 'रिति'—इति ग, 'रिति'—इति घ।

अथैनं व्वासाᳩसि परिधापयति। तत्तार्प्य-
मिति व्वासो भवति तस्मिन्त्सर्व्वाणि यज्ञ-
रूपाणि निष्यूतानि भवन्ति तदेनं परिधापयति
क्षत्रस्योल्बमसीति तद्यदेव क्षत्रस्योल्बं तत एवैन
मेतज्जनयति * ॥ २० ॥

अथैनं पाण्डुं परिधापयति। क्षत्रस्य जरा-
युसीति तद्यदेव क्षत्रस्य जरायु तत एवैन मेत-
ज्जनयति † ॥ २१ ॥

अथाधीवासं प्रति मुञ्चति। क्षत्रस्य योनि-
रसीति तद्यैव क्षत्रस्य योनिस्तस्या एवैन मेत-
ज्जनयति ‡ ॥ २२ ॥

अथोष्णीषᳩ सᳩहृत्य §। पुरस्तादवगूहति क्षत्रस्य
नाभिरसीति तद्यैव क्षत्रस्य नाभिस्तामेवास्मिन्ने-
तद्दधाति ॥ २३ ॥

तद्धैके। समन्तं परिवेष्टयन्ति नाभिर्व्वा
ऽअस्यैषा समन्तं वा ऽइयं नाभिः पर्य्येतीति

---

*, †, ‡ 'जनयति'—इति क।

§ 'सᳩहृत्य'—इति क; दृष्टं चैतत् का०-विवरणे।

सोमस्य दात्र मसीति । यदा वा ऽएन मेता भिरभिषुण्व*न्त्यथाहुतिर्भवति तस्मादाह सोमस्य दात्र मसीति स्वाहा राजस्व इति तदेनाः स्वाहाकारेणैवोत्पुनाति ॥ १८ ॥

ता एतेषु पात्रेषु व्यानयति । सधमादो द्युम्निनीराप एता इत्यनतिमानिन्य इत्येवैतदाह यदाह सधमाद इति द्युम्निनीराप एता इति वीर्यवत्य इत्येवैतदाहानाधृष्टा अपस्यो वसाना इत्यनाधृष्टा स्थ रक्षोभिरित्येवैतदाह यदाहानाधृष्टा अपस्यो वसाना इति पस्त्यासु चक्रे वरुणः सधस्थ मिति विशो वै पस्त्या विक्षु चक्रे वरुणः प्रतिष्ठा मित्येवैतदाहापाꣳ शिशुर्मातृतमास्वन्तरित्यपां वा ऽएष शिशुर्भवति यो राजसूयेन यजते तस्मादाहापाꣳ शिशुर्मातृतमास्वन्तरिति † ॥ १९ ॥

---

* 'मेताभिरभिषुण्व०'—इति क, ख । 'मेताभिरभिषुण्व०'—इति च दृष्टं डा०-वेबरेण ।

† 'रिति'—इति ग, 'रिति'—इति घ ।

अथैनं वासाᳫंसि परिधापयति। तार्प्यमिति वासो भवति तस्मिन्त्सर्वाणि यज्ञरूपाणि निष्यूतानि भवन्ति तदेनं परिधापयति क्षत्रस्योल्बमसीति तद्यदेव क्षत्रस्योल्बं तत एवैनमेतज्जनयति * ॥ २० ॥

अथैनं पाण्डुं परिधापयति। क्षत्रस्य जरायुसीति तद्यदेव क्षत्रस्य जरायु तत एवैनमेतज्जनयति † ॥ २१ ॥

अथाधीवासं प्रतिमुञ्चति। क्षत्रस्य योनिरसीति तद्यैव क्षत्रस्य योनिस्तस्या एवैनमेतज्जनयति ‡ ॥ २२ ॥

अथोष्णीषᳫं संहृत्य §। पुरस्तादवगूहति क्षत्रस्य नाभिरसीति तद्यैव क्षत्रस्य नाभिस्तामेवास्मिन्नेतद्दधाति ॥ २३ ॥

तद्धैके। समन्तं परिवेष्टयन्ति नाभिर्वा ऽअस्यैषा समन्तं वा ऽइयं नाभिः पर्येतीति

---

*, †, ‡ 'जनयति'—इति क।

§ 'संहृत्य'—इति क; दृष्टं चैतत् भा०-विवरणे।

त्वदन्तस्तदु तथा न कुर्य्यात् पुरस्तादेवावगूहेत् पुरस्ताद्धीयं नाभिस्तद्यदेनं वासाᳩसि परिधापयति अनयत्येवैन मेतज्जात मभिषिञ्चानीति तस्मादेनं वासाᳩसि परिधापयति ॥ २४ ॥

तद्धैके। निदधत्येतानि वासाᳩस्यथैनं पुनर्दीक्षितवसनं परिधापयन्ति तदु तथा न कुर्या-द्दङ्गानि वा ऽअस्य जनूर्वासाᳩस्यङ्गैरेनᳩ सजन्वा * तन्वा व्यर्धयन्ति व्वरुण्यं दीक्षितवसनᳩ स एतेषा मेवैकं वासंसां परिदधीत तदेन मङ्गैर्जन्वा तन्वा समर्द्धयति व्वरुण्यं दीक्षितवसनं तदेनं व्वरुण्या-द्दीक्षितवसनात् प्रमुञ्चति ॥ २५ ॥

स यत्रावभृथ मभ्यवैति। तदेतदभ्यवहरन्ति तत् सलोम क्रियते स एतेषा मेवैकं वाससां परिधायोदैति तानि व्वशायै वा व्वपायाᳩ हुतायां दद्यादुदवसानीयायां व्वेष्टौ ॥ २६ ॥

अथ धनुरधितनोति। इन्द्रस्य व्वार्त्रघ्न मसीति व्वार्त्रघ्नं वै धनुरिन्द्रो वै यजमानो द्वयेन वा

* 'सजन्वा'—इति च इदं डा०-वेबरेण।

ऽएष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य व्वार्त्रघ्न मसीति * ॥ २७ ॥

अथ बाहू व्विमार्ष्टि। मित्रस्यासि व्वरुणस्यासीति बाह्वोर्व्वै धनुर्बाहुभ्यां वै राजन्यो मैत्राव्वरुणस्तस्मादाह मित्रस्यासि व्वरुणस्यासीति तदस्मै प्रयच्छति त्वयायं वृत्रं बधेदिति त्वयायं द्विषन्तं भ्रातृव्यं बधेदित्येवैतदाह † ॥ २८ ॥

अथास्मै तिस्र इषूः प्रयच्छति। स यया प्रथमया समर्पणेन परा भिनत्ति‡ सैका सेयं पृथिवी सैषा दृवा नामाथ यया व्विद्धः शयित्वा जीवति वा म्रियते वा सा द्वितीया तदिद मन्तरिक्ष सैषा रुजा नामाथ ययापैव राध्नोति सा तृतीया सासौ द्यौः सैषा क्षुमा नामैता हि वै तिस्र इषवस्तस्मादस्मै तिस्र इषूः प्रयच्छति ॥ २९ ॥

ताः प्रयच्छति। पातैनं प्राञ्चं पातैनं

* 'मसीति'—इति क।

† '०तदाह' इति क।

‡ 'परान् भिनत्ति'—इति क। 'परान् भिनत्ति'—इति माध्यन्दिनः पाठ इति च डा० वेबरः।

प्रत्यञ्चं पातेन तिर्यञ्चं दिग्भ्यः पातेति तदस्मै सर्व्वा एव दिशो ऽशरव्याः करोति तद्यदस्मै धनुः प्रयच्छति व्वीर्यं वा ऽएतद्राजन्यस्य यद्धनुर्व्वीर्यवन्त मभिषिञ्चानीति तस्माद्वा ऽअस्मा ऽआयुधं प्रयच्छति * ॥ ३० ॥

अथैन माविदो व्वाचयति। आविर्मर्या इत्यनिरुक्तं प्रजापतिर्व्वा ऽअनिरुक्तस्तदेनं प्रजापतय ऽआवेदयति सोऽस्मै सव मनुमन्यते तेनानुमतः सूयते ॥ ३१ ॥

आवित्तो ऽअग्निर्गृहपतिरिति। ब्रह्म वा ऽअग्निस्तदेनं ब्रह्मण ऽआवेदयति तदस्मै सव मनुमन्यते तेनानुमतः सूयते ॥ ३२ ॥

आवित्तो ऽइन्द्रो व्वृद्धश्रवा इति। क्षत्रं वा ऽइन्द्रस्तदेनं क्षत्रायावेदयति तदस्मै सव मनुमन्यते तेनानुमतः सूयते ॥ ३३ ॥

आवित्तौ मित्रावरुणौ धृतव्रताविति। प्राणोदानौ वै मित्रावरुणौ तदेनं प्राणोदानाभ्या

---

* 'प्रयच्छति'—इति क।

मावेदयति तावस्मै सव मनुमन्येते ताभ्या मनुमतः सूयते ॥ ३४ ॥

आवित्तः पूषा विश्ववेदा इति। पशवो वै पूषा तदेनं पशुभ्य आवेदयति तेऽस्मै सवमनुमन्यन्ते तैरनुमतः सूयते ॥ ३५ ॥

आवित्ते द्यावापृथिवी विश्वशम्भुवाविति। तदेन माभ्यां द्यावापृथिवीभ्या मावेदयति तेऽस्मै सव मनुमन्येते ताभ्या मनुमतः सूयते ॥ ३६ ॥

आवित्तादितिरुरुशर्मेति। इयं वै पृथिव्यदितिस्तदेन मस्यै पृथिव्या ऽआवेदयति सास्मै सव मनुमन्यते तयानुमतः सूयते तद्याभ्य एवैन मेतद्देवताभ्य आवेदयति ता अस्मै सव मनुमन्यन्ते ताभिरनुमतः सूयते ॥ ३७ ॥ २ ॥

॥ इति तृतीयप्रपाठके द्वितीयं ब्राह्मणम् [३. ५.] ॥

पञ्चमे ब्राह्मणे यजमानाभिषेकः, तदत्या धर्माश्च विधीयन्ते। तत्र यजमानाभिषेकं सकालं विधत्ते— "तं वै माध्यन्दिने इति। माध्यन्दिनसवने क्रियमाण मभिषेकं प्रशंसति—

"एष वै प्रजापतिरिति। माध्यन्दिनसवने क्रियमाणेनाभिषेकेण 'एनं' यजमानं 'मध्यत एव' यज्ञरूपप्रजापतिमध्ये एव निहितवान् भवति। 'मध्यतः' मध्ये 'सुवति' प्रेरयति, अध्वर्युरित्यर्थः ॥ १ ॥

कालविशेषं विधत्ते— "अगृहीत इति *। 'माहेन्द्रे' ग्रहे 'अगृहीते' सोमरसेनापूर्णे, मरुत्वतीयान्ते इत्यर्थः। माहेन्द्रग्रहणात् पूर्वं यजमानाभिषेकं स्वायतननिधानरूपेण प्रशंसति— "एष वा इन्द्रस्येति। इदं प्रथमाध्याये व्याख्यातम् †। अत्र यदुक्तं कात्यायनेन— "मैत्रावरुणधिष्ण्यस्य पुरस्तान्निदधाति अनाधृष्टाः सीदेति, पात्राणि च तूष्णीं पालाशौदुम्बरनैयग्रोधवटाश्वत्थान्यभिषेकाय"–इति ‡। "मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्मास्तृणाति सोमस्य त्विषिरिति §, अपरेऽन्ते सीसं निदधाति, पार्थाना मग्नये स्वाहेति ‖ षड् जुहोति प्रतिमन्त्रम्"–इति ¶ च ॥ २ ॥

तदिदं क्रमेण विधित्सुर्व्याघ्रचर्मास्तरणं समन्त्रकं विधत्ते— "अग्रेणेति। मैत्रावरुणधिष्ण्यस्य पूर्वभागे व्याघ्रचर्मास्तृणीयात् **। हे चर्मन्! 'सोमस्य' 'त्विषिः' दीप्तिः 'असि'। 'तवेव' यथा

* का० श्रौ० सू० १५. ५. १।

† १. ३. ४ (३६ पृ० १४ पं० पुनः ५३पृ० ४पं०), द्रष्टव्यम्।

‡ का० श्रौ० सू० १५. ४. ४७, ४८।

§ वा० सं० १०. ५. १।

‖ वा० सं० १०. ५. २–७।

¶ का० श्रौ० सू० १५. ५. ५, २, ३।

** का० श्रौ० सू० १५. ५. १।

तव दीप्तिरस्ति, तथा 'मे' मम 'त्विषि:' दीप्ति: 'भूयात्' अस्त्विति *। शार्दूलस्य सोमत्विषित्व माख्यायिकामुखेनोप-पादयति— "यत्र वै सोम इति। पूर्व मिन्द्रेण पीयमान: सोम:, तम् 'अत्यपवत' शरीरादधो निरगच्छत्। स सोमो यदा अत्यपवत, तत: सोऽतिपवित्रत: सोम: शार्दूल: सम्भूत-वान् †। 'तस्मात्' शार्दूलस्य सोमकार्यत्वात् तदीयत्वच: सोम-त्विषित्वम्। "तवेव मे"-इतिमन्त्रभागस्य तात्पर्य माह— "तवेव म इति। 'एतत्' एतेन मन्त्रभागकृतेन 'अस्मिन्' यजमाने शार्दूलदीप्ति मेव निहितवान् भवति ॥ ३ ॥

अथाभिषेकस्य पुरस्तात् पश्चाच्च क्रियमाणान् पार्थहोमान् विधत्ते— "अथ पार्थानीति ‡। 'पार्थानि' पृथिनानुष्ठितानि। एतेषां पृथिसम्बन्धं दर्शयति— "पृथी हेति। 'वैन्य:' वेनो नाम राजा, तस्य पुत्र: 'पृथी' नाम §, 'मनुष्याणां' मध्ये 'प्रथम:' अभिषिक्त:। 'सर्वम् अन्नाद्यम्' 'अवरुन्धीय' स्वाधीनं कुर्याम् 'इति' कामयमानाय 'तस्मै' पृथये ‖ 'एतानि' पार्थानि 'अजुहवु:' अध्वर्यव:। तत: 'स:' राजा 'इदं सर्व मन्नाद्यम्' 'अवरुरुधे' स्वाधीनं कृतवान्। सर्वान्नावरोधकत्वं दर्शयति—

---

* वा० सं० १०. ५. १।

† "यद्वाच: प्राणादद्रवत् तत: शार्दूलज्येष्ठा: श्वापदा: समभवन्"— इति उपरिष्टाद् द्रष्टव्यम् (५. ४. १०.)।

‡ का० श्रौ० सू० १५. ५. ३।

§ अत्र पृथिन्निति नान्तशब्द एव भाष्यसम्मत: पाठो गम्यते, चतुर्ष्वेवादर्शपुस्तकेष्वेकविधदर्शनात्; मूले तु पृथुरिति च पाठ:।

‖ चतुर्ष्वेवादर्श टीकापुस्तकेष्वित्थ 'पृथये'—इत्येव।

"अपि ह स्तौति। 'अपि' खलु 'अस्मै' यजमानाय, तदर्थम्, 'आरण्यान्' अरण्ये भवान् 'पशून्' 'अभिह्वयन्ति'। किम्? इति। "असाविति। तत्तन्मृगनाम्नः सम्बुद्ध्यन्तस्य सामान्यनिर्द्देशः। हे पशो! 'एहि' आगच्छ, अयं 'राजा' 'त्वा' त्वां 'पक्ष्यते' भोक्तुं पक्वं करिष्यति 'इति'। सोऽपि पशुः तद् वचः श्रुत्वा तत्समीपं स्वय मेवागच्छति। 'तथा' सति ग्राम्यारण्यभक्षणस्य सर्वस्यावश्यावरोधः। विदुषोऽप्यतनस्यापि अनुष्ठातुस्तत्फल माह— "सर्वं ह वा इति ॥ ४ ॥

एतेषां सङ्ख्यां विधत्ते— "तानि वै द्वादशेति। उक्तां सङ्ख्यां संवत्सरात्मना प्रशंसति— "द्वादशेति ॥ ५ ॥

एतेषां हवनकालं विधत्ते— "षडिति। द्वादशानां पदार्थानां मध्ये पूर्वषट्कस्यान्ते "बृहस्पतये स्वाहा"–इति पठ्यते, उत्तरषट्कस्यादौ "इन्द्राय स्वाहा"–इति *। तयोरुभयोर्मध्ये अभिषेकेण यजमानं ब्रह्मक्षत्रवीर्याभ्याम् उभयतः सम्बर्द्धितवान् भवतीति ॥ ६, ७ ॥

अभिषेकस्य पुरस्तात् कर्त्तव्यं होम मनूद्य मन्त्रान् विधत्ते— "स जुहोतीति। "अग्नये स्वाहा"–इत्यादयो मन्त्राः †। तत्रैकैक मनूद्य स्तौति— "तेजो वा अग्निरित्यादिना। अर्थवादवाक्येषु स्पष्टोऽर्थः। सोमादिपदानां देवतान्तरवाचकत्वं व्युदस्यति— "तान्येतान्यग्निनामानीति। 'तानि' पूर्वाणि पार्थानि 'अग्निनामान्याचक्षते', ब्रह्मवादिन इति शेषः; अग्नेः सर्वदेवतात्मकत्वादिति भावः ॥ ८ ॥

---

* वा० सं० १०. ५. ६, ७ मन्त्रौ द्रष्टव्यौ।

† वा० सं० १०. ५. १–६।

अभिषेकस्योपरि कर्त्तव्यं होममन्त्र मनूद्य मन्त्रान् सार्थवादं विधत्ते— "अथ जुहोतीति। "इन्द्राय स्वाहा"—इत्यादयो मन्त्राः *। अत्रेन्द्रादयः पञ्च देवता अपि वीर्यात्मना स्तुताः। "तदेन मस्य सर्वस्येति। अर्यमदेवत्यहोमेन 'एनं' यजमानं 'सर्वस्य' 'अर्यमणं' नियन्तार मधिपतिं कृतवान् भवतीत्यर्थः। इन्द्रादिषड्देवतावाचकानां पदानां देवतानानात्ववाचकत्वं व्युदस्यति— "आदित्यनामानीति। इन्द्रादयशब्दा आदित्यस्यैव मूर्त्तिभेदेनावस्थितस्य नामानि। पूर्व मग्निवाचकैर्नामभिर्होमेन भूलोके यजमानं निहितवान् भवति, अन्तत आदित्यवाचकैर्नामभिर्होमेन स्वर्गलोके अवस्थापितवान् भवतीत्युभयार्थवादवाक्यतात्पर्यार्थः ॥ ८ ॥

अभिषेचनीयानां पात्राणा मासादनप्रदेशं विधत्ते— "अग्रेणेति। सूत्रन्तु पूर्व मुदाहृतम्। अभिषेचनीयशब्दं निर्वक्ति— "यत्रेति। यत् तेषु पात्रेषु 'एताः' विहिताः सप्तदश 'आपः' 'अभिषेचनीयाः' अभिषेक्त्र्या आसिच्यमानाः 'भवन्ति', तानि अभिषेचनीयानीति ॥ १० ॥

तानि पात्राणि अभिषेक्तृविशेषसहितानि क्रमेण विधत्ते— "पालाश मिति †। 'पालाशम्' पलाशशाखानिर्मित मेकं पात्रम्। 'तेन' पात्रेण 'ब्राह्मणः' यजमान मभिषिञ्चेत्। पालाशेनैव ब्राह्मणकर्त्तृकयजमानाभिषेककरणे कारण माह— "ब्रह्म वा इति। 'पलाशः' 'ब्रह्म वै' वृक्षेषु ब्राह्मणजातिः ॥ ११ ॥

---

* वा० सं० १०. ५. ७—१२।

† 'अभिषेचनीयेष्वेना आनयति'—इति का० श्रौ० सू० १५. ५. ६। 'पालाशादिचतुर्षु पात्रेषु चतुर्द्धा विभज्य आनयति एना अपः'—इति तद्वृत्तिः।

औदुम्बर मिति । 'औदुम्बरम्' उदुम्बरनिर्मितं पात्रं द्वितीयम् । 'तेन' पात्रेण 'स्वः' ज्ञातिः भ्राता अभिषेकं कुर्यात् । तत्रोपपत्तिं दर्शयति— "अन्नं वा इति । उदुम्बरस्यान्नसाधनत्वात् तदुक्तम् । अन्न मेव पुरुषस्य 'स्वं' धनं यतः, अतोऽस्य 'पुरुषस्य यावत् स्वं भवति', 'तावत्' 'न एव अशनायति' क्षुधितो न भवतीत्यर्थः ; धनस्य विद्यमानत्वात् । अतोऽन्नस्य स्वत्वादन्नसाधनेनौदुम्बरपात्रेण 'स्वः' ज्ञातिर्भ्राता एवाभिषिञ्चेत् ॥ १२ ॥

"नैयग्रोधपाद मिति । तृतीयं 'नैयग्रोधपादम्' । न्यग्रोधो नाम वटः, तस्य पादः शाखावरोहः, तेन निर्मितं नैयग्रोधपादम् । 'तेन' 'मित्रः' सखिकर्मणि साधुः सखा 'राजन्यः' अभिषिञ्चेत् । तत्र हेतु माह— "पद्भिरिति । न्यग्रोधस्य पादैरेव प्रतिष्ठा दृश्यते ; राजापि हितोपदेशकैराप्तैः सखिभिः प्रतिष्ठितो भवति, नान्यथा । अतस्तेन पात्रेण मित्रकर्तृक मभिषेककरणं युक्त मित्यर्थः ॥ १३ ॥

"आश्वत्थ मिति । चतुर्थम् 'आश्वत्थम्' अश्वत्थनिर्मितम्, तेन 'वैश्यः' अभिषिञ्चेत् । अश्वत्थस्य वैश्यसम्बन्धं दर्शयति— "स यद्देवेति । व्याख्यातम् । विड्रूपाणां मरुता मश्वत्थेऽवस्थानात् वैश्यस्य तत्सम्बन्धः ॥ १४ ॥

अथ पवित्रकरणं विधत्ते— "अथ पवित्रे इति *। हे 'पवित्रे !' 'वैष्णव्यौ' विष्णुर्यज्ञः, तत्सम्बन्धिन्यौ दर्भनाड्यौ 'स्थः' भवथः, इति मन्त्रस्यार्थः †। दर्भनाड्योर्विष्णुसम्बन्धप्रतिपादक मर्थवादवाक्य मतिदिशति— "सोऽसावेव बन्धुरिति ।

---

* का० श्रौ० सू० १५. ५. ४क ।
† वा० सं० १०. ६. १ ।

'असौ' विप्रकृष्टः। प्रथमकाण्डे पवित्रकरणसमये समाम्नातः। तत्र ह्येव माम्नातम्— "पवित्रे स्थो वैष्णव्याविति, यज्ञो वै विष्णुर्यज्ञिये स्थ इत्येवैतदाहेत्यादि *॥

तयोर्दर्भयोर्हिरण्यग्रथनं विधत्ते— "तयोरिति †। दर्भयो-स्तयोरिति सप्तमी। तत्र 'हिरण्यं' 'प्रवयति'। "वेञ् तन्तु-सन्ताने ‡"; सङ्ग्रथ्नीयादित्यर्थः। विधत्ते— "ताभ्या मिति। तच्छब्देन हिरण्यप्रोते पवित्रे लक्ष्येते, 'ताभ्याम्' 'एताः' उक्ताः 'अपः' उत्पुनीयात्। हिरण्यग्रथन मनूद्य प्रशंसति— "तद्ध-हिरण्य मिति। "अमृत मिति। 'आसु' अप्स्वित्यर्थः॥ १५॥

उत्पवन मनूद्य मन्त्रं विधत्ते— "स उत्पुनातीति §। "सवितुर्वः"–इति ‖ मन्त्रस्य पूर्वभागो व्याख्यातः। हे उदक! 'अनिभृष्टम्', "भ्रस्ज पाके" ¶, यवादिवद् वह्निसंयोगेऽपि न नितरां भृष्टं, न विनश्यतीति यावत्; रक्षोभिर्वा न बाधितं भवतीत्यर्थः। 'वाचो बन्धुः' वाग्व्यवहारस्य कारणम्। 'तपोजाः' "तप सन्तापे" **। तपःशब्देनाग्निरुच्यते, तस्मात् जातः। "सोमस्य' 'दात्रं' दानसाधनं भवसि। उदकसम्बन्धादेव सोमरसनिष्पत्तिः; तादृशो रस एव हूयते, अतः सोमस्य

---

* १का० १प्र० ३ब्रा० १क० ( ६०पृ० १पं० )।

† का० श्रौ० सू० १५. ५. ४ख।

‡ भ्वा० प० १००७ धा०।

§ का० श्रौ० सू० १५. ५. ५।

‖ वा० सं० १०. ६. २।

¶ तु० पं० ४ धा०।

** भ्वा० प० ८८५ धा०।

दानसाधनभूता भवत। स्वाहाकारेण पूता स्थ। अत्र स्वाहा-शब्दो न होमार्थः ; मन्त्रान्ते पाठाभावात्। 'राजस्वः' राजानं सुवते जनयन्तीति राजस्वः *, राजोत्पादका इत्यर्थः ॥

मन्त्रं भागशोऽनूद्य व्याख्यास्यन् सवितुर्व इति मन्त्रभागस्य प्रथमकाण्डे उत्पवनसमये समाम्नात मर्थवादब्राह्मण मतिदिशति— "सोऽसाविति। तत्र ह्येव साम्नातम्— "सवितुर्वः प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिरिति, सविता वै देवानां प्रसविता तत्सवितृप्रसूत एवैतदुत्पुनात्यच्छिद्रेण पवित्रेणेति, यो वा अयं पवत एषोऽच्छिद्रं पवित्र मेतेनैतदाह सूर्यस्य रश्मिभिरिति, एते वा उत्पवितारो यत् सूर्यस्य रश्मयः, तस्मादाह सूर्यस्य रश्मिभिरिति"—इति †। "अनिभृष्ट मसीति। सामान्यविवक्षयैकवचनान्तत्वेन प्रयुक्त मपां बहुत्वेन बहुवचनान्ततया व्याचष्टे— "अनाधृष्टा स्थेति। अपां वाग्बन्धुत्व मुपपादयति— "यावद्वै प्राणेष्विति। 'प्राणेषु' मुखनासिकादिषु यावदपां सद्भावः, तावत् पुरुषो वाचं वदति ; तद्विरहे शुष्का जिह्वा शब्दानुच्चारयितुं न शक्नोतीत्यर्थः ॥ १६ ॥

"तपोजा इति। अपां परम्परया अग्निजनकत्वं दर्शयति— "अग्नेर्वा इति ॥ १७ ॥

सोमदानसाधनत्व मुदकस्य निरूपयति— "यदा वा एन मिति। 'यदा' यस्मिन् काले 'एनं' सोमम् 'एताभिः' अद्भिः 'अभिषुण्वन्ति' अभिषवं कुर्वन्ति, अध्वर्यवः। 'अथ' अभिषवानन्तरम् 'आहुतिः भवति' ॥ १८ ॥

---

* 'राजसुवः'—इति शाखान्तरीयः पाठः।

† १का० १प्र० ३ब्रा० ६क० (६१ पृ० १ पं०) द्रष्टव्यम्।

विधत्ते — "ता एतेष्विति । 'एतेषु' अभिषेचनीयेषु 'पात्रेषु' 'एताः' उक्ताः 'अपः' 'व्यानयति' आसिञ्चेदित्यर्थः * । 'सधमादः' सह माद्यन्तीति सधमादः, परस्पर मनतिमानिन्य इत्यर्थः । "सध मादस्थयोश्छन्दसि"–इति † सहस्य सधादेशः । 'द्युम्निनीः' वीर्यवत्यः 'एताः आपः' । 'रक्षोभिः' 'अनाधृष्टाः' अनभिभूताः, 'अपस्यवः' अप इति कर्मनाम ‡, राजसूयाख्यं कर्म इच्छन्त्यः, 'वसानाः' "वस आच्छादने" § आच्छादयन्त्यो या आपः, सन्तीति शेषः । तासु अतिशयेन मातृभूतासु 'पस्त्यासु' 'पस्त्या'–इति गृहनाम ‖, गृहावस्थितास्वप्सु 'अन्तः' मध्ये 'सधस्थं' सहस्थानं 'प्रतिष्ठाम्', 'अपां शिशुः' वरुणः; राजसूयेऽद्भिरभिषिक्तत्वात् तज्जन्यत्व मुच्यते । तथाविधो वरुणः 'चक्रे' कृतवानिति । यद्वा, 'पस्त्यासु' गृहावस्थितासु 'विक्षु' प्रजास्विति व्याख्येयम् ¶ ॥

मन्त्रं प्रतिपाद मनूद्य तात्पर्यपुरस्सरं व्याचष्टे— "अनतिमानिन्य इति ॥ १८ ॥

विधत्ते— "अथैनं वासांसीति । 'एनं' यजमानं 'वासांसि' ( 'तार्प्यम्' ) तार्प्यपाण्ड्वाधिवासोष्णीषाणि परिधापयेदिति सामान्यविधिः । तत्तात्पर्यार्थकथनपुरस्सरं विधत्ते— "तत्तार्प्यमिति । 'तत्' तत्र, तेषु प्रथमं 'तार्प्य मिति वासः'; न त्वन्यत्, कम्बलादिक मित्यर्थः । अत एव कात्यायनः—

---

* का० श्रौ० सू० १५. ५. ६ ।

† पा० सू० ६. ३. ९६ । ‡ निघ० २. १. १ ।

§ अदा० आ० १३ धा० । ‖ निघ० ३. ४. ६ ।

¶ वा० सं० १०. ७. १ ।

"तार्प्यं परिधापयति, क्षौमं, त्रिपाणं वा, घृतोन्न मेके"–इति। तृपा-नामौषधिविशेषः, तत्तन्तुनिर्मितम्, क्षौमं वस्त्रं 'तार्प्यम्', त्रिः कृत्वः पायितं 'त्रिपाणम्', 'घृतोन्नम्' "उन्दी क्लेदने"*, घृतसिक्त मिति 'एके' आचार्या वदन्ति †॥

तत्र कश्चिद् विशेषं विधत्ते— "तस्मिन्त्सर्वाणीति ‡। 'यज्ञरूपाणि' स्रुक्चमसादीनि 'सर्वाणि' तस्मिन् 'स्यूतानि' भवेयुः। तार्प्यस्य परिधापने मन्त्रं विधत्ते— "क्षत्रस्येति §। हे तार्प्य! 'क्षत्रस्य' राज्ञो यजमानस्य गर्भत्वेनोपचर्य्यमाणस्य 'उल्बम्' आवरणम् 'असि'। उल्बावृतो गर्भ इति छन्दोगा आमनन्ति। उल्बत्वं साधयति— "तद्यदेवेति। 'यद्' उल्बं तस्मादेव 'एनं' यजमानम् 'एतत्' एतेन तार्प्यपरिधापनेन उत्पादितवान् भवति ॥ २० ॥

विधत्ते—"अथैन मिति। 'पाण्डुम्' पाण्डरम्, श्वेतं कम्बलम् परिधापयेत्, तार्प्यस्योपरि प्राव्रणुयादित्यर्थः ‖। 'पाण्डु'–शब्दार्थ उक्तः। तदिदं पाण्डरं द्वितीयम्; श्वेतम् पाण्डर मित्या-चक्षते। हे पाण्डर-कम्बल! 'क्षत्रस्य' पूर्वोक्तविशेषणस्य 'जरायु' जरायुस्थानीयम् 'असि'–'इति'। 'एतेन' पाण्डरपरिधापनेन। 'ततः' जरायोः ¶ ॥ २१ ॥

---

* रु० प० १६ धा०।

† का० श्रौ० सू० १५. ५. ७–१०।

‡ का० श्रौ० सू० १५. ५. ११।

§ वा० सं० १०. ८. १।

‖ का० श्रौ० सू० १५. ५. १२।

¶ वा० सं० १०. ८. २।

विधत्ते— "अथाधीवास मिति *। अधि उपरि वसनीय माच्छादनीयं वस्त्रम् 'अधीवासम्', तत् प्रतिमुञ्चेत्। ताप्यं मुपसंव्याय पाण्डर मुत्तरीयवदाच्छाद्य, 'अधीवासं' कञ्चुकादिकम्, उपरि प्रतिमुञ्चेदित्यर्थः। हे वस्त्र! 'क्षत्रस्य' 'योनिः' स्थानम् 'असि'। गर्भरूपयजमानस्य एतानि त्रीणि वस्त्राणि उल्व-जरायु-योनि-रूपत्वेन प्रशस्तानीति समुदितोऽर्थः † ॥ २२ ॥

उष्णीषवेष्टनं विधत्ते— "अथोष्णीष मिति ‡। 'उष्णीषं संहृत्य' § निवीतरूपेण कण्ठेऽवसज्य 'पुरस्तात्' पूर्वभागे नाभिदेशे 'अवगूहति' उष्णीषान्तं नीवीस्थाने ग्रथयेदित्यर्थः। तन्मन्त्रस्याय मर्थः— 'क्षत्रस्य' 'नाभिः' नाभिस्थानीयम् 'असि' इति ‖ ॥ २३ ॥

उक्त मुष्णीषाग्रस्य पूर्वदेशेऽवगूहनं द्रढयितुं पूर्वपक्षं सोपपत्तिक मनुवदति— "तद्वैक इति ¶। 'एके' शाखान्तरानुसारिणः 'तत्' उष्णीषं 'समन्तं' सर्वतो नाभिदेशे 'परिवेष्टयन्ति'। तदुपपादयति— "नाभिर्वा इति। 'अस्य' क्षत्रियस्य 'एषा' उष्णीषरूपा 'नाभिः' अपि 'समन्तं' 'पर्येति' परिवेष्टिता भवति। अतः "क्षत्रियस्य नाभिरसि"—इति मन्त्रे उष्णीषस्य नाभित्ववचनात् तत्साम्याय समन्ताद् वेष्टन मुक्त मित्येकेषां मतम् ॥

---

* का० श्रौ० सू० १५. ५. १३ क।

† वा० सं० १०. ८. ३।

‡ का० श्रौ० सू० १५. ५. १३ ख।

§ 'संहृत्य'—इति ज-पाठः।

‖ वा० सं० १०. ८. ४।

¶ का० श्रौ० सू० १५. ५. १४।

तदु दूषयति— "तदु तथेति। उक्तं स्वमतं निगमयति— "पुरस्तादेवेति। तत्र हेतु माह— "पुरस्ताद्वीय मिति। तार्प्यादिवासःपरिधापनं सम्भूय प्रशंसति — "तद्यदेनं वासांसीति। 'एतत्' एतेन वासःपरिधापनेन 'एनं' यजमानं 'जनयति' उत्पादितवान् भवति ; तेषां वाससा मुल्बजरायुयोनिरूपत्वोक्तेः। किमर्थं जनन मिति तत्राह— "जात मभीति। 'जातं' यजमानम् 'अभिषिञ्चानि' अभिषिक्तं करवाणि 'इति' बुद्धया 'वासांसि' परिधापयेदित्यर्थः * ॥ २४ ॥

पूर्वं निहितस्य दीक्षितवसनस्य परित्यागं विधित्सुरेकेषां मत मुपन्यस्यति। यद्वा, अय मपरः सम्बन्धः— विहितानां तार्प्यादीनां परिधापनादिक मेव द्रढयितुं पूर्वपक्षयति— "तद्धैक इति। 'एके' शाखिनः एकवारं परिधापितानि 'एतानि वासांसि' 'निदधति' विसृज्य निदध्युः। 'अथ' तदानी मेव तार्प्यादिवसनकाले निहितं 'दीक्षितवसनम्' 'एनं' यजमानं 'पुनः परिधापयन्ति'। पुनःपरिधापनकालस्तु सूत्रकृता दर्शितः— "दीक्षितवचननिवृत्तिर्विरोधात्, माहेन्द्रादौ वा पुनःपरिधानं निधायैतान्"-इति †। तदु दूषयति— "तदु तथेति। अङ्गानि वा इति। 'वासांसि'-इति यत् तानि 'अस्य' यजमानस्य 'जनूः अङ्गानि' सहोत्पन्नानि। तार्प्यादीनां वाससा मुल्ब-जरायु-प्रभृत्यात्मकत्वादङ्गत्वम्। उल्बादीनान्तु गर्भावस्थायां सह निवासादङ्गत्व मुपचरितम् ॥

---

* "तार्प्यप्रभृतीनि क्षत्रस्येति प्रतिमन्त्रम्"—इति का० श्रौ० सू० १५. ५. १५। मन्त्रास्तु ते वा० सं० १०. ८. १—४।

† का० श्रौ० सू० १५. ५. १६।

यद्वा, अय मर्थः— 'वासांसि जनूरङ्गानि' सहोत्पन्नत्वात् * त्वग्रूपाण्यङ्गानि । 'वै'-शब्दः प्रसिद्धिद्योतकः । तृतीयकाण्डे दीक्षाप्रकरणे "अथ वासः परिधत्ते"-इत्युपक्रम्याम्नातम्— "तस्मिन् एतां त्वच मदधुः वास एव तस्मात् नान्यः पुरुषाद् वासो बिभर्त्ति"-इति † । अतो वासोभिः परिधापनेन 'जन्वा' 'तन्वा' सहोत्पन्नैः शरीररूपैः 'अङ्गैः' समर्थितवान् भवति । अङ्गसमुदाय एव हि तनूः, शरीरेण तदङ्गैश्च संवर्द्धितवान् भवति । दीक्षितवसनस्य परित्यागं दर्शयितुं तस्य दुष्टत्व माह— "वरुण्य मिति । वरुणगृहीतं दुष्ट मित्यर्थः ॥

"स एतेषा मित्यादिकस्याय मर्थः— उक्तानां वाससा मेकेन तार्प्येण ‡ प्रथमातिक्रमे कारणाभावात् । यद्वा, 'एकम्' प्रथम मित्यर्थः । प्रथमन्तु तार्प्यम्, तेन परिधापनं कर्त्तव्यम् । न तु दीक्षितवसनस्य पुनः परिधापन मित्यर्थः ॥ २५ ॥

निहितस्य दीक्षितवसनस्य अवभृथे प्रासनं विधत्ते— "स यत्रेति । 'अवभृथम्' 'अभ्यवहरन्ति' आहरेयुः, अप्सु प्रक्षिपेयुरित्यर्थः । 'तत्' तथा सति 'सलोम क्रियते' प्रकृतगत मनुसृतं भवतीत्यर्थः । प्रकृतौ तु § दीक्षितवसनस्य अवभृथे परित्याग उक्तः । "स एतेषा मित्यादिनादिशति । माहेन्द्रादौ दीक्षितवसनस्य पुनः परिधानं न कृतम्, तदा तार्प्यादीना मेकैकेनैव परिहितेन वाससा अवभृथावतरण मुत्तरणं च

---

* 'सहोत्पन्नानि'—इति क, ज ।

† ३. १. २. १३—१६ (१५, १६ पृ० ) ।

‡ 'तार्प्यं'—इति च ।

§ 'तु'-शब्दो नास्ति ज-पुस्तके ।

कर्त्तव्य मित्यर्थः। 'उदेति' उत्तरेत्। तेषां वाससां दानकालं विधत्ते— "तानि वशाया इति। अनुबन्ध्यावशाया वपायाम-काले ब्राध्वर्यवे 'दद्यात्'। अवसाने कर्त्तव्या उदवसानीयेष्टिः, तस्यां वा दद्यात्। अतएव कात्यायनः— "अवभृथ मेकेन ताप्यादीनि चेदुदेत्येकेन, दीक्षितवसनं च प्रास्यति, अनूबन्ध्या-वपाहोमान्ते दद्यादेनानि, उदवसानीयायां वा"-इति * ॥ २६ ॥

"अथ धनुरधीति †। 'अधितनोति' आतनोतीत्यर्थः। मन्त्रस्याय मर्थः— हे धनुः! त्वम् 'इन्द्रस्य' 'वार्त्रघ्न' वृत्र-हननसाधन मायुधम् 'असि' भवसि ‡। इन्द्रशब्दार्थ माह— "इन्द्रो वा इति। कथं यजमानस्येन्द्रत्व मिति तदुपपादयति— "द्वयेनेभि। क्षत्रिय इति यत्, यजमान इति यत्, तेन द्वयेनेत्यर्थः। क्षत्रं नाम बलम्; तत्सम्बन्धात्, यष्टृत्वाच्चेत्यर्थः। इन्द्रस्य यजमानत्वं प्रागुक्तम् ॥ २७ ॥

विधत्ते-- "अथ बाहू इति §। हे बाहो! 'मित्रस्य' 'असि' भवसि ‖। तथापरं बाहुं प्रत्याह-- "वरुणस्यासीति ¶। बाहुद्वयं विसृज्यात्। कर्कोपाध्यायेन तु बाहुशब्दस्य धनुष्कोटि-परत्वं व्याख्यातम् **। त मिमं प्रशंसति-- "बाहोरिति। बाहुभ्यां खलु मित्रवरुणसम्बन्धी राजन्यो भवति; बाहुवीर्य-

---

* का० श्रौ० सू० १५. ७. २५—२८ द्रष्टव्यम्।

† का० श्रौ० सू० १५. ५. १७।

‡ वा० सं० १०. ८. ५।

§ का० श्रौ० सू० १५. ५ १८।

‖, ¶ वा० सं० १०. ८. ६, ७।

** "बाहू धनुःकोट्याबुच्येते"—इति (१५. ५. १८)।

सद्भावो राज्ञो लक्षण मित्यर्थः। धनुःप्रदानं समन्त्रकं विधत्ते--"तदस्मा इति *। हे धनुः! 'त्वया' साधनेन 'अयं' यजमानो 'वृत्रं' शत्रुं 'वधेत्' हिंस्यादिति। मन्त्रं व्याचष्टे--"त्वयायं वृत्रं वधेदिति वृत्रं ह्येष द्विषन्तं भ्रातृव्यं हन्ति"--इति; 'द्विषन्त मिति †॥ २८॥

अत्रेषुत्रयदानं विधत्ते--"अथास्मा इति। 'तिस्रः'-इति लोकत्रयात्मकत्वेन। अस्ताना मिषूणां लक्षणं सञ्ज्ञां च दर्शयति--"स यथेति।

'समर्पणेन' परित्यागमात्रेण 'यया' 'परान्' भिनत्ति' शत्रून् विदारयति, तस्या एकस्याः 'दृवा'-नामधेयायाः पृथिव्यात्मकत्वेन प्राशस्त्य मित्यर्थः। 'यया' विद्धस्य ताडितस्य जीवने सन्देहः, तस्याः 'रुजा'-नाम्न्या अन्तरिक्षात्मकत्वम्। यया राजा शत्रुम् 'अपराध्नोति' छिनत्त्येव, तस्याः 'क्षुमा'-नामधेयायाः तृतीयलोकात्मकत्वेन प्राशस्त्य मित्यर्थः ‡॥

अत्र कञ्चिद् विशेषं कात्यायनः सूत्रयामास--"दृवासीति प्रतिमन्त्र मादाय तिस्र इषूः प्रयच्छति"-इति §। तेषां मन्त्राणा मय मर्थः।--'दृवा' "दृ विदारणे" ||, दृणातीति 'दृवा' विदारिका 'असि' इति। दृप्यतेर्वा रूपम्। इति प्रथमेषुग्रहणम्। 'रुजा' "रुजो भङ्गे" ¶, भङ्गहेतुरिषुरसि।

---

* का० श्रौ० १५. ५. १६।

† वा० सं० १०. ८. ६।

‡ एतदन्तानि व्याख्यानानि एतद्भाष्यान्तावयवभूतानि क-पुस्तके।

§ का० श्रौ० सू० १५. ५. २०।

|| व्या० प० २० धा०।

¶ तु० प० १२६ धा०।

अनेन द्वितीयशरग्रहणम्। 'क्षुमा' "क्षुप विधूनने" *, क्षुपतीति क्षुपा, पकारस्य स्थाने मकारः; शत्रुक्षुपणकारिणी इषुरसि। अनेन तृतीयशरग्रहणम्। एव मादाय दद्यात् ॥ २९ ॥

इषुदान मनूद्य मन्त्रं विधत्ते— "ताः प्रयच्छतीति †। 'एनं' यजमानं 'प्राञ्चं' प्रागञ्चनम्, प्राग् गन्तारम् हे इषवः! 'पात' पालयत। 'प्रत्यञ्चम्' प्रत्यग् गन्तारम्, 'तिर्यञ्चम्' तिर्यग् गन्तारम्, किं बहुना 'दिग्भ्यः' सर्वाभ्यः 'पात' इति। "तदस्मा इति। 'अशरव्याः' अहिंसकाः; शरव्यं शरलक्ष्यम्, तद्रहिताः 'करोति'। अनेन सर्वास्वपि दिक्षु परकीयशर-लक्ष्यत्वं निवर्त्यते ‡॥

इमं मन्त्र मिष्वभिमर्शनेऽपि कात्यायनो विनियुक्तवान्— "पातेन सित्यभिमृशति"–इति §। आपस्तम्बोऽपि— "पात मा प्रत्यञ्च मिति प्रदीयमानाननुमन्त्रयते"–इति ‖ ॥ ३० ॥

विधत्ते— "अथैन माविद इति ¶। आवित्त-पदयुक्ताः सप्त मन्त्राः 'आविदः', तान् वाचयतीत्यर्थः। आवेदयन्ति ज्ञापयन्ति देवताभ्य एनं यजमान मित्याविदो मन्त्राः।

तत्र मन्त्रान् विधत्ते— "आविर्मर्या इति **। 'आवि-

* सौत्रोऽय मवसादनार्थो धातुः; ततो वोपदेवेन भ्वा० प० पठितः।

† वा० सं० १०. ८. १०, ११, १२।

‡ वा० सं० १०. ८. १३।

§ का० श्रौ० सू० १५. ५. २० ख।

‖ आप० श्रौ० सू० १८. १४. १३।

¶ का० श्रौ० सू० १५. ५. २१।

** वा० सं० १०. ९. १–७।

मैया इत्यनिरुक्तम्' साक्षाद्देवतावाचकपदरहितं मन्त्रं वाचये-दित्यर्थः । हे 'मर्याः' मरणयोग्या मनुष्याः ! 'आविः' प्रकाशोऽभूत् । अनेन कस्यै देवतायै यजमान मावेदितो भवतीत्याशङ्क्य तां देवतां दर्शयति— "प्रजापतिरिति । 'प्रजापतिः' खलु 'अनिरुक्तः' ईदृश इति वक्तु मनर्हः ; तस्मादमेन यजुषा अनिरुक्तेन अनिरुक्तात्मने 'प्रजापतये' 'एनं' यजमानम् आवेदितवान् भवतीत्यर्थः । आवेदनस्य फल माह— "सोऽस्मा इति । 'सः' आवेदितः ज्ञापितः प्रजापतिः 'अस्मै' सुन्वते 'सवम्' अभिषेकम् 'अनुमन्यते', 'तेन' प्रजापतिना 'अनुमतः' अनुज्ञातः 'सूयते' अभिषिच्यते । एव मुत्तरत्रापि व्याख्येयम् ॥ ३१ ॥

"आवित्तो ऽग्निर्गृहपतिरितीति । गृहपतिगुणकः 'अग्निः' 'आवित्तः' आवेदितः, ज्ञापितः । "वित्तो भोगप्रत्यययोः"–इति * निपातितः । अग्नये यजमानं ज्ञापितवानित्यर्थः ॥ ३२ ॥

"आवित्त ऽइन्द्र † इति । 'वृद्धश्रवाः' । "श्रव इत्यन्ननाम, श्रूयत इति सतः"–इति हि यास्कः ‡ । वृद्धं प्रभूत मन्नं यस्य ॥ ३३ ॥

"आवित्तौ मित्रावरुणाविति । 'धृतव्रतौ' । धृत मिति कर्मनाम §, अवधीरितकर्माणौ ॥ ३४ ॥

"आवित्तः पूषा इति । 'विश्ववेदाः' सर्वधनः ॥ ३५ ॥

"आवित्ते द्यावापृथिवी इति । 'विश्वशम्भुवौ' सर्वस्य जगतः सुखस्य भावयित्रौ ॥ ३६ ॥

---

* पा० सू० ८. २. ५८ ।

† 'आवित्तोऽइन्द्रः'—इति ग, घ ।

‡ निरु० १०, १. ३ ।　　§ निघ० २. १. ७ ।

"आविन्तादितिरिति *। 'उरुशर्म्मा' प्रभूतं सुखं यस्याः, 'अदितिः' अखण्डनीया देवमाता। भूमिरेव काश्चिन्मूर्त्तिं धृत्वा देवमातादितिरित्युच्यते †॥

एता देवताः सम्भूय प्रशंसति— "तयाभ्य एवैन मिति ॥ ३७ ॥ २ [ ३. ५. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्याये पञ्चमं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ३ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः।
रत्नोस्त्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यौ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः।

---

* 'केषाञ्चित् प्रतिमल्लम्, नेति सम्प्रदायः'—इति का० श्रौ० सू० १५. ५. २१ वृत्तिः। † अखण्डनीयेयं शक्तिरिति नैरुक्ताः।

भाव्योऽर्थं प्राज्यजन्मा लवणज मनूणः शार्करं चार्कतेजाः,
रत्नाढ्यो साक्षिङ्गणार्थः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे तृतीयाध्यायः समाप्तः ॥ ३ ॥

---

* अत्रत्यटीप्पन्यो द्वितीयाध्यायान्ते (१६२ पृ०) द्रष्टव्याः ।

( अथ चतुर्थाध्याये प्रथमं ब्राह्मणम् . )

केशवस्य पुरुषस्य । लोहायस माख्य ऽआविध्यत्य-वेष्टा दन्दशूका इति सर्व्वान्वा ऽएष मृत्यूनति-मुच्यते सर्व्वान् वधान् * यो राजसूयेन यजते तस्य जरैव मृत्युर्भवति तद्यो मृत्युर्यो व्वधस्त† मेवैतदति-नयति यद्दन्दशूकान् ॥ १ ॥

अथ यत् केशवस्य पुरुषस्य । न वा ऽएष स्त्री न पुमान्यत् केशवः पुरुषो यदह पुमांस्तेन न स्त्री यदु केशवस्तेनो न पुमान्नैतदयो न हिरण्यं‡ यल्लोहायसं नैते क्रिमयो नाक्रिमयो यद्दन्दशूका अथ यल्लोहायसम्भवति लोहिता इव हि दन्दशूकास्तस्मात् केशवस्य पुरुषस्य § ॥ २ ॥

* 'वधान्'—इति ग, घ ।

† 'वधस्त'—इति ग, घ ।

‡ 'हिरण्यं'—इति क ।

§ 'पुरुषस्य'—इति क, ख ।

अथैनं दिशः समारोहयति । प्राची मारोह गायत्री त्वावतु रथन्तरꣳ साम त्रिवृत् स्तोमो व्वसन्त ऋतुर्ब्रह्म द्रविणम् ॥ ३ ॥

दक्षिणा मारोह । त्रिष्टुप् त्वावतु बृहत् साम पञ्चदश स्तोमो ग्रीष्म ऋतुः क्षत्रं द्रविणम् ॥ ४ ॥

प्रतीची मारोह । जगती त्वावतु व्वैरूपꣳ साम सप्तदश स्तोमो व्वर्षा ऋतुर्व्विड् द्रविणम् ॥ ५ ॥

उदीची मारोह । अनुष्टुप् त्वावतु व्वैराजꣳ सामैकविꣳश स्तोमः शरदृतुः फलं द्रविणम् ॥ ६ ॥

ऊर्ध्वा मारोह । पङ्क्तिस्त्वावतु शाक्वररैवते सामनी त्रिणवत्रयस्त्रिꣳशौ स्तोमौ हेमन्तशिशिरावृतू व्वर्चो द्रविण मिति ॥ ७ ॥

तद्यदेनं दिशः समारोहयति । ऋतूना मेवैतद्रूप मृतूनेवैतत् * संवत्सरꣳ समारोहयति स ऋतून्त् संवत्सरꣳ समारुह्य सर्व्वं मेवेद मुपर्युपरि भवत्यव्वार्गे-†-वास्मादिदꣳ सर्व्वं भवति ॥ ८ ॥

* '०मेवैन मेतद्रूप मृतूनेवैन मेतत्०'—इति घ ।

† 'भवत्यर्वागे'—इति ग, घ ।

शार्दूलचर्म्मणो जघनार्द्धे*। सीसं निहितं भवति तत् पदा प्रत्यस्यति प्रत्यस्तं नमुचेः शिर इति नमुचिर्ह वै नामासुर आस त मिन्द्रो निविव्याध तस्य पदा शिरो ऽभितष्ठौ स यदभिष्ठित उदबाधत स उच्छ्वङ्कस्तस्य† पदा शिरः प्रचिच्छेद ततो रक्षः समभवत्तद्ध स्मैन मनुभाषते क्व गमिष्यसि क्व मे मोक्ष्यस ऽइति ॥ ९ ॥

तत् सीसेनापजघान। तस्मात् सीसं मृदु सृतजवᳬ हि सर्व्वेण हि व्वीर्य्येणापजघान तस्माद्धिरण्यरूपᳬ सन्न कियच्च नार्हति सृतजवᳬ हि सर्व्वेण हि व्वीर्य्येणापजघान तद्वै स तन्नाष्ट्रा रक्षाᳬस्यपजघान तथो ऽएवैष एतन्नाष्ट्रा रक्षाᳬस्यतो ऽपहन्ति‡ ॥ १० ॥

अथैनᳬ शार्दूलचर्म्मा रोहयति। सोमस्य त्विषिरसीति यत्र वै सोम इन्द्र मत्यपवत स यत्ततः शार्दूलः समभवत्तेन सोमस्य त्विषि-

---

* 'नार्धे'—इति ग, घ।

† 'उदवङ्कस्तस्य'—इति ख। ‡ 'ऽपहन्ति'—इति क।

स्तस्मादाह सोमस्य त्विषिरसीति तवेव मे त्विषिर्भूयादिति शार्दूलत्विषि मेवास्मिन्नेतद्दधाति तस्मादाह तवेव मे त्विषिर्भूयादिति * ॥ ११ ॥

अथ रुक्म मधस्तादुपास्यति। मृत्योः पाहीत्यमृत मायुर्हिरण्यं तदमृत ऽआयुषि प्रतितिष्ठति † ॥ १२ ॥

अथ रुक्मः शतवितृण्णो वा भवति। नववितृण्णो वा स यदि शतवितृण्णः शतायुर्वा ऽअयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नववितृण्णः ॥ १३ ॥

त मुपरिष्टाच्छीर्ष्णो निदधाति। ओजोऽसि सहो ऽस्यमृत मसीत्यमृत मायुर्हिरण्यं तदस्मिन्नमृत मायुर्दधाति तद्यद्रुक्मा ऽउभयतो भवतो ऽमृत मायुर्हिरण्यं तदमृतेनैवैन मेतदायुषोभयतः परिबृंहति तस्माद्रुक्मा ऽउभयतो भवतः ‡ ॥ १४

* '०दिति'—इति क। '०दिति'—इति ग, घ।

† 'तिष्ठति'—इति क।

‡ 'भवतः'—इति

अथ बाहू ऽउद्गृह्णाति । हिरण्यरूपा ऽउषसो व्विरोक ऽउभाविन्द्रो ऽउदिथः सूर्यश्च । आरोहतं व्वरुणा मित्र गर्त्तं ततश्चक्षाथा मदितिं दितिं चेति बाहू वै मित्रावरुणौ पुरुषो गर्त्तस्तस्मादाहारोहतं व्वरुणा मित्र गर्त्त मिति ततश्चक्षाथा मदितिं दितिं चेति ततः पश्यतꣳ स्वं चारणं चेत्येवैतदाह * ॥ १५ ॥

नैतेनोद्गृह्णीयात् । मित्रोऽसि व्वरुणोऽसीत्येवोद्गृह्णीयाद् बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मान्मित्रोऽसि व्वरुणोऽसीत्येवोद्गृह्णीयात् ॥ १६ ॥

तस्यादेन मूर्द्धबाहु मभिषिञ्चति । व्वीर्यं वा ऽएतद्राजन्यस्य यद्बाहू वीर्यं वा ऽएतदपाꣳ रसः सम्भृतो भवति येनैन मेतदभिषिञ्चति नेन्म ऽइदं व्वीर्यं व्वीर्यं मपाꣳ रसः सम्भृतो बाहू व्विलनाते तस्मादेन मूर्द्धबाहु मभिषिञ्चति ॥ १७ ॥३॥

। तृतीयप्रपाठके तृतीयं ब्राह्मणम् [४. १.] ॥

---

* 'दाह'—इति ग, घ ।

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, त महं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

× × × (? *)। कात्यायनः—"अवेष्टा इति लोहायस माविध्यति केशवास्ये सदोऽन्त उपविष्टाय"-इति †। सदसो मध्ये उपविष्टस्य केशवस्य क्लीबस्य वदने "अवेष्टा"-इतिमन्त्रेण ‡ ताम्र मर्पयेत्। तदिदं विधत्ते— "केशवस्येति 'लोहायसं' ताम्रम् 'आ विध्यति' अर्पयेत्। 'दन्दशूकाः' दंशनशीलाः, मृत्यव इहाभिप्रेताः। 'अवेष्टाः' अवपूर्वी यजिर्नाशार्थे वर्त्तते, विनाशयिता इति ॥

व्याचष्टे—"सर्वान् वा इति। 'यो राजसूयेन यजते', स 'सर्वान् मृत्यून्', 'सर्वान्' परकृताम् 'वधान्' अपि 'अतिमुच्यते' अतिक्रामेत। मुच्यतो 'मृत्युः' नाम 'जरा', देहविदारकत्वात्। तस्माद् दन्दशूकपदेन मृत्यवो वधाश्च विवक्षिताः, तान् केशववदने ताम्रनिधानेन नाशितवान् भवतीति तात्पर्यार्थः ॥ १ ॥

केशवलोहायसदन्दशूकाना मक्षरालवर्त्तित्वं सम्यगुपपादयति—

---

* यद्यप्येकतमेऽप्यादर्शपुस्तके मात्र कश्चित् पाठोऽवलोक्यते, पर मध्यायादौ ब्राह्मणारम्भेऽत्र नून मर्थसङ्गिपवर्गपरेणावतरणिकोल्लेखेन किञ्चित्पाठेन भवितव्यम्, नष्टं तल्लिपिकरपरम्परयेत्यभाक मिति ।

† का० श्रौ० सू० १५. ५. २२ ।

‡ वा० सं० १०. १०. १ ।

"अथ यत् केशवस्येति *। एतद्वाक्यं परिस्रुत्क्रयणे व्याख्यातम्। दन्दशूकाना मप्यन्तरालवर्त्तित्वं दर्शयति— "नैते क्रिमय इति। दन्दशूकाना मपि लोहितत्वात् लोहितायसेन भाव्य मित्यर्थः ॥ २ ॥

सूत्रम्— "सुन्वन्त माक्रमयन् दिशः प्राची मारोहेति वाचयति प्रतिमन्त्रं प्रतिदिशं यथालिङ्ग माक्रम्य"-इति †। अध्वर्युः प्राच्यादिकाः पञ्च दिशो यजमान माक्रमयन् "प्राची मारोह" -इत्यादिकांस्तत्तद्दिक्प्रतिपादकान् मन्त्रान् वाचयेदित्यर्थः। तत्र दिगाक्रमणं विधत्ते— "अथैनं दिश इति। 'समारोहयति' आक्रमेत्। प्राचीदिगाक्रमणमन्त्रं विधत्ते— प्राची मारोहेति ‡। हे यजमान! 'प्राचीम् आरोह'। तथा स्थितं 'त्वा' त्वां छन्दसां मध्ये गायत्री 'अवतु', साम्नां मध्ये 'रथन्तरं साम रक्षतु, स्तोमानां मध्ये 'त्रिवृत्' त्र्यङ्नवकात्मकः स्तोमः, ऋतूनां मध्ये वसन्ताख्य ऋतुः, 'ब्रह्म' त्वदीयं 'द्रविणं' धनं रक्षतु; ब्रह्मरूपं धनं वा अवत्विति। एव मुत्तरत्रापि।

"अभि त्वा शूर नोनुमः"-इत्यस्या § मृच्युत्पन्नं साम रथन्तर मित्युच्यते ‖। "उपास्मै गायता नरः"-इति सूक्तत्रये

---

* इत उत्तरस्य (४. १. ३—४. ४. ५.) ग्रन्थस्य भाष्यं ङ-च-ज-पुस्तकेषु नास्ति; छ-पुस्तकमात्रेऽवलोक्यते।

† का० श्रौ० सू० १५. ५. २३।

‡ वा० सं० १०. १०. २।

§ सा० छ० आ० ३. १. ५. १ ऋचि।

‖ सा० गा० आ० २. १. २१ साम।

आद्याभिस्तिसृभिर्मध्यमाभिरुत्तमाभिश्चोद्गातृगानेन त्रिरावृत्तस्त्रिवृत्स्तोमो भवति * ॥ ३ ॥

दक्षिणदिगाक्रमणं विधत्ते— "दक्षिणा मारोहेति †। पूर्ववद् योजनीयम्। "त्वा मिद्धि हवामहे"-इत्यस्या मृचि ‡ उत्पन्नं साम 'बृहत्' §। पञ्चदशस्तोमकरण मेवम्— पूर्वोक्तत्रिवृत्स्तोमः खलु सूक्तत्रयनिष्पाद्यः ; अन्ये तु स्तोमा एकैकेन तृचात्मकेन सूक्तेन निष्पाद्यन्ते। तत्र चायं क्रमः— "प्रथमं पर्यायं पञ्चभिर्ऋग्भिर्गायेत। तद्यथा— प्रथमा मृचं त्रिर्गायेत्, इतरे द्वे सकृत्-सकृत्; तृतीये तु उत्तमां त्रिर्गायेत्, आद्ये द्वे सकृत्-सकृदिति ||। 'क्षत्रम्' क्षत्रियः ॥ ४ ॥

प्रतीच्या मन्त्रं विधत्ते— "प्रतीची मारोहेति ¶। "यद् द्याव इन्द्र ते शतम्"-इत्यस्या मृचि ** उत्पन्नं साम 'वैरूपम्' ††। सप्तदशस्तोमसम्पादन मेवम्— प्रथमपर्याये प्रथमा मृचं त्रिर्गायेत्, द्वितीयपर्याये मध्यमां त्रिः, तृतीयपर्याये मध्यमा मुत्तमाञ्च त्रिः, अन्याः सकृत्-सकृदिति ‡‡। वैश्यो जातिरित्यर्थः ॥ ५ ॥

---

* ता० ब्रा० १. २. १—३ ख०।

† वा० सं० १०. ११. १।

‡ सा० छ० आ० ३. १. ५. २।

§ सा० गा० आ० १. १. २७।

|| ता० ब्रा० १. २. ४—६।

¶ वा० सं० १०. १२. १।

** सा० छ० आ० ३. २. ४. ६।

†† सा० गा० आ० १. १. ६।

‡‡ ता० ब्रा० १. २. ७—१३।

उदीच्या मन्त्रं विधत्ते — "उदीची मारोहेति *। "पिबा सोम मिन्द्र मन्दतु त्वा"–इत्यस्या मृचि † उत्पन्नं साम 'वैराजम्' ‡। एकविंशतिस्तोमनिष्पत्तिप्रकारस्त्वेवम्— प्रथमे पर्याये उत्तमां सकृद् गायेत्, द्वितीये पर्याये मध्यमां सकृद् गायेत्, तृतीये पर्याये सर्वश्चेतरास्तिस्त्रिरित्येवं कृते एकविंशः स्तोमो भवति § ॥ ६ ॥

ऊर्ध्वाया मन्त्रं विधत्ते— "ऊर्ध्वा मारोहेति ‖। "प्रोष्वस्मै पुरोरथम्"–इत्यस्या मृचि ¶ उत्पन्नं साम 'शाक्वरम्' **, "रेवतीर्नः सधमादे"–इत्यस्या मृचि †† उत्पन्नं साम 'रैवतम्' ‡‡। त्रिणवस्तोमनिष्पत्ति प्रकारस्त्वेवम्— प्रथमे पर्याये प्रथमां त्रिर्गायेत्, मध्यमां पञ्चकृत्वो गायेत्, उत्तमां सकृत्; द्वितीये पर्याये प्रथमां सकृत्, मध्यमां त्रिः, उत्तमां पञ्चकृत्वः; तृतीये पर्याये प्रथमां पञ्चकृत्वः, मध्यमां सकृत्, उत्तमां

---

* वा० सं० १०. १३. १।

† सा० छ० आ० ५. १. १. ८।

‡ सा० गा० गे० १०. २. ३१।

§ ता० ब्रा० १. २. १४—१७।

‖ वा० सं० १०. १४. १।

¶ सा० उ० आ० ६. १. १४. १।

** सा० गा० ऊ० ५. २. ६। सायणाचार्यस्य भ्रमोक्तिरिवैषा गम्यते; मानाभावात्। वस्तुतो महानाम्नीसामैव शाक्वर मिति प्रसिद्धो याज्ञिकेषु, अस्ति च तत्र मानम् आर्षेयकं ब्राह्मणम्। तत्र ३. २६ द्रष्टव्यम्।

†† सा० छ० आ० २. २. १. ६।

‡‡ सा० गा० आ० २. १. १७।

स्त्रिर्गायेदिति। सोऽयं त्रिरावृत्तनवसङ्ख्योपेतत्वात् 'त्रिणव'-नामकः स्तोमो भवति * ॥ ॥ त्रयस्त्रिंशस्तोमनिष्पत्ति-प्रकार उच्यते— प्रथमपर्याये प्रथमां त्रिः कृत्वः, मध्यमां सप्तकृत्वः, उत्तमां सकृत्; द्वितीये प्रथमां सकृत्, मध्यमां त्रिः, उत्तमां सप्तकृत्वः; तृतीयपर्याये प्रथमां सप्तकृत्वः, मध्यमां सकृत्, उत्तमां त्रिः। सोऽयं त्रयस्त्रिंशस्तोमो नाम † ॥

त्रिषु मन्त्रेषु ब्राह्मणक्षत्रियवैश्या धनरक्षकत्वेन धनरूपत्वेन वा कथिताः; चतुर्थे उदुम्बरादिफलस्य तद्रूपत्वम्, पञ्चमे 'वर्च्चसः' प्रख्यातशूरताक्रान्तस्य तेजसो रक्षकत्वं तद्रूपत्वं चोक्तम् ॥ ७ ॥

दिशां समारोहणं समस्य संवत्सरारोहात्मना प्रशंसति— "तद्यदेन मिति। पञ्चानां दिशां समारोहणम् ऋतुरूपत्वम्। ऋतूना मपि "हेमन्तशिशिरयोः समासेन" ‡ पञ्चसङ्ख्यात्मकत्वात् संवत्सरारोहणेन यजमानः 'सर्व मेवेदं' जगत् 'उपर्युपरि भवति' सर्वस्योपरि वर्त्तमानो भवति; कालस्य सर्वेषा मुपरिभावात्। 'अस्मात्' सुन्वतः सकाशात् 'इदं सर्वम्' 'अर्वाक्' अर्वाचीनम् अधस्तनं 'भवति' इति ॥ ८ ॥

पूर्वं मैत्रावरुणधिष्ण्यस्य पुरस्तादभिहिताना मभिषेचनीय-पात्राणा मग्रे आस्तृतस्य शार्दूलचर्मणोऽपरेऽन्ते निहितस्य सीसस्य प्रासन मिदानीं विधत्ते— "शार्दूलेति। 'शार्दूलचर्म्मणः' 'जघ-

---

* ता० ब्रा० १. ३. १, २।

† ता० ब्रा० १. ३. ३—७।

‡ ऐ० ब्रा० १. १. १।

नार्द्धे' अपरभागे 'सीसं निहितं भवति'। निहित मिति निष्ठा प्रयोगेण पूर्वं चर्म्मास्तरणसमये एव सीसनिधानं सम्पन्न मिति मन्तव्यम्। तथैव कात्यायनः— "मरुत्वतीयान्ते पात्राणि पूर्वेण व्याघ्रचर्म्मास्तृणाति सोमस्य त्विषिरिति, अपरेऽन्ते सीसं निदधाति"–इति *। अत्र तु "पादेन सीसं निरस्यति"–इत्येतावदेवासूत्रयत् †। 'तत्' सीसं 'पदा' पादेन "प्रत्यस्तम्"–इतिमन्त्रेण ‡ निरस्येत्। 'नमुचेः' असुरस्य 'शिरः' 'प्रत्यस्तं' निरस्त मिति तस्यार्थः॥

नमुचिशिरसः सीसेन निरास माख्यायिकयोपपादयति— "नमुचिर्ह वा इति। पूर्व मिन्द्रो नमुचिनाम्नोऽसुरस्य 'शिरः' स्वेन 'पादेन' 'अभितष्ठौ' आचक्रमे। 'सः' आक्रान्तः 'उद-बाधत'। 'उच्छ्वङ्कः' उद्गतः श्वङ्कः। श्वङ्को नाम प्राणिविशेषः, श्वङ्कानीतशीर्षाणीति छान्यत्राम्नातम् §। 'तस्य' शिरः 'पदा' स्वीयेन पादेन 'प्रचिच्छेद' छिन्नवान्, 'ततः' छिन्नशिराः 'रक्षः' राक्षसः 'समभवत्', 'तत्' रक्षः 'एनं' घातक मिन्द्रम् 'अनुभाषते' वदति, हे इन्द्रः ! 'क्व गमिष्यसि ?', 'मे' मत्तः सकाशात् क्व 'मोक्ष्यसे' मुक्तो भविष्यसि ? 'इति' वदति॥ ८॥

"तत्सीसेनेति। 'तत्' रक्षः, एतद्वदन्तं राक्षसं 'सीसेन अपजघान'। 'तस्मात्' 'सीसं' 'मृदु' जातम्। 'हि' यस्मात् 'हतजवं' गतवेगम्। तस्य मुपपादयति— "सर्वेण हीति।

---

* का० श्रौ० सू० १५. ५. १, २।

† का० श्रौ० सू० १५. ५. २४।

‡ वा० सं० १०. १४. १।

§ श्वङ्क इति गत्यर्थस्य श्वङ्कते रूपम् (भ्वा० आ० ६६ धा०)।

तस्माद् गतसार मेतत् सीसं 'हिरण्यरूपं' रजतरूपं 'सत्' अपि 'कियच्चन' कियदपि मूल्यं 'नार्हति' न लभते। रजतस्यापि हिरण्यशब्दव्यवहारोऽस्ति ; "यदश्रवशीयत तद्रजतं हिरण्य मभवत्"-इति * तैत्तिरीयश्रुतेः। अतः पूर्वं रक्षसः सीसेन हतत्वादिदानी मपि सीसप्रासनेन रक्षांसि हतानि भवन्तीत्यर्थः ॥ १० ॥

विधत्ते— "अथैन मिति †। 'आरोहयति' आक्रामयति। "सोमस्य त्विषिरित्यादि पूर्वं व्याख्यातम् ‡ ॥ ११ ॥

विधत्ते— "अथ रुक्म मिति। 'रुक्मं' हिरण्डम् § 'अधस्तात्' अधःप्रदेशे 'उपास्यति' निदध्यात्। अत्र सूत्रम्— "रुक्म मधःपदं कुरुते मृत्योरिति"-इति ‖। हे रुक्म! 'मृत्योः' सकाशात् 'पाहि' पालय ; एन मित्यर्थसिद्धम् ¶। रुक्मस्य मृत्युपरिहारकत्व मुपपादयति— "अमृत मिति। हिरण्य ममृत मायुः; हिरण्यदानेन अपमृत्योः परिहर्त्तुं शक्यत्वात् आयुर्दत्वम्। तस्मात् असौ यजमानः पादस्याधःप्रदेशे रुक्मनिधानेन आयुषि एव प्रतिष्ठितवान् भवतीत्यर्थः ॥ १२ ॥

शिरसि निधीयमानस्य रुक्मस्य कञ्चिद् गुणं विधत्ते— "अथ रुक्म मिति **। 'शतवितृण्णः' शतच्छिद्रः, 'नववितृण्णः'

---

* तै० सं० १. ५. १. २।

† का० श्रौ० सू० १५. ५. २५।

‡ २३८ पृ० १७ पं द्रष्टव्यम्।

§ 'रुक्म आभरणविशेषः'—इतीह कर्काचार्यः। तच्च परिमण्डलं मामेत्युपदेश इतीह वृत्तिः। ‖ का० श्रौ० सू० १५. ५. २६।

¶ वा० सं० १०. १५. २।

** का० श्रौ० सू० १५. ५. २७।

नवच्छिद्र: 'वा' भवेत्। तदुभयं क्रमेणायु:प्राणात्मना प्रशंसति— "स यदि शतेति। आयुरनुसारेण तेजोवीर्ययोरपि शतसङ्ख्याकत्वं द्रष्टव्यम् ॥ १३ ॥

तस्य शिरसि निधानं विधत्ते— "त मुपरिष्टादिति। 'शीर्ष्ण:' इति षष्ठी। 'ओज:'–इति मनोबलम्। 'सह:'–इति वाह्येन्द्रियबलम्। 'अमृतम्'–इति प्राणबलम्; "प्राणो वा अमृतम्"–इतिश्रुते:। हे रुक्म! तत् त्रितयरूपोऽसीति मन्त्रार्थ: *।

अधस्तादुपरिष्टाच्च रुक्मनिधान मायु:प्रवृद्धिरूपेण प्रशंसति— "तद्यद्रुक्मा उभयत इति। रुक्मशब्दात् प्रथमा द्विवचनस्यावादेशे कृते "लोप: शाकल्यस्य"–इति † वकारलोप:। उभयतो रुक्मविधानेन 'एनं' यजमानम् अमृतरूपेण 'आयुषा' 'उभयत:' 'परिबृंहति' संवर्द्धितवान् भवति ॥ १४ ॥

विधत्ते— "अथ बाहू इति। 'उद्गृह्णाति' यजमान: ऊर्द्ध्वौ प्रसारितौ कुर्यात्। अत्र "मित्रोऽसि वरुणोऽसि"–इत्यय मेव मन्त्रो बाहूद्धरणे विधास्यते। तत्र पूर्वपक्षत्वेन मन्त्रं पठति— "हिरण्यरूपाविति। अतएव कात्यायनो विकल्पेन सूत्रयामास— "बाहू उद्गृह्णाति हिरण्यरूपा इति, मित्रोऽसि वरुणोऽसीति वा"–इति ‡। हिरण्येतिमन्त्रस्य § अय माध्यात्मिकोऽर्थ:। हे वरुण! हे मित्र! बाहुद्वयस्य पृथक्सम्बुद्धि:।

---

* वा० सं० १०. १५. ३।

† पा० सू० ८. ३. १६।

‡ का० श्रौ० सू० १५. ५. २८, २६।

§ वा० सं० १०. १६. १, २।

'हिरण्यरूपौ' हितरमणीयरूपौ, हिरण्यस्वरूपौ वा सालङ्कारत्वात्। 'इन्द्रौ' परमैश्वर्यसम्पन्नौ उभौ युवाम् 'उषसः' 'विरोके' विरोचने 'उदिथः', 'सूर्यश्च' उद्गतः। एतेर्लटि मध्यमद्विवचने रूपम्। हे मित्रावरुणौ! बाहुरूपौ 'गर्त्तं' पुरुषम् 'आरोहतम्' पुरुषस्योपरि भव त्व मित्यर्थः। 'ततः' अनन्तरम् 'अदितिम्' अखण्डनीयाम्, पृथिवीरूपां स्वीयां प्रजां 'चक्षीथाम्' पश्येताम्। 'दितिं' खण्डनीयाम्, परा मेताञ्च। तस्य तद् बाहुद्वय मेव स्वबलं रक्षति, परबलं हन्ति, अत एव मुच्यत इत्यध्यात्मविषयोऽर्थः।

आधिदैविके त्वयं विशेषः— 'गर्त्तः' रथः; हे 'मित्रावरुणौ' देवते! रथम् 'आरोहतम्'। 'ततः' रथारोहणानन्तरम् 'अदितिं' अदीनं समर्थं विहितस्य कर्मणः कर्त्तारं पुरुषं प्रपश्यतम्, 'दितिं' दीनं विवेकरहित मनुष्ठातारं च पश्यत मिति। त मिमं मन्त्रं बाहुद्वयपरत्वेन व्याचष्टे— "बाहू वै मित्रेति। अन्तिमपादस्यार्थं माह— "ततः पश्यत मिति। 'स्वं' स्वीयम् 'अरणम्' अरमणीयम्, परं च पश्यति। 'अदिति'-शब्दस्य स्वोऽर्थः, 'दिति'-शब्दस्य परोऽर्थ इति विभागः॥ १५॥

एतेन मन्त्रेणोद्ग्रहणं दूषयति— "नैतेनेति। स्वमत माह — "मित्रोऽसीति। एवकारोऽन्यमन्त्रनिवृत्त्यर्थः। मन्त्रस्तु पूर्वं व्याख्यातः *। त मिमं मन्त्रं प्रशंसति— "बाहू वै मित्रेति॥ १६॥

एव मूर्द्धबाहुत्वेनैव स्थितस्य यजमानस्याभिषेको विधास्यते, त मिमं पुनः प्रशंसति— "तद्यदेन मिति। एवकारो

* इतः पूर्वं मेव द्रष्टव्यम् ( २६८ पृ० )।

भिन्नक्रमः ; ऊर्द्ध्वबाहु मेवेति योजना। राजन्यस्य बाहू एव वीर्यं। अभिषेचनीयपात्रेषु व्यासिक्ताना मपां रसोऽपि वीर्यम् ; वीर्योपादकत्वात्। अतः तेन रसेनाभिषिक्ते ऊर्द्ध्वबाहुत्व मेव युक्त मित्यर्थः। तस्य कारण माह— "नेन्म इति। 'मे' मम 'इदं वीर्यं' वीर्यरूपौ 'बाहू', कर्मवीर्यरूपः 'अपां रसः' 'नेत् ग्लिनात्' न वर्जयेत् 'इति' अतो हेतोः 'ऊर्द्ध्वबाहुम्' एव अभिषिञ्चेदित्यर्थः ॥ १७ ॥ ३ [ ४. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम् . )

तं वै प्राञ्चं तिष्ठन्त मभिषिञ्चति। पुरस्ताद् ब्राह्मणो ऽभिषिञ्चत्यध्वर्युर्वा यो वास्य पुरोहितो भवति पश्चादितरे ॥ १ ॥

सोमस्य त्वा द्युम्नेनाभिषिञ्चामीति। व्वीर्येणैतदाहाग्नेर्भ्राजसेति व्वीर्येणैवैतदाह सूर्यस्य व्वर्चसेति व्वीर्येणैवैतदाहेन्द्रस्येन्द्रियेणेति व्वीर्ये-

णेवैतदाह क्षत्राणां क्षत्रपतिरेधीति राज्ञा मधिराज एधीत्येवैतदाहातिदिद्यून् पाहीतीषवो वै दिद्यव इषुवध* मेवैन मेतदतिनयति तस्मादाहातिदिद्यून् पाहीति ॥ २ ॥

इमं देवाः। असपत्नꣳ सुवद्ध्व मितीमं देवा अभ्रातृव्यꣳ सुवद्ध्व मित्येवैतदाह महते क्षत्राय महते ज्यैष्ठायेति नात्र तिरोहित मिवास्ति महते जानराज्यायेति महते जनानाꣳ राज्यायेत्येवैतदाहेन्द्रस्येन्द्रियायेति व्वीर्यायेत्येवैतदाह यदाहेन्द्रस्येन्द्रियायेतीम ममुष्य पुत्र ममुष्यै पुत्र मिति तद्यदेवास्य जन्म तत एवैतदाहास्यै व्विश ऽइति यस्यै व्विशो राजा भवत्येष वो ऽमी राजा सोमो ऽस्माकं ब्राह्मणानाꣳ राजेति तदस्मा ऽइदꣳ सर्व्वं माद्यं करोति ब्राह्मण मेवापोद्धरति तस्माद् ब्राह्मणो नाद्यः सोमराजा हि भवति † ॥ ३ ॥

अथैत मभिषिकम्। कृष्णविषाणयानुविमृष्टे व्वीर्य्यं वा ऽएतदपाꣳ रसः सम्भृतो भवति येनैन

---

* 'इषुबध'—इति ग, घ।

† 'भवति'—इति क।

मेतदभिषिञ्चतीदं मे व्वीर्यꣳ सर्व्व मात्मान मुपस्पृशादिति तस्माद्वा ऽअनुविमृष्टे * ॥ ४ ॥

सोऽनुविमृष्टे। प्र पर्व्वतस्य व्वृषभस्य पृष्ठादिति यथायं पर्व्वतोऽतिष्ठावा यथऽर्षभः पशूनतिष्ठावैवं व्वा ऽएष इदꣳ सर्व्व मतितिष्ठत्यर्व्वागिवास्मादिदꣳ सर्व्वं भवति यो राजसूयेन यजते तस्मादाह प्र पर्व्वतस्य व्वृषभस्य पृष्ठान्नावश्चरन्ति स्वसिच इयानाः † । ता ऽआववृत्रन्नधरागुदक्ता ऽअहिं बुध्न्य मनु रीयमाणा इति ‡ ॥ ५ ॥

अथैन मन्तरेव शार्दूलचर्मणि व्विष्णुक्रमान् क्रमयति। व्विष्णोर्व्विक्रमण मसि व्विष्णोर्व्विक्रान्त मसि व्विष्णोः क्रान्त मसीतीमे वै लोका व्विष्णोर्विक्रमणं व्विष्णोर्व्विक्रान्तं व्विष्णोः क्रान्तं तदिमानेव लोकान्त्समारुह्य सर्व्व मेवेद मुपर्युपरि भवत्यर्व्वागिवास्मादिदꣳ सर्व्वं भवति ॥ ६ ॥

---

* 'ऽअनुविमृष्टे'—इति ग, घ।

† 'इयानाः'—इति ग, घ।

‡ 'इति'—इति क। 'इति'—इति ग, घ।

अथ ब्राह्मणस्य पात्रे। सᳫंस्रवानवसमवनयति तद् ब्राह्मणᳫं राजान मनु यशः करोति तस्माद् ब्राह्मणो राजान मनु यशः ॥ ७ ॥

तद्योऽस्य पुत्रः प्रियतमो भवति। तस्मा ऽएतत् पात्रं प्रयच्छतीदम् मेऽयं व्वीर्यं पुत्रो ऽनुसंतनवदिति * ॥ ८ ॥

अथ प्रतिपरेत्य गार्हपत्य मन्वारब्धे जुहोति। प्रजापते न त्वदेतान्यन्यो व्विश्वा रूपाणि परि ता बभूव। यत् कामास्ते जुहुमस्तन्नो ऽअस्त्वय ममुष्य पितेति तद्यः पुत्रस्तं पितरं करोति यः पिता तं पुत्रं तदेनयोर्व्वीर्यें व्यतिषजत्यसावस्य पितेति तद्यः पिता तं पितरं करोति यः पुत्रस्तं पुत्रं तदेनयोर्व्वीर्यें व्यतिषज्य पुनरेव यथायथं करोति व्वयᳫं स्याम पतयो रयीणाᳫं स्वाहेत्याशीरेवैषैतस्य कर्मण आशिष मेवैतदाशास्ते † ॥ ९ ॥

* '०दिति'—इति क। '०दिति'—इति ग, घ।

† 'दाशास्ते'—इति ग, घ।

अथ य एष सꣳस्रवो ऽतिरिक्तो भवति। त माग्नीध्रीये जुहोत्यतिरिक्तो वा ऽएष सꣳस्रवो भवत्यतिरिक्त आग्नीध्रीयो गार्हपत्ये हवीꣳषि श्रपयन्त्याहवनीये जुह्वत्यथैषो ऽतिरिक्तस्तदतिरिक्त ऽएवैतदतिरिक्तं दधात्युत्तरार्द्धे जुहोत्येष ह्येतस्य देवस्य दिक् तस्मादुत्तरार्द्धे जुहोति स जुहोति रुद्र यत्ते क्रिवि परं नाम तस्मिन् हुत मस्यमेष्ट मसि स्वाहेति ॥ १० ॥ ४ ॥

॥ इति तृतीयप्रपाठके चतुर्थं ब्राह्मणम् [४. २.] ॥

अथ द्वितीयब्राह्मणेऽभिषेक उच्यते। अत्र कात्यायनः— "स्थितं प्राञ्च मभिषिञ्चति पुरोहितोऽध्वर्युर्वा पुरस्तात् पालाशेन प्रथमम्, पश्चादितरे द्वितीयेन, स्वस्तृतीयेन, मित्र्यो राजन्यो वैश्यश्चतुर्थेन, सोमस्य त्वा द्युम्नेनेति प्रतिमन्त्रम्, अभिषिञ्चामीति सर्वत्र साकाङ्क्षत्वात्, क्षत्राणां क्षत्रपतिरेधीति येम ममुष्य"–इति *। ऊर्द्ध्वबाहुत्वेन स्थितं प्राङ्मुखं यजमानं पुरोहिताध्वर्य्वोरन्यतरो ब्राह्मणः सुन्वतः पुरो देशे स्थित्वा पालाशेन पात्रेणाभिषिञ्चेत्। इतरे स्वादयस्तयोऽभिषिच्यमानस्य

---

* का० श्रौ० सू० १५. ५. ३०–३३।

पश्चाद् भागे स्थित्वा स्वस्वपात्रेणाभिषिञ्चेयुः। तत्र "सोमस्य" -इत्यादयश्चत्वारो मन्त्राश्चतुर्णाम्। तत्राभिषिञ्चामीति प्रथम-मन्त्रगतस्य पदस्योत्तरेषु त्रिष्वनुषङ्गः; साकाङ्क्षत्वान्मन्त्राणाम्। "क्षत्राणां क्षत्रपतिरेधि"-इति च सर्वत्रानुषज्यते, "इमं देवा असपत्नम्"-इत्येष मन्त्रश्च। तत्र 'इमम्'-'अमुष्य'-इतिस्थाने यष्टुस्तत्पितुश्च नाम गृह्णीयादिति सूत्रार्थः॥

त मिमं क्रमेण विधत्ते— "तं वै प्राञ्च मिति। तच्छब्दः प्रकृतवाची, ऊर्द्ध्वबाहु मित्यर्थः। 'प्राञ्चं' प्राङ्मुखं 'तिष्ठन्तम्' अभिषिञ्चेत्; 'पुरस्ताद्' अभिषिच्यमानस्य पुरो देशे 'ब्राह्मणः' अभिषिञ्चेत्, 'इतरे' त्रयः 'पश्चात्' सुन्वतः पश्चिमभागे स्थित्वा अभिषिञ्चेयुः॥ १॥

तत्र मन्त्रान् सार्थवादं विधत्ते— "सोमस्येति। हे यज-मान! 'त्वा' त्वां 'सोमस्य' 'द्युम्नेन' द्योतनशीलया दीप्त्या अभिषिञ्चामीत्येको मन्त्रः *। "अग्नेर्भ्राजसा"-इत्यपरः †, अभिषिञ्चामीत्यनुषज्यते; वाक्यस्य साकाङ्क्षत्वात्। "सूर्यस्य वर्चसा"-इति तृतीयः ‡। 'वर्चसा' रोचिषा। "इन्द्रस्य इन्द्रि-येण वीर्येण"-इति चतुर्थः §। सर्वशेषं मन्त्रभागद्वय मर्थ-पुरस्सर माह— "क्षत्राणा मिति। 'क्षत्राणां' बहूनां क्षत्रि-याणां राज्ञां वा 'क्षत्रपतिः' क्षत्रियस्य पतिः 'एधि' भव ||।

---

* वा० सं० १०. १७. १।

† वा० सं० १०. १७. २।

‡ वा० सं० १०. १७. ३।

§ वा० सं० १०. १७. ४।

|| वा० सं० १०. १७. ५।

शाहस्तिवत्तिभ्यां स्वामित्वं बहुत्वं च विवक्ष्यते। 'दिद्यून्' बाधकानिषून् 'अति'-क्रम्य 'पाहि' रक्ष, इषुभिर्न बाधो भवेदित्यर्थः ॥ २ ॥

सर्वथानुषज्यमानं मन्त्रान्तं सार्थवादं विधत्ते— "इमं देवा इति। अयं मन्त्रः * पूर्व मेवार्थवादवाक्येन च सह विस्पष्टं व्याख्यातः † ॥ ३ ॥

विधत्ते— "अथैत मभिषेक मिति। एवं क्रियमाणम् 'अभिषेकं' स्वदेहपतित मभिषेकजल मित्यर्थः। 'कृष्णविषाणया' कण्डूयन्त्या 'अनुविमृष्टे' प्रलिम्पति यजमानः। त मिमं वीर्यसम्पादनरूपेण प्रशंसति— "वीर्यं वा इति। इद मभिषेकजलरूपं 'वीर्यं' 'मे' मम 'सर्वम् आत्मानम्' 'उपस्पृशात्' उपस्पृशतु 'इति' बुद्ध्या विमार्जनं कुर्यादित्यर्थः ॥ ४ ॥

तत्र मन्त्रं विधत्ते— "सोऽनुविमृष्टे प्रपर्वतस्येति ‡। या आपो 'वृषभस्य' वर्षणक्षमस्य 'पर्वतस्य'। पर्वत इति मेघनाम §। मेघस्य 'पृष्ठात्' 'नावः' नाव्या इत्यर्थः, प्रचरन्ति। कीदृश्यः? 'स्वसिचः' स्व मात्मीयं यजमानशरीरं सिञ्चन्तीति स्वसिचः। 'इयानाः' गच्छन्त्यः, बाहुल्येन सर्वत्र प्रवृत्तयः; 'ताः' आपः 'उदक्ताः' उत्क्षिप्ताः। उत्पूर्वस्याञ्चतेर्निष्ठायां रूपम्। इदानीम् 'अधराग्' अधोभागे 'अक्रम्' आरब्धेति; अहितत्तमाक्रम्। 'बुध्नम्' बुध्नस्य पादस्याग्रभागो

* वा० सं० १०. १८. १।
† २०१ पृ० १ पं० द्रष्टव्यम्।
‡ का० श्रौ० सू० १५. ६. ८।
§ निघ० १. १० ६।

बुध्नः, तम्। शिरःप्रभृति पादपर्यन्तम् 'अनु' अनुक्रमेण 'रीयमाणाः' लेपरूपेण स्रवन्त्यः, 'आवहवन्' यजमानशरीरं सम्यगावृत्य स्थिताः, तिष्ठन्तीति *। इत्याध्यात्मिकोऽर्थः।

आधिदैविकन्तु— 'पर्वतः' आदित्यः, 'वृषभस्य पृष्ठात्' 'इयानाः' निर्गच्छन्त्यः, 'नावः' नाव्या आपः 'चरन्ति'। तथा च श्रुतिः— "नाव्या उ एव यजुषस्य इष्टका इत्युपक्रम्य, "षष्टिश्च ह वै त्रीणि च शतान्यादित्यं नाव्या अभिचरन्ति"-इति †। 'ताः' प्रावृट्काले 'आवहवन्' आवर्तन्ते; 'अधराग्' आदित्यमण्डलाद् भूमिं प्रति अधोगमनशीलाः, 'उदक्' 'ताः' पूर्वं भूमेः सकाशात् आदित्यमण्डलं प्रति 'उदक्' ऊर्ध्वगमनशीलाः 'अद्रिं' मेघम् 'बुध्नम्' अन्तरिक्षम्, तत्र भवम् 'बुध्न्यम्' मध्यमस्थानम् 'अनुरीयमाणाः' अनुप्रविश्य तस्मान्निर्गच्छन्त्यः, भूमिं प्राप्नुवन्तीति शेषः ‡॥

मन्त्रस्य प्रथमपादस्य तात्पर्यमाह— "यथायं पर्वत इति। 'यथा पर्वतः' 'अतिष्ठावा' सर्वमतिक्रम्य स्थाता। तिष्ठतेः "आतो मनिन्"-इति § वनिप्। 'यथा ऋषभः' पशूनतिक्रम्य तिष्ठति, एव मेष राजा तिष्ठति, सर्वस्योपरि भवति। 'अस्माद्' यजमानात् 'इदं सर्वम् अर्वाक्' भवति; 'तस्मात्' प्रपर्वतस्येति पाठः प्रशस्त इत्यर्थः॥ ५॥

विधत्ते— "अथैनमिति ‖। शार्दूलचर्ममध्ये एव यजमानं

---

* वा० सं० १०. १६. १।

† द्रष्टव्योपरिष्टात् का० १०. अ० ५. ब्रा० ४. कं० १४।

‡ का० श्रौ० सू० २३. ६.। § पा० सू० ३. २. ७४।

‖ का० श्रौ० सू० १५. ६. ८।

त्रीन् विष्णुक्रमान् क्रमयेदध्वर्युः। तत्र मन्त्रत्रयं विधत्ते— "विष्णोरिति *। एकैकस्य क्रमणस्यैकैको मन्त्र इत्यर्थः। 'विष्णोः' यत्तस्य यच्च 'विक्रमणं', यच्च 'विक्रान्तं', यच्च 'क्रान्तम्', तत् सर्वं त्व मसीति योजनीया। क्रमणत्रयं लोकत्रयात्मना प्रशंसति। "इमे वै लोका इति ॥ ६ ॥

अथ स्वमितवैश्यपात्रत्रयशेषाणां पालाशपात्रे व्यासेचनं विधत्ते— "अथ ब्राह्मणस्येति। "तद् ब्राह्मण मिति। 'तत्' तेन व्यवनयनेन 'राजानम्' 'अनु' पश्चाद् 'ब्राह्मणं' 'यशः' यशस्विनं क्षतवान् भवति। लोके हि राजा कीर्त्तिमान्, ब्राह्मणोऽपि तदनन्तरं कीर्त्तिमानित्युच्यते ॥ ७ ॥

विधत्ते— "तद् योऽस्येति †। 'एतत्' संस्रवैः प्रासिक्तं ब्राह्मणस्य पालाशपात्रं राज्ञः प्रियतमाय पुत्राय प्रयच्छेत्। प्रदाने ब्राह्मणोऽयं मन्त्र माह— "इदं म इति। अत एव कात्यायनो मन्त्रं पपाठ— "पुत्राय प्रयच्छति प्रियतमायेदं मे कर्मेदं वीर्यं पुत्रोऽनुसन्तनोतु"-इति ‡। 'अयं' मे पुत्रः, 'मे' मम 'वीर्यं' वीर्यरूपं कर्म 'अनुसन्तनवत्' अनुसन्तनोतु, विस्तारयत्विति ॥ ८ ॥

विधत्ते— "अथ प्रतीति। गार्हपत्यं 'प्रतिपरेत्य' प्रत्यङ्-मुखो गत्वा 'अन्वारब्धे'। प्रकृतत्वात् पुत्र इति गम्यते। अत्र सूत्रम् §— "शालाद्वार्ये जुहोति पुत्रोऽन्वारब्धे प्रजापत इति"-

---

* वा० सं० १०. १६. २, ३, ४।

† का० श्रौ० सू० १५. ६. १० क।

‡ का० श्रौ० सू० १५. ६. १० ख।

§ का० श्रौ० सू० १५. ६. ११।

इति। मन्त्रस्यार्थः— हे 'प्रजापते' ! 'त्वदन्यः' कोऽपि पुरुषः उत्पन्नानि तानि 'एतानि' विश्वानि 'न परिबभूव' परिभवितुं व्याप्तुं समर्थो ऽभूत्। परिपूर्वो भवतिर्व्याप्त्यर्थे वर्त्तते। अतस्तेन वयं 'यत्कामा जुहुमः', 'तत्' फल मस्माकम् 'अस्तु'। वयं धनानां पतयः स्यामेति *। अत्र तृतीयपादान्ते 'अयम् अमुष्य पिता', 'असौ अस्य पिता' 'इति' मन्त्रभाग आम्नातः। 'अयं' पुत्रः अभिमन्युः, 'अमुष्य' अर्जुनस्य 'पिता' 'इति' पूर्वं पितृशब्दं पुत्रे कृत्वा ब्रूयात्, पश्चात् 'असौ पिता' अर्जुनः 'अस्य' पुत्रस्याभिमन्योः 'पिता'-इति 'यथायथं' ब्रूयादित्यर्थः। अत एव कात्यायनः— "प्रजापत इति पुत्रयजमानयोर्नाम गृह्णाति पितृशब्दं पुत्रे कृत्वा यथायथं पश्चात्"-इति। त मिमं पादत्रयपुरस्सरं पठति— "प्रजापत इति †। तत्राय ममुष्य पितेत्यस्यार्थ माह— "तद्यः पुत्र इति। पुत्रं पितरं पुत्रं कृत्वा पठेदित्यर्थः। तदेतेन पुत्रस्य पितृकरणेन च एनयोः पितापुत्रयोः वीर्ये 'व्यतिषजति' परस्परं संसृष्टे कृतवान् भवति। असावस्य पितेत्यस्यार्थ माह— "तद्यः पितेति। अत्र पितुरेव पितृत्वम्, पुत्रस्यैव पुत्रत्वम्। अनेनैतयोर्वीर्ये पूर्वं व्यतिषज्य पश्चाद् यथा पुत्रस्य वीर्यं पुत्र एव, पितुर्वीर्यं पितर्येव कृतवान् भवतीत्यर्थः। अन्तिमपादस्याशीःपरत्वं दर्शयति— "आशीरेवैषेति ॥ ८ ॥

---

* वा० सं० १०. २०. १।

† संहितापाठस्त्वेवम्— "प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो अस्त्वय ममुष्य पितासावस्य पिता वयꣳ स्याम पतयो रयीणाꣳ स्वाहा"-इति।

पालाशपात्रशेषस्य आग्नीध्रीये ऋचा हवनं विधत्ते— "अथ य एष संस्रव इति *। अतिरिक्तस्य शेषस्य आग्नीध्रीये हवनस्योपपत्तिं दर्शयति— "अतिरिक्त इति। तदेवोपपादयति— "गार्हपत्ये हवींऽषीति। गार्हपत्ये सर्वेषां हविषां श्रपणम्, आहवनीये तेषां होमः; अतः श्रपणहवनयोरनुपयुक्तत्वादाग्नीध्रीयोऽतिरिक्त इत्यर्थः। प्रदेशविशेषं विधत्ते— "उत्तरार्द्ध इति। अस्य रुद्रसम्बन्धं दर्शयति— "एष हीति। 'एतस्य देवस्य' रुद्रस्येत्यर्थः। होम मन्त्रं विधत्ते— "स जुहोतीति †। हे 'रुद्र!' रुत् सांसारिकं दुःखं द्रावयतीति, तस्य सम्बुद्धिः। 'ते' तव 'परम्' उत्कृष्टं 'यत् नाम' "नमः शिवाय"–"पशुपतये"–इत्यादि श्रुतिप्रसिद्धम् ‡, 'क्रिवि' "क्रिवि हिंसाकरणयोः" §, विरोधिनो हिंसक मसि, 'तस्मिन्' नाम्नि 'हुत मसि' अभिषेकशेषभूतमुख्यपात्रस्थजलः त्वं हुतं भवेति जलं सम्बुध्यार्थोऽयः। "अमेष्ट मसीति। 'अमा'-शब्दोऽत्र गृहवचनः। मदीये गृहे त्वम् इष्टं भव। 'स्वाहा' सुहुत मस्त्विति ‖ ॥ १० ॥ ४ [ ४. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थाध्याये द्वितीयं ब्राह्मणम् ॥

---

* का॰ श्रौ॰ सू॰ १५. ५. १२।

† वा॰ सं॰ १०. २०. २।

‡ वा॰ सं॰ १६. ४१, ४०; तै॰ सं॰ ४. ५. ८. ११, ३।

§ स्वा॰ प॰ ५६८ धा॰ (क्रिवि)।

‖ तै॰ सं॰ १. ८. १४. १—१२, तै॰ ब्रा॰ १. ७. ८. द्रष्टव्यम्।

( अथ तृतीयं ब्राह्मणम् . )

तद् योऽस्य स्वो भवति। तस्य शृतं वा पराःशृता वा गा उत्तरेणाहवनीयꣳ स्थापयति तद्यदेवं करोति ॥ १ ॥

वरुणाद्ध वा ऽअभिषिषिचानात्। इन्द्रियं वीर्य मपचक्राम शश्वद्ध एषोऽपाꣳ रसः सम्भृतो भवति* येनैन मेतदभिषिञ्चति सो ऽस्येन्द्रियं वीर्यं निर्जघान तत् पशुष्वन्वविन्दत्तस्मात् पशवो यशो यदेष्वन्वविन्दत्तत् पशुष्वनुविद्येन्द्रियं वीर्यं पुनरात्मन्नधत्त तथो ऽएवैष एतस्माद्धैवास्मादिन्द्रियं वीर्य मपक्रामति वरुणसवो वा ऽएष यद्राजसूय मिति वरुणो ऽकरोदिति त्वेवैष एतत् करोति † ॥ २ ॥

अथ रथ मुपावहरति। यद्वै राजन्यात् पराग् भवति रथेन वै तदनुयुङ्क्ते तस्माद्रथ मुपावहरति ॥ ३ ॥

---

* 'भवति'—इति ग, घ। † 'करोति'—इति क।

स उपावहरति । इन्द्रस्य वज्रो ऽसीति वज्रो वै रथ इन्द्रो वै यजमानो द्वयेन वा ऽएष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमानस्तस्मादाहेन्द्रस्य वज्रो ऽसीति ॥ ४ ॥

त मन्तर्वेद्यभ्यववर्त्य युनक्ति । मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति * बाहू वै मित्रावरुणौ बाहुभ्यां वै राजन्यो मैत्रावरुणस्तस्मादाह मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति † ॥ ५ ॥

तं चतुर्युजं युनक्ति । स जघनेन सदो ऽग्रेण शालां येनैव दक्षिणा यन्ति तेन प्रतिपद्यते तं जघनेन चात्वाल मग्रेणाग्नीध्र मुद्यच्छति ॥ ६ ॥

त मातिष्ठति ‡ । अव्यथायै त्वा स्वधायै त्वेत्यमार्त्यै त्वेत्येवैतदाह यदाहाव्यथायै त्वेति स्वधायै त्वेति रसाय त्वेत्येवैतदाहारिष्टो ऽर्जुन इत्यर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम द्वयेन वा

---

*, † 'युनय्मीति'—इति क, ख ।

‡ 'मातिष्ठति'—इति क ।

ऽएष इन्द्रो भवति यच्च क्षत्रियो यदु च यजमान-
स्तस्मादाहारिष्टो ऽर्जुन इति * ॥ ७ ॥

अथ दक्षिणायुग्य मुपार्षति । मरुतां प्रस-
वेन जयेति व्विशो वै मरुतो व्विशा वै तत्
क्षत्रियो जयति यज्जिगीषति तस्मादाह मरुतां
प्रसवेन जयेति † ॥ ८ ॥

अथ मध्ये गवा मुद्यच्छति । आपाम मनसेति
मनसा वा ऽइदꣳ सर्व्वं माप्तं तन्मनसैवैतत् सर्व्वं
माप्नोति तस्मादाहापाम मनसेति ‡ ॥ ९ ॥

अथ धनुरार्त्न्या गा मुपस्पृशति । स मिन्द्रिये-
णेतीन्द्रियं वै व्वीर्यं गाव इन्द्रिय मेवैतद्वीर्य-
मात्मन् धत्ते ऽथाह जिनामीमाः कुर्व्वे ऽइमा
इति § ॥ १० ॥

तद्यत् स्वस्य गोषूद्यच्छति । यद्वै पुरुषात् पराग्
भवति यशो वा किञ्चिद्वा स्वꣳ हैवास्य तत्

---

* 'इति'—इति क। 'इति'—इति ग, घ।

† 'जयेति'—इति क। 'जयेति—इति ग, घ।

‡ 'मनसेति—इति क। 'मनसेति'—इति ग, घ।

§ 'इति'—इति क। 'इति'—इति ग, घ।

प्रतमा मिवाभ्यपक्रामति तत् स्वादेवैतदिन्द्रियं व्वीर्यं पुनरात्मन्धत्ते तस्मात् स्वस्य गोषू-द्यच्छति ॥ ११ ॥

तस्मै तावन्मात्रीर्व्वा भूयसीर्व्वा प्रतिददाति। न वा ऽएष क्रूरकर्मणे भवति यद्यजमानः क्रूरमिव वा ऽएतत् करोति यदाह जिनामीमाः कुर्व्वं ऽइमा इति तथो हास्यैतदक्रूरं कृतं भवति तस्मात्तावन्मात्रीर्व्वा भूयसीर्वा प्रति-ददाति * ॥ १२ ॥

अथ दक्षिणानायच्छति। सो ऽग्रेण यूपं दक्षिणेन व्वेदिं येनैव दक्षिणा यन्ति तेन प्रतिपद्यते तं जघनेन सदो ऽग्रेण शाला मुद्यच्छति ॥ १३ ॥

मा न † इन्द्र ते व्वयं तुराषाट्। अयुक्तासो ऽअब्रह्मता व्विदसाम। तिष्ठा रथ मधि यं व्वज्रहस्ता रश्मीन् देव यमसे स्वश्वानित्युद्यच्छत्येवैतयाभीशवो वै रश्मयस्तस्मादाह रश्मीन्

---

* 'ददाति'—इति क।

† 'स' इति क, ख।

देव यमसि स्वश्वानित्यथ रथविमोचनीयानि जुहोति प्रीतो रथो विमुच्याता ऽइति तस्माद्रथविमोचनीयानि जुहोति ॥ १४ ॥

स जुहोति । अग्नये गृहपतये स्वाहेति स यदेवाग्नेयꣳ रथस्य तदेवैतेन प्रीणाति व्वहा वा ऽआग्नेया रथस्य व्वहामेवैतेन प्रीणाति श्रीर्वै गार्हपतं यावतो यावत ईष्टे तच्छ्रिय मेवास्यैतद्गार्हपतꣳ राज्य मभिविमुच्यते * ॥ १५ ॥

सोमाय व्वनस्पतये स्वाहेति द्वयानि वै व्वानस्पत्यानि चक्राणि रथ्यानि चानसानि च तेभ्यो न्वेवैतदुभयेभ्यो ऽरिष्टिं कुरुते सोमो वै वनस्पतिः स यदेव व्वानस्पत्यꣳ रथस्य तदेवैतेन प्रीणाति दारूणि वै व्वानस्पत्यानि रथस्य दारूण्येवैतेन प्रीणाति क्षत्रं वै सोमः क्षत्र मेवास्यै तद्राज्य मभिविमुच्यते † ॥ १६ ॥

मरुता मोजसि स्वाहेति । स यदेव मारुतꣳ रथस्य तदेवैतेन प्रीणाति चत्वारोऽश्वा रथः पञ्चमो द्वौ सव्यष्टृसारथी ते सप्त सप्त वै

† '०विमुच्यते'—इति ग, घ ।

मारुतो गणः सर्व्वमेवैतेन रथं प्रीणाति विशो वै मरुतो विशमेवास्यैतद्राज्यमभिविमुच्यते† ॥ १७ ॥

इन्द्रस्येन्द्रियाय स्वाहेति स यदेवैन्द्रꣳ रथस्य तदेवैतेन प्रीणाति सव्यष्ठा वा ऽऐन्द्रो रथस्य सव्यष्ठारमेवैतेन प्रीणातीन्द्रियं वै वीर्यमिन्द्र इन्द्रियमेवास्यैतद्वीर्यꣳ राज्यमभिविमुच्यते† ॥ १८ ॥

अथ वाराह्या ऽउपानहा ऽउपमुञ्चते । अग्नौ ह वै देवा घृतकुम्भं प्रवेशयाञ्चक्रुस्ततो वराहः सम्बभूव तस्माद्वराहो मेदुरो घृताद्धि सम्भूतस्तस्माद्वराहे गावः संजानते स्वमेवैतद्रसमभिसंजानते तत् पशूनामेवैतद्रसे प्रतितिष्ठति तस्माद्वाराह्या ऽउपानहा ऽउपमुञ्चते‡ ॥ १९ ॥

अथेमां प्रत्यवेक्षमाणो जपति । पृथिवि मातर्मा मा हिꣳसीर्मो ऽअहं त्वामिति वरुणाद्ध वा ऽअभिषिषिचानात् पृथिवी बिभयाञ्चकार महद्वा ऽअयमभूद्यो ऽभ्यषेचि यद्वै मायं नावदृणीयादिति वरुण उ ह पृथिव्यै बिभयाञ्चकार

---

†'विमुच्यते'—इति ग, घ। ‡ 'ऽउपमुञ्चते'—इति ग, घ।

यद्वै मेयं नावधून्वीतेति तदनयैवैतन् मित्रधेय मकुरुत न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरम् ॥ २० ॥

व्वरुणसवो वा ऽएष यद्राजसूयम् । पृथिव्यु हैतस्माद्बिभेति महद्वा ऽअय मभूद्यो ऽभ्यषिचि यद्वै मायं नावदृणीयादित्येष उ हास्यै बिभेति यद्वै मेयं नावधून्वीतेति तदनयैवैतन्मित्रधेयं कुरुते न हि माता पुत्रꣳ हिनस्ति न पुत्रो मातरं तस्मा-देवं जपति ॥ २१ ॥

सो ऽवतिष्ठति । हꣳसः शुचिषद्वसुरन्तरिक्ष-सद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृत-सद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहदित्येता मतिच्छन्दसं जपन्नेषा वै सर्व्वाणि छन्दाꣳसि यदतिच्छन्दास्तथैनं पाप्मा नान्वव-तिष्ठति ॥ २२ ॥

तं न सङ्गृहीतान्ववतिष्ठेत । नेत्त्वं लोक-मन्ववतिष्ठाद्यꣳ सुषुवाणोऽन्ववास्थादिति तꣳ सरथ मेव रथवाहन आदधति ततो ऽवाङुपप्रवते तथा

तं लोकं नान्ववतिष्ठति यᳫं सुषुवाणो ऽन्ववा-
स्यात् ॥ २३ ॥

उत्तरेणाहवनीयं पूर्वाग्निरुद्धृतो भवति। स
रथवाहनस्य दक्षिणा मन्वनुष्यन्दᳫं शतमानौ प्रवृत्ता-
वाबध्नाति * ॥ २४ ॥

औदुम्बरीᳫं शाखा मुपगूहति। तयोरन्यतर
मुपस्पृशतीयदस्यायुरस्यायुर्मयि धेहि युङ्ङसि
व्वर्चोऽसि व्वर्चो मयि धेहीति तदायुर्व्वर्च
आत्मन् धत्ते ॥ २५ ॥

अथौदुम्बरीᳫं शाखा मुपस्पृशति। ऊर्गस्यूर्जं
मयि धेहीति तदूर्जं मात्मन् धत्ते तस्यैतस्य कर्मण
एतावेव शतमानौ प्रवृत्तौ दक्षिणा तौ ब्रह्मणे
ददाति ब्रह्मा हि यज्ञं दक्षिणतो ऽभिगोपायति
तस्मात्तौ ब्रह्मणे ददाति † ॥ २६ ॥

अग्रेण मैत्रावरुणस्य धिष्ण्यम्। मैत्रावरुणी
पयस्या निहिता भवति ता मस्य बाहू ऽअभ्युपा-

* '०वाबध्नाति' इति क।

† 'ददाति'—इति क।

Nyāyavārtika (Text) Fasc. 1-6 @ /10/ ... ... Rs. 3 12
*Nirukta, (Text) Vol. IV, Fasc. 1-8 @ /10/ each ... ... 5 0
*Nītisāra, Fasc. 2-5, @ /10/ each ... ... ... 2 8
Nityacārapaddhati Fasc. 1-7 (Text) @ /10/ each ... ... 4 6
Nityacraāpradiph, Fasc. 1-8 @ /10/- ... ... ... 5 0
Nyāyabinduṭikā, Fasc 1 ... ... ... ... 0 10
Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1-6, Vol. II, Fasc. 1-3 @ /10/ each ... ... ... ... 5 10
Padumawati, Face. 1-4 @ 2/ ... ... ... ... 8 0
Pariciṣta Parvan, Fasc. 1-5 @ /10/ each ... ... ... 3 2
Prāk ta - Paingalam, Fasc. 1-7 @ /10/ each ... ... 4 6
Prithivirāj Rāsa, Part II, Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto (English) Part II Fasc 1, @ 1/- ... ... 1 0
Prāk ta Lakṣaṇam, Fasc. 1 @ 1/8/- ... ... ... 1 8
Parācara Smriti, Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... 12 8
Parācara, Institutes of (English) @ 1/ ... ... ... 1 0
Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... 3 12
*Sāma Vēda Saṁhitā, Vols. I, Fasc. 5-10; II, 1-6; III, 1-7; IV, 1-6; V, 1-8; @ /10/ each ... ... ... 20 10
Sānkhya Sūtra V ṭti, Fasc. 1-4 @ /10/ ... ... 2 8
Ditto (English) Fasc. 1-3 @ 1/- each ... ... 3 0
*Sankara Vejay, Fasc. 2-3 @ /10/ ... ... ... 1 4
Shaddarsana-Samuccaya, Fasc. 1 @ /10/ ... ... ... 0 10
Sraddha Kriya Kaumudi, Fasc. 1-6 ... ... ... 3 12
Sucruta Saṁhitā, (Eng.) Fasc. 1 @ 1/- ... ... ... 1 0
Suddhi Kaumudi, Fasc. 1-4 ... ... ... ... 2 8
*Taittereya Saṁhitā, Fasc. 22-45 @ /10/ each ... ... 15 0
* Ditto Brāhman, Fasc. 3-25 @ /10/- ... ... 14 6
Ditto Prātisākhya, Fasc. 1-3 @ /10/ ... ... 1 14
Tāṇdya Brāhmaṇ, (Text) Fasc. 1-19 @ /10/ each ... ... 11 14
Tantra Vārtika (English) Fasc. 1-6 @ 1/4/ ... ... ... 7 8
Tattva Cintāmaṇi, Vol. I, Fasc. 1-9: Vol. II, Fasc. 2-10; Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V. Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... ... ... 23 12
Tattvārthādhigama Sutrom, Fasc. 1-3 ... ... ... 1 14
Trīkāṇda-Maṇdanom, Fasc. 1-3 @ /10/ ... ... 1 14
Tul'si Satsai Fasc. 1-5 @ /10/ ... ... ... 3 2
Upamita-bhava-prapañcha-kathā Fasc. 1-11 @ /10/ each ... 6 14
Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/ ... ... 6 0
Vallāla Carita, Fasc. 1 ... ... ... 0 10
Varsa K yā Kaumudi, Fasc 1-6 @ /10/ ... ... ... 3 12
*Vāyu Purāṇa, Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-7, @ /10/ each 7 8
Vidhāno Pārigāt, Fasc. 1-8 ... ... ... ... 5 0
Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... ... 4 6
V hat Sayaṁbhū Purāṇa, Fasc. 1-6 ... ... ... 3 12
*Yoga Aphorisms of Patanjali, Fasc. 2-5 @ /10/ each ... 2 8

*Tibetan Series.*

Pag-Sam Ṭhi Śiñ, Fasc. 1-4 @ 1/ each ... ... ... 4 0
Sher-Phyin, Vol. I, Fasc. 2-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/ each ... ... ... ... ... ... 14 0
Rtogs *brjod dpag hkhari* Śiñ (*Tib.* & *Sans.* Abadān Kalpalatā,) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... 11 0

*Arabic and Persian Series.*

Ālamgīrnamah, with Index, (Text) Fasc. 1-13 @ /10/ each ... 8 2
Āl-Muquaddasi (English) Vol. I, Fasc. 1-3 @ 1/ ... ... 3 0
Āin-i-Akbarī, Fasc. 1-22 @ 1/8/ each ... ... ... 33 0
Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/ each ... ... ... ... 34 0
Akbarnāmah, with Index. (Text) Fasc. 1-37 @ 1/8/ ... ... 55 8
Ditto (English) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-3 @ 1/4/ ... 13 12
Arabic Bibliography, by Dr. A. Sprenger ... ... ... 0 10
*Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /10/ ... ... 11 14
Catalogue of Arabic Books and Manuscripts 1-2 ... ... 2 0
Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... ... 3 0
Conquest of Syria, Fasc. 1-9 @ /10/ ... ... ... 5 10
Dictionary of Arabic Technical Terms & Appendix Fasc 1-21 @ 1/8/- ... 31 8

The other Fasciculi of these works are out of stock, and complete copies cannot be supplied.

Farhang-i-Rashīdī, (Text) Fasc. 1-14 @ 1/8/ each ... Rs 21 0
Fihrist-i-Ṭūsī, or Ṭūsy's list of Shy'ah Books Fasc. 1-4 @ 1/ each ... 4 0
Futūh-ush-Shām of Wāqidī, Fasc. 1-9 @ /10/ each ... ... 5 10
Ditto of Āzādī, (Text) Fasc. 1-4 @ /10/ each ... ... 2 8
Haft Āsmān, History of the Persian Masnawi, Fasc. 1. @ /12/ ... 0 12
History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... ... 7 8
Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /10/ each ... ... 1 14
Iṣābah, with Supplement, (Text) 51 Fasc. @ 1/ each ... ... 51 0
Maṣīr-ul-Umarā, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. I.I. Fasc. 1-10; Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12; Index to Vol. III, Fasc. 11-12; @ 1/- each ... ... 35 `
Maghāzi of Wāqidī, (Text) Fasc. 1-5 @ /10/ each ... ... 3 2
Muntakhabu-t-Tawārikh, Fasc. 1-15 @ /10/ each ... ... 9 6
Muntakhabu-t-Tawārikh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc. 1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... ... 15 0
Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... ... 11 14
Ma'āṣir-i-'Ālamgīrī, Fasc. 1-6 @ /10/ each ... ... 3 12
Nukhbatu-l-Fikr, Fasc. 1 ... ... ... ... 0 10
Niẓāmī's -Khiradnāmah-i-Iskandari, Fasc. 1-2 @ /12/ each ... 1 8
Riyāẓu-s-Salāṭīn Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto Ditto (English) Fasc. 1-5 @ 1/ ... ... 5 0
Tabaqāt-i-Nāṣirī, Fasc. 1-5 @ /10/ each ... ... 3 2
Ditto (English) Fasc. 1-14 @ 1/ each ... ... 14 0
Ditto Index ... ... ... ... 1 0
Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni Fasc 1-7 @ /10/ each ... 4 6
Tārīkh-i-Fīrūshāhi, of Shams-i-Siraj Alif, Fasc 1-6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... ... 3 0
Tuzuk-i-Jahāngīrī, (English) Fasc. 1 ... ... ... ... 1 0
Wīs o Rāmīn, (Text) Fasc. 1-5 @ /10/ each ... ... ... 3 2
Ẕafarnāmah, Vol. I, Fasc. 1-9 Vol. II, Fasc. 1-8 @ /10/ each ... 10 10

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches, Vols. XIX and XX @ 10/ each ... ... 20 0
2. Proceedings of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. Journal of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (7), 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members.
*N.B.—The figures enclosed in brackets give the number of Nos. in each Volume.*
4. Journal and Proceedings, N. S., 1905, to date, @ 1-8 per No. to members ana Rs. 2/ per No. to Non-members.
5. Memoirs 1905 to date. Price varies from No. to No. Discount of 25% to Members.
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J. A. S. B.*, 1878) ... ... ... 4 0
Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J. A. S. B.*, 1875) ... ... ... ... ... 4 0
7. Catalogue of the Library of the Asiatic Society, Bengal ... ... 3 8
8. Mahābhārata, Vols. III and IV, @ 20/ each ... ... ... 40 0
9. Moore and Hewitson's Descriptions of New Indian Lepidopters, Parts I—III with 8 colored plates, 4to. @ 6/ each ... ... 18 0
10. Tibetan Dictionary, by Csoma de Körös ... ... ... 10 0
11. Ditto Grammar ,, ,, ... ... ... 8 0
12. Kacmīracabdāmṛta, parts I and II @ 1/8/ ... ... ... 3 0
13. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... ... 1 0
14. Memoir on maps illustrating the Ancient Geography of Kacmīr, by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... ... ... 4 0
15. Persian Translation of Hāji Bābā of Ispāhān, by Hāji Shaikh Ahmad-i-Kirmāsi and edited with notes by Major D. C. Phillott. ... ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-33 @ 1/ each ... ... 33 0
Nepalese Buddhist Sanskrit Literature, by *Dr.* R. L. Mitra ... 5 0

*N.B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasurer Asiatic Society," only. 23-7-07

Books are supplied by V.-P.-P.

BIBLIOTHECA INDICA:
A
Collection of Oriental Works
PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 1175.

# ॥ शतपथब्राह्मणम् ॥

॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

# THE ÇATAPATHA BRĀHMAṆA
OF THE WHITE YAJURVEDA,
WITH THE
COMMENTARY OF SĀYAṆA ĀÇĀRYA




EDITED BY
ĀÇĀRYA SATYAVRATA SĀMAS'RAMI.

VOL. V, FASCICULUS IV

CALCUTTA:
PRINTED BY HITAVRATA CHATTERJI, SATYA PRESS.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET,
1907.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal

No, 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM THE SOCIETY'S AGENTS
MR. BERNARD QUARITCH, 15, PICCADILLY, LONDON. W.,
AND MR. OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY.

***Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.***

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | | |
|---|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2,4 @ /10/ each ... | Rs. | 1 | 4 |
| Advaitachintā Kaustubhe, Fasc. 1-3 @ /10/ each ... ... | | 1 | 14 |
| *Agni Purāṇa, Fasc 3-14 @ /10/ each ... ... ... | | 7 | 8 |
| Aitarēya Brāhmaṇa, Vol. I, Fasc. 1-5 ; Vol. II, Fasc. 1-5 ; Vol. III, Fasc 1-5, Vol, IV, Fasc. 1-8 @ /10/ ... ... ... | | 14 | 6 |
| Aitareyālochanum, (the preface of the Ditto) by Ācārya S. V. Sāmasrami ... | | 2 | 0 |
| *Anu Bhāshya, Fasc 2-5 @ /10/ each ... ... ... | | 2 | 8 |
| Aphorisms of Sāṇdilya, (English) Fasc. 1 ... ... ... | | 1 | 0 |
| Aṣṭasāhasrikā Prajñāpāramitā, Fasc. 1-6 @ /10/ each ... ... | | 3 | 12 |
| Acvavaidyaka, Fasc. 1-5 @ /10/ each ... ... | | 3 | 2 |
| *Ātharvana Upanishad, Fasc. 2-5 @ /10/ each ... ... | | 2 | 8 |
| Avadāna Kalpalatā, (*Sans. and Tibetan*) Vol. I, Fasc. 1-6 ; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... ... | | 11 | 0 |
| A Lower Ladakhi version of Kesarsaga, Fasc. 1-3 @ 1/- each ... | | 3 | 0 |
| Bālam Bhaṭṭī, Vol. I, Fasc. 1-2 @ /10/ ... ... ... | | 1 | 4 |
| Baudhāyana Srauta Sutra, Fasc. 1-3 @ /10/ each ... ... | | 1 | 14 |
| *Bhā natī, Fasc 4-8 @ /10/- ... ... ... ... | | 3 | 2 |
| Bhāṭṭa Dīpikā Vol. I, Fasc. 1-5 @ /10/- ... ... ... | | 3 | 2 |
| Brahma Sutra, Fasc. 1, @ /10/- ... ... ... ... | | 0 | 10 |
| Bṛhaddēvatā, Fasc. 1-4 @ /10/ each ... ... ... | | 2 | 8 |
| Bṛhaddharma Purāṇa, Fasc. 1-6 @ /10/ each ... ... ... | | 3 | 12 |
| Bodhicāryāvatāra of Çāntidevi, Fasc. 1-4 ... ... ... | | 2 | 8 |
| Çatadusani, Fasc. 1-2 ... ... ... ... | | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc. 1-4 @ 2/ each ... | | 8 | 0 |
| Çatapatha Brāhmaṇa Vols. I Fasc 1-7, II Fasc 1-5, III Fasc 1-7, V Fasc 1-4 | | 14 | 6 |
| Çatasāhasrikā-prajñāpāramitā, Part I, Fasc. 1-12 @ /10/ each ... | | 7 | 8 |
| *Caturvarga Chintāmaṇi, (Text) Vols. II, 1-25 ; III. Part I, Fasc. 1-18, Part II, Fasc. 1-10 @ /10/ each ; Vol. IV, Fasc. 1-5 ... ... | | 36 | 4 |
| Çlokavārtika, (English) Fasc. 1-5 @ 1/4/- ... ... ... | | 6 | 4 |
| *Çrauta Sūtra of Āpastamba, Fasc. 6-17 @ /10/ each ... ... | | 7 | 8 |
| Ditto Āçvālāyan, Fasc 1-11 @ /10/ each ... ... | | 6 | 14 |
| Ditto Çānkhāyan, (Text) Vol. I, Fasc. 1-7 ; Vol. II, Fasc. 1-4 ; Vol. III, Fasc. 1-4, Vol IV Fasc. 1 @/10/ each ... | | 10 | 0 |
| Ditto Lātyāyan Fasc. 1-9 @ /10/ each ... ... | | 5 | 10 |
| Çrī Bhāshyam, (Text) Fasc. 1-3 @ /10/ each ... ... ... | | 1 | 14 |
| Dān Kriyā Kaumundi, Fasc. 1-2 ... ... ... ... | | 1 | 4 |
| Gadādhara Paddhati Kālasāra, Vol I, Fasc. 1-7... ... ... | | 4 | 6 |
| Ditto Ācārasāra, Vol II, Fasc. 1-2 ... ... | | 1 | 4 |
| Gobh liya G hyo Sutrum, Fasc. 1-12 @ /10/ ... ... ... | | 7 | 8 |
| Kāla Viveka, Fasc. 1-7 ... ... ... ... | | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each ... ... ... ... | | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc 1-14 @ /1/4/- each ... ... | | 17 | 8 |
| Kūrma Purāṇa, Fasc. 1-9 @ /10/ each ... ... ... | | 5 | 10 |
| Lalita-Vistāra, (English) Fasc. 1-3 @ 1/- each ... ... | | 3 | 0 |
| Ditto Fasc. 3-6 @ /10/ each ... ... | | 2 | 8 |
| Madana Pārijāta, Fasc. 1-11 @ /10/ each ... ... ... | | 6 | 14 |
| Mahā-bhāṣya-pradīpōdyōta, Vol. I Fasc. 1-9 & Vol. II, Fasc. 1-12, Vol. III, Fasc. 1-6 @ /10/ each ... ... ... | | 16 | 14 |
| Manuṭīkā Sangraha, (Text) Fasc 1-3 @ /10/ each ... ... | | 1 | 14 |
| Mārkaṇdeya Purāṇa, (English) Fasc. 1-9 @ 1/- each ... ... | | 9 | 0 |
| * Ditto (Text) Fasc. 4-7 @ /10/ ... ... ... | | 2 | 8 |
| *Mīmāṁsā Darcaṇa, (Text) Fasc. 3-19 @ /10/ each ... ... | | 10 | 10 |

**BIBLIOTHECA INDICA:**
A
**Collection Of Oriental Works**

PUBLISHED BY
THE ASIATIC SOCIETY OF BENGAL.
NEW SERIES, NOS. 1169, 1170, 1174 & 1175.

---

# THE ÇATAPATHA BRĀHMAṆA.

## OF THE WHITE YAJURVEDA

WITH THE
COMMENTARY OF SĀYAṆA ĀCĀRYA.

EDITED BY
ĀCĀRYA SATYAVRATA SĀMAS'RAMI.

*Lecturer of Sanskrit in the University of Calcutta.*
*Associate Member of the Asiatic Society of Bengal, Member of the Philological Committee, A, S, B; Examiner of the Veda & Philosophy &c., Editor, Author, Commentator, Annotator, Compiler, Translator, & Publisher of different Vedic Works &c. &c.*

VOL. V. KANDA V

CALCUTTA:

PRINTED BY HITAVRATA CHATTOPADHYAYA,
AT THE SATYA-PRESS, NO, 27, Ghose's Lane.
1907.

# ॥ शतपथब्राह्मणम् ॥

॥ शुक्लयजुर्वेदस्य माध्यन्दिनशाखीयम् ॥

## श्रीमत्सायणाचार्यकृत-'वेदार्थप्रकाश'-नामभाष्येण सहितम् ।



वङ्गदेशीयास्यायितिकसमितेरनुमत्या व्ययेन च,

सामश्रमीतियशोनामाचार्यसत्यव्रतशर्म्मणा

यथामति संशोध्य सटीक्य च सम्पादितम् ।

॥ ५ भा० । ५ का० ॥

( पञ्चमकाण्डात्मकः पञ्चमो भागः )



कलिकाता-राजन्वत्याम्,

१८६४-संवत्सरमायां सत्ययन्त्रेण यन्त्रतो मुद्रितम् ॥

## ॥ अथ सम्पादकोक्तिः ॥

अथ यद्यपि तृतीयकाण्डानन्तरं क्रमप्राप्तं चतुर्थकाण्डसम्पादन मेव युक्तम्, परं चतुर्थकाण्डीयसायणकृतभाष्यस्यैक मपि विशुद्धादर्शपुस्तक मद्य यावन्नास्मद्धस्तगत मित्यनन्यगत्या क्रम मुल्लङ्घ्यापि पञ्चम मेव काण्डं समपादि ।

तस्यैतत्पञ्चमकाण्डस्य पाठान्तरादिसम्पादनाय सङ्गृहीताना मादर्शपुस्तकाना मेवं नामधेयानि कल्पितानि—

क = १७९० सं०-लिखितं २८-पत्रात्मकं (का० सं० का०) पूर्णम्।

ख = १७४७ सं०-लि० १११-पत्रात्मकं (का० सं० का०) पूर्णम्।

ग = डा०-वेबर-सम्पादितम् (ई० १८४९-मुद्रितं) पूर्णम्।

घ = आजमेर-प्रकाशितम् (सं० १९५९ मुद्रितम्) पूर्णम्।

ङ = ४५-पृष्ठात्मकम् आख्यायितिकसमितिपुस्तकं पूर्णम्।

च = १२१-पत्रात्मकम् आख्यायितिकीय मपरम् पूर्णम्।

छ = तत्रत्य मेव ग०-इ०-पुस्तकम् ६७-पत्रात्मकं पूर्णम्।

ज = डा०-वेबरेण यथाबुद्ध्याचिन्त्य सम्पादितम् (ई० १८४९-मु०)।

एष्वष्टस्वादर्शपुस्तकेषु प्रथमचतुष्कं मूलस्यापरचतुष्कं भाष्यस्येति ॥

एतदेव काण्डं सव इत्यभिधीयते। सवशब्दार्थस्त्विह मूले एवैवं सूचितः— "सोऽस्मै सव मनुमन्यते तेनानुमतः सूयते"-इति ३ प्र० २ ब्रा० ३१ क०। "'सः' आवेदितो ज्ञापितः प्रजापतिः 'अस्मै' सुन्वते 'सवम्' अभिषेकम् अनुमन्यते, 'तेन' प्रजापतिना 'अनुमतः' अनुज्ञातः 'सूयते' अभिषिच्यते"-इति

तत्र सा० भा० (२५३ पृ०)। "सूयते ईश्वरत्वेनाभिषिच्यते एभिरिति सवाः एकाहविशेषाः"-इति तै० ब्रा० २. ७. १. १ भाष्ये च सायणः। "वरुणसवो राजसूयम्, अग्निसवश्चित्यः"-इत्यस्य (तै० सं ५. ६. २. १.) व्याख्यानावसरे च स्पष्ट मिद मुक्तं तेन— "सूयते अभिषिच्यते यजमानः अत्र इत्यभिषेकयुक्तो यज्ञः सवः" -इति। तैत्तिरीयब्राह्मणे द्वितीयकाण्डस्य षष्ठे प्रपाठके सौत्रामणी मुक्ता, सप्तमस्य प्रथमेऽनुवाके बृहस्पतिसवः, द्वितीये वैश्यसवः, तृतीये ब्राह्मणसवः, चतुर्थे सोमसवः, पञ्चमे पथिसवः, षष्ठे गोसवः, सप्तमे त्वोदनसवो विहित इति दिक्॥

इह हि काण्डे प्रधानतो यागद्वयं विहितम्,— वाजपेयो राजसूयश्चेति। तत्र वाजपेयः प्रकृतिः, राजसूयस्तद्विकृतिः। सौत्रामणी-नाम-यागस्तु राजसूयाङ्गतया, प्राधान्येन पृथगनुष्ठेयतया चेति द्विविध आम्नात इति सङ्क्षेपः। सौत्रामण्याः स्वातन्त्र्य माह च मीमांसान्यायमालायाम् (४. ३. १८.)—

"अग्निं चित्त्वा यजेत् सौत्रामण्यङ्गेष्टिरुतेदृशी।
अङ्गिकाले स्वकाले वा स्यादाद्योऽन्याङ्गवन्मतः॥
निर्वृत्ते चयनादौ तु कर्मान्तरविधानतः।
स्वकाले चोदकप्राप्ते तदनुष्ठान माश्रितम्॥"-इति।

"अग्निं चित्त्वा सौत्रामण्या यजेत"-इत्येव (तै० सं० ५. ४. ३. १०.) तदधिकरणस्य विषयवाक्य मिति॥

कालीकोठा-राजन्वती। सं० १९६४। खृ० १९०७। } श्रीसत्यव्रतशर्म्मा। (आवसथः, सामश्रमी, आचार्य्यश्च.)

# शतपथब्राह्मण-पञ्चमकाण्डस्य

# सूचीपत्राणि ।

## ॥ अथ प्रपाठकसूची ॥



---

## ॥ अथाध्यायसूची ॥



---

# ॥ अथ ब्राह्मणसूची ॥

# ॥ अथ कण्डिकासूची ॥

— ०००० —

---

## ॥ अथ सम्यग्व्यालोच्यवचनसूची ॥

"अक्षान् निवपति०—० तेष्वक्षेष्वाह गां दीव्यध्व मिति" ४.१.२३.

"अक्षावापस्य च गृहेभ्यो गोविकर्त्तस्य च गवेधुकाः सम्भृत्य"२.५.१०.

"अग्निरेकाक्षरेण प्राण मुदजयत्" २. २. १७.

"अपामार्गैर्वै देवा दिक्षु नाष्ट्रा रक्षांस्यपामृजत" २. ३. १४.

"अप्स्वन्तरमृत मप्सु भेषजम्" १. ४. ६.

"अभीशवो वो रश्मयः" ३. ५. १४.

"अमृतं ह्यायुर्हिरण्यम्" १. ५. २८; ६. २०.

"अमृत मायुर्हिरण्यम्" ३. २. १५; ३. १२, १५.

"अयं वै प्राणो योऽयं पवते; यो वै प्राणः स आयुः, सोऽय मेक इवैव पवते; सोऽयं पुरुषेऽन्तःप्रविष्टो दशधा विहितः" २.३.१०.

"अर्जुनो ह वै नामेन्द्रो यदस्य गुह्यं नाम" ३. ५. ७.

"अर्धो ह वा एष आत्मनो यज्जाया" १. ६. १०.

"अवरं हि राज्यं परं साम्राज्यम्" १. १. १३.

"अस्मा आसन्दी माहरन्ति, सैषा खादिरी वितृण्णा भवति, येयं वध्रव्यूता भरतानाम्" ४. १. १.

"अस्मै पञ्चाक्षान् पाणावावपति ०—० कलिरेष हि सर्वानया- नभि भवति" ४. १. ६.

"आसन्द्या उपानहा उपमुञ्चते" ४. ५. ७.

"इद मग्रे सर्व मास,— यदृचो यद्यजूᳪषि यत्सामानि ०—० यजुर्भिरेवाग्रेऽथर्ग्भिरथ सामभिरेवᳪ ह्यस्मा एतत् प्रायच्छत् ०—० एतेन त्रयेण वेदेन पुनर्यज्ञ मारभते" ४. ७. ६—१०

"इन्द्रो वै यजमानः" ३. २. २; ५. ४. [ ३. ४. ६.

"इमे वै लोका विष्णोर्विक्रमणं विष्णोर्विक्रान्तं विष्णोः क्रान्तम्

"इयं वै पृथिव्यदितिः" १. ४. ४; ३. ३. ३७.

"इयं वै पृथिव्यदितिः, सेयं देवानां पत्नी" २. ५. ४.

"एकादश रत्नानि सम्पादयति" २. ५. १२. [ १.६.२४.

"एताः(अजाः) त्रिः संवत्सरस्य विजायमाना द्वौ त्रीनिति जनयन्ति"

"एष वै प्रजापतिर्य एष यज्ञ:" १. ४. १.

"एष वै सविता, य एष तपति" २. ५. ७.

"एष वोऽमी राजा सोमोऽस्माकं ब्राह्मणानां राजेति" २. ७. १२.

"एषां वा लोकाना मय मेव ध्रुव:" १. २. ४.

"एषा वै परमा वाग् या सप्तदशानां दुन्दुभीनाम्" १. ५. ६.

"ओषधीनां नेदिष्ठतमा यद् गोधूमा:, तेषां न त्वगस्ति" १.६.६.

"कृष्णं वै तम:" २. ६. २.

"केशान् न वपते, वीर्यं वा एतद्" ४. ५. १, ६.

"क्षौमं वा चण्डातक मन्तरं दीक्षितवसनात्" १. ६. ८.

"गन्धर्वा: सप्तविंशति:" १. ४. ८.

"चत्वारो वै वर्णा:, ब्राह्मणो राजन्यो वैश्य: शूद्र इति" ४. ६. ८.

"चत्वारोऽश्वा:, रथ: पञ्चम:, द्वौ सव्यष्ठसारथी, ते सप्त" ३.५.१७.

"तदिद मन्तरिक्षं सैषा 'रुजा' नाम" ३. २. २८.

"तद्धि वारुणं यत् कृष्णम्" २. ४. १७.

"तद् य: पुत्रस्तं पितरं करोति, य: पिता तं पुत्रम्" ३. ४. ८.

"तस्येश्वर: प्रजा पापीयसी भवितो: १. १. ८. [ ४. २. २२.

"ता: ब्रह्मणे ददाति ०—०, हिरण्मयीं स्रज मुद्गाते, रुक्मं होत्रे, हिरण्मयौ प्राकाशावध्वर्युभ्याम्, अश्वं प्रस्तोत्रे, वशां मैत्रावरुणाय, ऋषभं ब्राह्मणाच्छंसिने, वाससी नेष्टापोतृभ्या मन्यतरतो युक्तम्, यवाचित मच्छावाकाय, गा मग्नीधे"

"तिस्रो वा इमा: पृथिव्य इय मह्यैका, द्वे अस्या परे" १. ५. २१.

"देवसृष्टो वा एषेष्टिर्यत् त्रैधातवी ०—० एषा राजसूययाजिन उदवसानीयेष्टिर्भवति" ४. ७. ११.

"देवसृष्टो वा एषेष्टिर्यत् सौत्रामणी" ४. ६. १४.

"द्वे वै श्यामस्य रूपे शुक्लञ्चैव कृष्णञ्च १. ३. ८; २. ४. ९.

"धनुरधितनोति०—० बाहू विमार्ष्टि ०—० अथास्मै तिस्र इषूः प्रयच्छति" ३. २. २७—२९.

"धावन्त्याजि माघ्नन्ति दुन्दुभीनभि साम गायति" १. ५. १७.

"नमो मात्रे पृथिव्यै" १. ६. १९.

"न वा एष स्त्री न पुमान् यत् केशवः पुरुषः" १.२.१४; ३.३.२.

"न वै ब्रह्मा प्रचरति, न स्तुते, न शंसति, अथ स यशः; न वै हिरण्येन किञ्चन कुर्वन्ति, अथ तद् यशः; तस्मात् त्रीणि शतमानानि ब्रह्मणे ददाति" ४. ७. १६.

"न वै मित्रः कञ्चन हिनस्ति, न मित्रं कश्चन हिनस्ति" २.६.७.

"न वै वातात् किञ्चनाशीयोऽस्ति, न मनसः किञ्चनाशीयोऽस्ति, तस्मादाह वातो वा मनो वेति" १. ४. ८.

"न हि माता पुत्रं हिनस्ति, न पुत्रो मातरम्" १. ६. १८, १९;

"नैतदयो न हिरण्यं यल्लोहायसम्" ३. ३. २. [३.५.२०, २१.

"नैतदयो न हिरण्यं यत् सीसम्" १. २. १४.

"नैते क्रिमयो नाक्रियमो यद् दन्दशूकाः" ३. ३. २.

"नैष सोमो न सुरा यत् परिस्रुत्" १. २. १४.

"य्येव वर्त्तते केशान् न वपते, तस्यैषैव व्रतचर्या भवति यावज्जीवम्" ४. ५. ६.

"पराभवस्यैतन्मुखं यदतिमानः" १. १. १.

"पुरुषो वै प्रजापतेर्नेदिष्ठम्" १. ३. ८.

"पूर्वेद्युः परिस्रुतं सन्दधाति; अश्विभ्यां पच्यस्व, सरस्वत्यै इन्द्राय सुत्राम्णे पच्यस्वेति, ०—० कुवलसक्तून् कर्कन्धुसक्तून् बदरसक्तून् इत्यावपति, एतद्वै ततः समभवत्" ४.६.२०—२२.

"पूषा वै देवानां भागदुघः" २. ५. ८.

"पृथी ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे" ३. २. ४.

"प्रजननं प्रजापतिः" १. ३. ८.

"प्रजापतिर्वा अनिरुक्तः" ३. २. ११.

"प्रतीचीनफलो वा अपामार्गः" २. ३. २०.

"प्रष्टिवाहनो ऽश्वरथो दक्षिणा, तयोऽश्वा द्वौ सव्यष्टृसारथी" २. ३. ८.

"प्रहेयो वै पालाशलः, अध्वानं वै प्रहित एति" २. ५. ११.

"प्राशुकानां, आशूनां, श्यामाकं, नैवारं, क्षायनामां गावे-
धुकं, माश्वानां, यवमयम्" २. ७. २—८.

"बृहस्पतिर्वै देवानां पुरोहितः" २. ५. २.

"बृहस्पतिसवो वा एष यद् वाजपेयम्" १. ६. १८.

"ब्रह्म वै पलाशः" २. ३. १८.

"ब्रह्म हि ब्राह्मणः" १. ५. २, ४, ८, ११.

"ब्रह्म हि मित्रः, ब्रह्म हि यज्ञः, ब्रह्म हि बृहस्पतिः" २. ६. ४.

"माता धेनुः, मातेव वा इयं मनुष्यान् बिभर्त्ति" २. ५. ४.

"यं न्वेवैकयर्चा भिषज्येदेकेन यजुषैकेन साम्ना तं न्वेवागदं कुर्यात्,
किमु यं त्रयेण वेदेन" ४. ७. १५.

"यस्यै विशो राजा भवति, एष वोऽमी राजा; सोमोऽस्माकं
ब्राह्मणानां राजेति ०—० तदस्मा इदं सर्वं माद्यं करोति
०—० ब्राह्मणो माद्यः" ३. ४. ३.

"यावद्वै प्राणेष्वापो भवन्ति, तावद् वाचा वदति" ३. २. १६.

"या वा अपुत्रा पत्नी सा परिवृत्ती" २. ५. १२.

"योजनशो हि सिमाना अध्वानं धावन्ति" १. ५. १७.

"यो वा अनूचानः सोऽस्य यशसे" २. ६. २.

"यो वै रुद्रः सोऽग्निः" २. ३. १३.

"यो वै वरुणः सोऽग्निः" २. ३. १३.

"राज्ञ एव राजसूयम्" १. १. १२.

"रुक्मः ( रुच्यमानमुकुटः ) शतविदृषो वा भवति, नवविदृषो वा ०—० त मुपरिष्टाच्छीर्ष्णो निदधाति" ३. ३. १३, १४.

"वज्रो वा आज्यम्" २. ३. ७.

"वज्रो वै विकङ्कतः" २. ३. १८.

"वरुणसवो वा एष यद्राजसूयम्" ३. ५. २, २१. [२.६.६.

"वरुण्यं वा एतद् यन्मथितम्, अथैतन्मैत्रं यत् स्वय मुदितम्"

"वरुण्या वा एषा या परशुवृक्णा

अथैषा मैत्री या स्वयम्प्रशीर्णा" २. ६. ५.

"वरुण्यो वा एष योऽग्निना शृतः,

अथैष मैत्रो य ऊष्मणा शृतः" २. ६. ८.

"वाराह्या उपानहा उपमुञ्चते। अग्नौ ह वै देवा घृतकुम्भं प्रवेशयाञ्चक्रुस्ततो वराहः सम्बभूव; तस्माद् वराहो मेदुरः घृताद्धि सम्भूतस्तस्माद् वराहे गावः सञ्जानते,— स्व मेवैतद्रस मभिसञ्जानते" ३. ५. १९.

"विशो वै मरुतः, वैश्यो वा ग्रामणीः" २. ५. ६.

"वीर्यं वा आपः" ३. १. १.

"वीर्यं वा एतदपां रसः" ३. ३. १७.

"शार्दूलचर्मणो जघनार्धे सीसं निहितं भवति" ३. ३. ९.

"श्येताविव ह्यश्विनावविर्मल्हा सारस्वती भवति ०—० दुर्वेदा एवं समृद्धा पशवः; यद्येवं समृद्धान् न विन्देदप्यजानेवालभेरन्, ते हि सुरूपतरा भवन्ति" ४. ६. १.

"सत्यं वै श्रीर्ज्योतिः सोमः, अनृतं पाप्मा तमः सुरा" १. ५. २८.

"सप्तदश दुन्दुभीननुवेद्यन्तं सम्भिन्वन्ति" १. ५. ६.

"सप्तदशभिर्वासोभिर्यूपो वेष्टितो वा विग्रथितो वा भवति" १.६.५.

"सप्तदश सुराग्रहान् गृह्णाति" १. २. १२.

"सप्तदश सोमग्रहान् गृह्णाति" १. २. १०.

"सप्तदशान्नानि सम्भरन्ति" २. १. ३.

"सप्त वै मारुतो गणः" ३. ५. १७.

"सयोनी वा अश्विनौ, सयोनी सव्यष्टृसारथी ; समानं हि रथ मधितिष्ठतः" २. ५. ८.

"सर्वं वा इदं प्रजापतिर्यदिमे लोका यदिदं किञ्च" १. ३. ११.

"स वा एष (वाजपेयः) ब्राह्मणस्यैव यज्ञः १. १. ११.

"सविता वै देवानां प्रसविता, प्रसविता वै क्षत्ता" २. ५. ७.

"सवो वै सूतः, सवो वै देवानां वरुणः" २. ५. ५.

"सव्यायुग्यं युनक्ति, दक्षिणाप्रष्टिं युनक्ति, सव्याप्रष्टिं वाग्रे मानुषे ०—० ते वा एत एव त्रयो युक्ता भवन्ति" १. ४. ८.

"स हि पौष्णो यच्छ्यामः" २. ४. ८.

"स हि वैष्णवो यद् वामनः" २. ४. ४.

"सारस्वतीः', 'ऊर्मी' *, 'स्यन्दमानाः', 'अपयतीः', 'समुद्रियाः', 'निवेष्याः', 'स्थावराः' 'आतपवर्ष्याः', 'वैशन्तीः', 'कूप्याः', 'प्रुष्वाः', 'मधव्याः', 'गोरुल्व्याः', 'पयस्याः', 'विश्वभृतः', 'मरीचीः'— "ता वा एताः सप्तदशापः" ३. १. ३—२२. †

"सासौ द्यौः सैषा 'क्षुमा' नाम" ३. २. २८.

---

* प्राक्प्रत्यग्भेदेन समुद्रोर्मयो द्विविधा भवन्ति ।

† एतद् इष्ट्वेव २२३ पृ० पञ्चमटीप्पणी संशोध्या ।

"सीसं मृदु सततजवं०—० हिरण्यरूपं (सुवर्णवज्राख्यं) सत्र कियच्च नार्हति ०—० नाष्ट्रा रक्षांसि (रोगाणि) अतोऽपहन्ति" ३.३.१०.

"इयं पृथिवी सैषा 'इवा' नाम" ३. २. २९.

"सोमो वै प्रजापतिः १. ३. ७.

"स्वर्भानुर्ह वा आसुरः सूर्यं तमसा विव्याध, स तमसा विद्धो न व्यरोचत" २. ६. २.

---

## ॥ अथ विषयसूची ॥

(१ प्र० १ ग्रा०)

अथ वाजपेयविधानप्रस्तावः, वाजपेये ब्राह्मणस्याधिकारविधि मुक्तेतं बृहस्पतिवृत्तान्तं प्रदर्श्य क्षत्रियस्यापि तं समर्थयितु मिन्द्रवृत्तान्ताख्यानम्, वाजपेयस्य साम्राज्यफलप्रदर्शनम्, तत्र सावित्रहोमविध्यादिकञ्चेति ।

(१ प्र० २ ग्रा०)

वाजपेयग्रहविशेषाणां विधानम्, प्राकृतसोमक्रयविधि मनूद्य परिस्रुत्क्रयविधानम्, वसतीवरीणां हविर्धानप्रपादन मनूद्य परिस्रुत्प्रपादने विशेषविधिः, ग्रहग्रहणप्रसङ्गात् सुराग्रहाणां मधुग्रहस्य च माध्यन्दिने सवने ग्रहणविधिश्चेति ।

( १ प्र० ३ ब्रा० )

वाजपेयस्य अग्निष्टोमोक्थ्यषोडश्यतिरात्रसंस्थात्वसद्भावेन तत्र तेषा मग्निष्टोमादिगतानां सवनीयपशूनां विशेषतो विधानम्, पश्वन्तराणाञ्च विधानम्, उक्तानां प्राजापत्यपशूनां वपाप्रचरणस्य हविर्यागस्य च प्राकृतपशुवपाहविर्भिः सह विधास्यमाने होमकाले विचारः, आश्रावणानन्तरकर्त्तव्ये प्रैषेऽपि विशेषविधिश्चेति।

( १ प्र० ४ब्रा० )

ततो माध्यन्दिनसवनकर्त्तव्येषु प्रधानतो यजमानाभिषेकस्य आजिधावनस्य विधिः, तत्र रथे अश्वत्रयाणां योजनम्, तन्मन्त्राणां तात्पर्याख्यानानि च, ततश्चतुरश्वरथस्याध्वर्यवे दानविधिः, अथ नैवारचरुविधिः, अश्वानां तदाघ्रापणविध्यादिकञ्चेति।

( १ प्र० ५ ब्रा० )

अथाजिधावनप्रशंसा, ब्रह्मणो रथचक्रे गानम्, ब्रह्मणो रथावरोहणम्, यजमानभेदे मन्त्रभेदः, ततो दुन्दुभ्युपावहरणम्, क्षत्रियस्य यजमानस्य समदशेषुप्रव्याधकरणञ्च, ततोऽश्वैर्युक्ते तस्मिन्रथे यजमानस्य समन्त्रकारोहणम्, ततोऽध्वर्य्वादिकर्त्तव्यताविधानादिकम्, ततो हवनानुमन्त्रणयोर्व्यवस्थया विधानम्, तन्मन्त्रविधिस्तद्व्याख्यानादिकञ्च, ततः सुराग्रहाणां मधुग्रहस्य चात्र माध्यन्दिने सवने विनियोगप्रकारः, प्रतिगृहीतसुराग्रहाणा मैच्छिकव्यवहारविध्यादिकञ्चेति।

( १ प्र० ६ ब्रा० )

अथ यजमानस्य यूपारोहणम्। तत्र पूर्वं मासिन्द्रोमाणां विधानम्, यूपचषालस्य गोधूमपिष्टमयत्वविधानम्, पद्माश्वत्थातर-

परिधापनम्, यूपे निश्रेणीस्थापनम्, यूपारोहणकाले जाया-मन्त्रणम्, तत्स्थयोर्यजमानदम्पत्योः सर्वदिगीक्षणम्, भूम्यवेक्षणञ्च, सहिरण्याजिने तयोर्यूपादवतरणम्, आस्तृताजिनाया मासन्द्या मुपवेशनादिकञ्चेति ॥

---

( २ प्र० १ ब्रा० )

वाजप्रसवीयहोमकालादिविधानम्, आवेदनविधिः, उज्जिति-होमादिविधिः, ततः स्विष्टकृद्यागाद्यनुसन्धानादिकञ्चेति।

( २ प्र० २ ब्रा० )

अथ राज्ञो राजसूयविधिः। तत्र पवित्रेष्टिरेवारम्भणीयेष्टिः। तदुत्तरदिनेऽनुमतियागस्य, तदुत्तरदिने आग्नावैष्णवयागस्य, तदुत्तरदिने आग्नीषोमीयस्य, तदुत्तरदिने ऐन्द्राग्नस्य, तदुत्तर-दिने आग्रयणस्य विधिदक्षिणादीनि विहितानि। उक्तयागपश्चा-कादनन्तरं चातुर्मास्यविधानञ्चाम्नात मिति।

( २ प्र० ३ब्रा० )

तत्र चातुर्मास्येषु वैश्वदेवाख्यं प्रथमं पर्व, वरुणप्रघासाख्यं द्वितीयं पर्व, साकमेधाख्यं तृतीयं पर्व, शुनासीर्याख्यं चतुर्थं पर्व, तेषां विधानादि। ततः पञ्चवातीयहोमविधानम्, तद्दक्षिणा-विधानञ्च। आरोग्यकामस्यापि पञ्चवातीयहोमविधानम्। तत इन्द्रतुरीययागविधानम्, तद्दक्षिणाविधानञ्च। ततोऽपामार्गहोम-विधानम्, तत्रोल्मुकादान मनूच्य मन्त्रविधानम्, तन्मन्त्रव्याख्या-नादिकञ्च। ततः स्रुवक्षेपणादिविधानञ्चेति।

( २ प्र० ४ ब्रा० )

अथ तत्रैव त्रिसंयुक्तेष्टिविधानम् । तत्र वैष्णवयागः प्रथमः, त्रिष्टविष्णुयागो द्वितीयः, सौम्ययागस्तृतीयः । एषा मितिकर्त्तव्यता-मन्त्रादि-दक्षिणा-विधानानि । ततो द्विष्टविष्णुयागविधिः, तत्र वैश्वानरयागः प्रथमः, वारुणयागो द्वितीयः । अनयोरितिकर्त्तव्यता-मन्त्रादि-दक्षिणाविधानानि चेति ।

( २ प्र० ५ ब्रा० )

अथ रत्नहविरिष्टिः । रत्नहविःप्रयोगः । स च सेनानीगृहे प्रथमः, पुरोहितगृहे द्वितीयः, यजमानगृहे तृतीयः, महिष्या गृहे चतुर्थः, सूतस्य गृहे पञ्चमः, ग्रामणीगृहे षष्ठः, क्षत्तृगृहे सप्तमः, सङ्ग्रहीतुर्गृहे अष्टमः, भागदुघस्य गृहे नवमः, पुनर्यजमानगृहे दशमः, सूतगृहे एकादश, परिवृक्तीगृहे द्वादश, तद्रत्नहविरिष्ट्यन्ते किञ्चित् कर्त्तव्यविशेषविधानञ्चेति ।

( २ प्र० ६ ब्रा० )

अथ सौमारौद्रयागविधिः । तत्र चरुपाकः, आज्यकरणादिकञ्चेति ।

( २ प्र० ७ ब्रा० )

अथ पवित्राख्याद्यागादनन्तरकर्त्तव्यस्य राजसूयीयद्वितीययागस्याभिषेचनीयाख्यस्य प्रयोगे देवसुवां हविषां विधानम् । तत्रादौ सावित्रस्य विधानम्, ततः क्रमादाग्नेयस्य, सौम्यस्य, ऐन्द्रस्य, रौद्रस्य, मैत्रस्य, वारुणस्येति । ततो देवसूनामनिर्वचनादिकञ्चेति ॥

———

( ३ प्र० १ ब्रा० )

अथ समदशाना मपां सम्भरणविधानम् । तत्र प्रथमं तत्पात्रनिरूपणम् । अथ प्रथमं सारस्वतीना मपां सम्भरणप्रकारादिकम् ; ततः प्रागूर्म्मीणाम् , प्रत्यगूर्म्मीणाम् , प्रतिलोमस्यन्दमानानाम् , अपयतीनाम् (रुद्धप्रवाहाणाम् ), परिवाहिणीनाम् , उच्छलन्तीनां सामुद्राणाम् , आवर्त्तोदकानां सूर्य्यत्वचसाम् , आतपवर्ष्याणाम् , सरस्यानाम् , कूप्यानाम् , नीहारात्मकानाम् , मधुरूपाणाम् , गोरुल्वानाम् , पयोरूपाणाम् , घृतात्मिकानाम् , मरीचीनाञ्चापा मिति ॥

( ३ प्र० २ ब्रा० )

अथाभिषेकः । तत्र तत्कालविधिः , पार्थहोमविधिः , अभिषेकपात्राणां विधानम् , पवित्रद्वयकरणोत्पवनादिकञ्च । ततो यजमानस्य तार्प्यपाण्डुधीवासोष्णीषपरिधानम् । अत्रैव दीक्षितवसनस्यावभृथे परित्यागविधिः , धनुर्वाणग्रहणम् , आविर्मन्त्रवाचनञ्चेति ।

( ३ प्र० ३ ब्रा० )

केशवलोप्तायसदन्दशूकाना मन्तरालवर्त्तित्वोपपादनम् , ततः सुन्वतस्तस्य सर्वदिगाक्रमणविधिः , अधस्तादुपरिष्टाच्च रुक्मनिधानम् , समन्त्रकबाहूद्ग्रहणञ्चेति ।

( ३ प्र० ४ब्रा० )

अभिषेकप्रकारोपदेशः, संस्रवैः सिक्तस्य पालाशाभिषेकपात्रस्य तस्यैव राज्ञः प्रियतमाय पुत्राय प्रदानविधिश्च । ततस्तत्पुत्रकर्त्तृको गार्हपत्येऽग्नौ होमविशेषः, पालाशपात्रशेषस्याग्नीध्रीये होमश्चेति ।

( ३ प्र० ५ ब्रा० )

रथोपावहरणम् । तत्र प्रथमं तावत् आहवनीयस्योत्तरप्रदेशे शतानां तदधिकानां वा गवां स्थापनम्, ततः समन्त्रकरथोपावहरणविधिः, यजमानस्य रथारोहणम्, स्थापितासु गोषु रथस्थापनम्, तद्दक्षिणतोऽश्वानां स्थापनम्; ततो रथविमोचनीयहोमविधिः, वराहचर्मनिर्मितोपानद्विमोचनम्, ततो रथादवरोहणविधिः, एतत्प्रसङ्गतो हंसमन्त्रस्य व्याख्यावैविध्यप्रदर्शनम्, शतमानयोरासञ्जनम्, औदुम्बर्या उपगूहनादिकम्, पयस्यायां बार्हीरवहरणञ्चेति ॥

———

( ४ प्र० १ ब्रा० )

अथ पयस्यायाः प्रचारः । आसन्द्या मधीवासास्तरणम्, सुन्वतस्तत्रोपवेशनम्, यजमानहस्ते पञ्चाक्षावापः, सुन्वत्पृष्ठे दण्डेराघातः, यजमानस्य वरप्रार्थनादिकम्, सुन्वते स्फ्र-प्रदानञ्च । द्यूतस्थाननिरूपणम्, अधिदेवने हिरण्यनिधानपूर्व्वकहोमविधिः, ततोऽक्षनिवापः, गोपणनम्, द्यूतकर्मणो दक्षिणादानम्, पयस्यायाः स्विष्टकृदिडादिविधिश्चेति ।

( ४ प्र० २ ब्रा० )

अथ दशसंसृपाहविर्विधानम्, दशपेयविधानम्, द्वादशपुण्डरीकस्रक्प्रतिमोकः, ततो द्वादशपेयस्य दीक्षाविधिश्च । आग्नेयादिहविर्निर्वापः, उपसत्त्वयार्थं हविस्त्रयकरणम्, तत्र विचारश्च । उपसद्यागविधिः । गर्भिणीनां द्वादशगवां अग्रपे

दानम्, हिरण्यस्रक्-रुक्म-प्राकाशद्वयाश्वव्यर्षभ-वासोद्वयानडुद्-दानविधिश्चेति ।

( ४ प्र० ३ ब्रा० )

अथ पञ्चबिलचरुयागविधिः । तदीयर्त्विग्विशेषेभ्यो हिरण्यादि-दक्षिणादानविधिः, एतस्य हविःपञ्चकस्य फलान्तराय राज-सूयाद् बहिःप्रयोगविधानञ्चेति ।

( ४ प्र० ४ ब्रा० )

अथ उत्तराणां प्रयुग्घविषां द्वादशानां विधानम्, द्वादश-प्रयुग्घविःकरणेन क्रतुप्रयोगस्य दार्ढ्यकथनम्, ततस्तत्र पशुद्वय-विधिः, तत्कर्मणो दक्षिणाविधानञ्चेति ।

( ४ प्र० ५ ब्रा० )

अथ केशवपनीयातिरात्रस्य वैशेषिका धर्म्माः । तत्र सामसु गीयमानेषु स्तोत्रेषु चोदकेन प्रातःसवनादिषु त्रिवृदादिस्तोम-प्राप्तौ तानपवदितुं विशेषविधिः प्रथमः । ततः केशवापन-केशनिकर्त्तनयोः क्रमान्निषेधविधाने । तत उपानहोपमुञ्चन-विधानादिकञ्चेति ।

( ४ प्र० ६ ब्रा० )

अथ सौत्रामणीयागविधिः । तत्र पशुत्रयविधिः । तत इन्द्रस्य नासादिभ्यः सोमद्रवणात् सिंहादीना मुत्पत्तिः, अपानादितस्तद्-द्रवणात् सुरोत्पत्तिः, निष्ठीवनत्रयात् सुरासन्धानानां कुवलकर्कन्धु-वदराणा मुत्पत्तिरिति कथा । सौत्रामणीनामनिर्वचनम् । सोम-पक्वौदनचूर्णपाचनेन परिस्रुत्सन्धान विधिः, परिस्रुत्पावनम्, तस्यां पूतायां परिस्रुति कुवलकर्कन्धुवदरसक्तुत्रयप्रक्षेपेण सुरात्वापाद-नञ्च । ततस्तद्ग्रहत्रयग्रहणम्, तद्धवनञ्च । ततः परिस्रुच्छेष

मासिच्य तच्चवच्छिद्रं कुम्भं शिक्ये कृत्वा दक्षिणस्याग्नेरुपरि धारयन् ततः स्रवन्त्या धारया सोमवताम् बर्हिषदां मग्निष्वात्ता-नाञ्च पितृणा मुपस्थानादिकम्, सौत्रामणीदक्षिणाविधानञ्चेति ।

( ४ प्र० ७ ब्रा० )

अथ राजसूयान्ते कर्त्तव्यायास्त्रैधातवीष्टेः प्रयोगः । तत्र तद्विधानार्थाख्यायिका, तन्नामनिर्वचनम्, तद्धविर्निरूपणम्, तद्विधानम्, तद्दक्षिणाविधिः, तत्फलश्रुतिः, तत्फलसंवादा-ख्यानम्, वेदत्रयरूपयानया त्रैधातव्या अभिचारपरिहारश्चेत्या-ख्यानम् । ततो ब्रह्मणे त्रीणि शतमानानि, होत्रे तिस्रः सवत्साः पयस्विनीर्गाः, अध्वर्यवे त्रीणि वासांसि, अग्नीधे एकां गाञ्चेति त्रयोदशदक्षिणाद्रव्याणां विधानम्; तदेतत्त्रयो-दशसाम्येनास्य यज्ञस्य मलिम्लुचाहितसंवत्सररूपत्व मिति प्रशंसा चेति शम् ॥

---

# ॥ अथ कर्मसूची ॥

---

## ॥ अथर्षिनामादिसूची ॥



* इह मूले ( ३. २. ४. ) पृथी वैन्य:। एवम् अथ० सं० २०. १३६. ५; ऋ० सं० १०. १४८. ५। तै० ब्रा० १. ७. ७. ३ पृथिर्वैन्य:, ऋ० सं० १. ११२. १२ इत्यपि। ऋगनुक्रमण्यां तु पृथुर्वैन्य: १० म० १४८ सू० द्रष्टव्य मिति॥

## ॥ इति ॥

---

वहरतीन्द्रस्य वा वीर्यङ्कृतो वाह्वऽभ्युपावहरा-मीति पशूनां वा ऽएष रसो यत् पयस्या तत् पशूना मेवास्यैतद्रसं वाह्वऽभ्युपावहरति तद्यान् मैत्रावरुणी भवति मित्रावरुणाऽउ हि वाह्व तस्मान् मैत्रावरुणी भवति * ॥ २७ ॥ ५ ॥

॥ इति तृतीयप्रपाठकस्य पञ्चमं ब्राह्मणम् [४. ३.] ॥

कात्यायनः— "गवाऽ शत मधिकं वा स्वस्याहवनीयस्योत्तरतः स्थापयति"—इति †। 'स्वस्य' ज्ञातेः भ्रातुः, तदर्थ माहवनीयस्योत्तरप्रदेशे शतसङ्ख्या अधिका वा गाः स्थापयेदिति। तदिदं सार्थवादं विधत्ते— "तद् योऽस्य स्वो भवतीति। 'परःशताः' शताधिका इत्यर्थः। 'एवं' पशुसंस्थापनरूपं कर्म 'करोति' इति 'यत्', एतत् 'तत्' 'तथो' तथैव, वरुणेन कृतत्वादित्युत्तरत्र सम्बन्धः॥ १ ॥

"वरुणादिति ‡। पूर्वं राजसूयेऽभिषिच्यमानाद् 'वरुणाद्' 'इन्द्रियं' 'वीर्यम्' 'अपचक्राम' अपगतम्। वीर्यापसरणे कारण माह— "अपाद् य एष इति। 'अपाद्' निषिक्तं 'सम्भृतः' 'अपां-रसः', 'येन' सम्भृतेन रसेन इदानीम् अध्वर्युः 'अभिषिञ्चति'। 'सः' रसः 'अस्य' वरुणस्य 'वीर्यं' 'निर्जघान' हतवान्। वरुणः

* 'भवति'—इति क।

† का० श्रौ० सू० १५. ६. १३। 'स्वो ज्ञातिः सपिण्डः'—इति तत्र कर्काचार्यः। तै० सं० १. ८. १०, तै० ब्रा० १. ७. ४. द्रष्टव्यम्।

‡ राजसूयस्य वरुणसवाभिधेयत्वे हेतूपन्यासार्थैषाख्यायिका।

'पशुषु' 'अन्वविन्दत्' अलभत। 'तस्मात्' पशूनां यशोरूपत्वम्; पशुत एव यशःसम्भवात्। तच्च वीर्यं वरुणः 'पुनः' आत्मनि स्थापितवान्। 'तथो' तेनैव प्रकारेण 'एषः' यजमानोऽपि 'एतत्' पशुसंस्थापनेन 'इन्द्रियं वीर्यम्' आत्मनि धत्ते। तदेव व्यतिरेकमुखेनाह— "नाह वास्मादिति। 'अह'-शब्दः प्रसिद्धिवाची। तस्मादेवं पशुनिधानरूपं कर्म कुर्वतः सुन्वतः सकाशात् 'वीर्यम्' 'न अपक्रामति' नापसरति। "राजसूय मिति यत्, तत् वरुणसवः *; राजसूये वरुण एव मकरोदिति बुद्ध्या 'एषः' यजमानोऽपि 'एतत्' 'करोति' यत इति सङ्ग्रहार्थः॥ २॥

अथ रथोपावहरणं विधत्ते — "अथ रथ मिति †। रथोपावहरणं प्रशंसति— "यद्वै राजन्यादिति। 'यद्' वस्तु 'राजन्यात्' 'पराक्' पराचीन मवशम् अस्ति, 'तत्' एतत् अनेन 'रथेन' 'अनुयुङ्क्ते' अनुकूलं स्वाधीनं कुर्यात्। तस्माद्रथ उपावहर्त्तव्य इत्यर्थः॥ ३॥

मन्त्रं विधत्ते— "स उपावहरतीति ‡। "इन्द्रस्येति §। वाजपेये व्याख्यातः ‖। रथयजमानयोर्वज्रेन्द्रात्मकत्व मुपपादयति— "वज्रो वा इति॥ ४॥

---

* "यो वै वाजपेयः, स सम्राट्सवः; यो राजसूयः स वरुणसवः"—इति तै० ब्रा० २. ७. ६।

† "रथ मुपावहरति विजित्यै"—इति तै० ब्रा० १. ७. ६।

‡ का० श्रौ० सू० १४. ३. १, २।

§ वा० सं० १०. २१. १।

‖ इहैव पुरस्तात् ५३ पृ० ११ पं० द्रष्टव्यम्।

रथस्य वज्रात्मकत्व मुक्तम् *, तस्य प्रदेशविधानपुरस्सर मश्वयोर्योजनं समन्त्रकं विधत्ते— "त मन्तर्वेदीति †। 'अन्तर्वेदि' वेदिमध्ये 'अभ्यावर्त्य' अभिमुख मानीय दक्षिणस्यां वेदिश्रोणौ युञ्ज्यादित्यर्थः। हे रथ ! त्वं 'प्रशास्त्रोः' अनुशासकयोः आज्ञापयित्रोः 'मित्रावरुणयोः' 'प्रशिषा' प्रशासनेन यज्ञसम्बन्धनिमित्त 'युनज्मि' अश्वैः संयोजयामि 'इति' ‡। मित्रावरुणशब्दार्थ माह— "बाहू वा इति ॥ ५ ॥

रथस्याश्वचतुष्टयोपेतत्वं विधत्ते— "तं चतुर्युज मिति। दक्षिणापथेन गमनं विधत्ते— "स जघनेनेति §। 'सः' अध्वर्युः 'सदोजघनेन' सदोमण्डपस्य पश्चिमभागे 'शाला मग्रेण' प्राग्वंशस्याग्रभागे 'येनैव' येन मार्गेण 'दक्षिणाः' दक्षिणार्थं दीयमाना गावः 'यन्ति' गच्छन्ति, 'तेन प्रतिपद्यते' रथेन सहितं प्रविशेदित्यर्थः। "दक्षिणेन वेदिं दक्षिणा उपतिष्ठन्ते"–इति चतुर्थकाण्डे दक्षिणागमन मुक्तम् ‖। रथसंस्थापनस्य प्रदेशविशेषं विधत्ते— "तं जघनेनेति। आग्नीध्रचात्वालयोर्मध्यदेशे रथम् 'उद्यच्छति' ऊर्ध्वमुखं स्थापयेत् ॥ ६ ॥

अथ यजमानस्य रथारोहणं समन्त्रकं विधत्ते— "त मातिष्ठतीति ¶। 'आतिष्ठति' आरोहेदित्यर्थः। 'अव्यथायै'

---

* इहैव पुरस्तात् १. ४. ३. (तै० सं० ६. २. ६. ४१.)।

† का० श्रौ० सू० १५. ६. १५।

‡ वा० सं० १०. २१. २।

§ का० श्रौ० सू० १५. ६. १६।

‖ ३अ० ४ब्रा० १४क०। तत्रैव (२क०) दक्षिणानामनिरुक्तिश्च।

¶ का० श्रौ० सू० १५. ६. १७।

"व्यथ भयचलनयोः" *, अभयाय 'त्वा' त्वाम्, आतिष्ठामीति शेषः। 'स्वधायै' अन्नाय त्वा मातिष्ठामि 'इति'। 'अर्जुन इति' इन्द्रस्य प्रियं नाम; इन्द्रात्मकोऽहं मातिष्ठामीति सम्बन्धः † ॥

मन्त्रं पदशोऽनूद्य व्याचष्टे— "अनार्त्यै त्वेति। अर्जुनपदस्येन्द्रवाचकत्वं दर्शयति— "अर्जुनो ह वा इति। 'इन्द्रस्य' 'गुह्यं' गूढं नामधेयम्, तस्मात् अर्जुन इन्द्रः। अस्त्विन्द्रस्यार्जुननामधेयम्, प्रकृते किमायात मित्याशङ्क्य, यष्टुरिन्द्रात्मकत्व माह— "इयेन वेति। क्षत्रसम्बन्धात् यष्टृत्वाच्च युज्यत इन्द्रत्वम्; तस्मान्मन्त्रे अर्जुनपदेन यजमानाभिधानं युज्यत इत्यर्थः ॥ ७ ॥

अथ दक्षिणभागे युक्तस्याश्वस्य प्राजनं समन्त्रकं विधत्ते— "अथ दक्षिणेति ‡। 'उपार्षति' "ऋषी गतौ" §, प्राजतीत्यर्थः। हे अश्व! 'मरुतां' विद्युद्रूपाणां 'प्रसवेन' प्रेरणया 'जय' सर्वं स्वाधीनं कुर्विति ‖ ॥

मन्त्रं व्याचष्टे— "विशो वा इति। यद् राज्ञा जेतव्य मस्ति, तद् 'विशा' प्रजया 'जयति'; तस्माद् विड्रूपमरुत्प्रतिपादनमन्त्रो युक्तः ॥ ८ ॥

---

* भा० आ० ७६४ धा०।

† वा० सं० १०. २१. ३।

‡ का० श्रौ० सू० १५. ६. १८।

§ तु० प० ७ धा०।

‖ वा० सं० १०. २१. ४।

विधत्ते—"अथ मध्य इति *। 'गवां' पूर्वं स्थापितानां 'मध्ये' 'उत्पच्छति' स्थापयति। 'मनसा' 'आपाम' व्याप्तवन्तो भवाम। आप्नोतेर्लुङि लृदित्वात् च्लेरङि कृते रूपम्। मन्त्रस्य तात्पर्यं माह—"मनसा वा इति † ॥ ८ ॥

अथ धनुष्कोट्या स्वानां स्थापितानां गवां मध्ये एकस्याः स्पर्शनं समन्त्रकं विधत्ते—"अथ धनुरिति ‡। इन्द्रियेण बलेन सङ्गता भवामः। "इन्द्रियं वा इति। "समिन्द्रियेण"-इति मन्त्रेण § गोरुपस्पर्शने इन्द्रियस्यैव वीर्यस्य धारणं कृतं भवतीत्यर्थः। शिष्टानां गवां स्वाधीनकरणार्थं 'जिनामि'-इति ब्रूयात्। इदं ब्राह्मणोक्तं वाक्यम्, न तु मन्त्रः। तस्याय मर्थः—'इमाः' गाः 'जिनामि', अपि चेमाः 'कुर्वे' स्वाधीनाः करवा इति। "ज्या वयोहानौ", "ग्रहिज्या" -इत्यादिना ‖ सम्प्रसारणम्॥ अत्र सूत्रम्—"धनुरार्त्न्योपस्पृशति गां यजमानः समिन्द्रियेणेति जिनामीमाः कुर्व इमा इति चाह"-इति ¶ ॥ १० ॥

स्वानां स्थापितासु गोषु रथस्य स्थापनं प्रशंसति—"तद्यदिति। 'यद्' वस्तु 'पुरुषात्' 'पराक्' पराधीनं बहिर्मुखं नष्टं 'भवति'। किं तत्? तदाह—"यशो वा किञ्चिदिति।

---

* का० श्रौ० सू० १५. ६. १६।

† वा० सं० १०. २१. ५।

‡ का० श्रौ० सू० १५. ६. २०।

§ वा० सं० १०. २१. ६।

‖ क्रा० प० ३८ धा०। पा० सू० ६. १. १६।

¶ का० श्रौ० सू० १५. ६. २०, २१।

तद् यशआदिकं 'किञ्चित्' अन्यत् 'प्रथमं' पूर्वतः 'स्वं' स्वीयं वस्तु अभिलक्ष्य 'प्रतमां' प्रकर्षेण गच्छति। 'तद्' अनेन 'अस्य' ज्ञातेर्गोषु स्थापनेन पराङ्मुखं वीर्यं 'स्वात्' ज्ञातेः सकाशात् पुनः स्वाधीनं कृतवान् भवतीत्यर्थः ॥ ११ ॥

अथ स्थापितानां गवां स्वामिने स्वाय, अन्यासां तावतीनां गवां प्रतिदानं दर्शयति— "तस्मै तावन्मात्रीरिति *। यावत्सङ्ख्याकाः पूर्वं माहवनीयस्योत्तरतो गा अवस्थापिताः, 'तावन्मात्रीः' तावत् परिमाणं यासां तावन्मात्राः। प्रमाणे मात्रच् प्रत्ययः †, "टिड्ढाणञ्"–इति सूत्रेण ङीप् ‡। 'भूयसीः' ततोऽप्यधिकाः। प्रतिदानं प्रशंसति— "न वा एष क्रूरेति। "यजमान इति। 'यत् एष क्रूरकर्मणि न भवति'–इत्यन्वयः। यजमानेनान्यस्य प्रीतिजनकं कर्म कर्त्तव्यम्। किं तत् क्रूरकर्मेति तद् दर्शयति— "यदाह जिनामीति। तस्मात् गोस्वामिने स्वाय अन्यास्तावतीः 'भूयसीर्वा' गाश्च दत्वा वेदिमध्ये स्थितानां गवां स्वाधीनकरणेन क्रूरं कर्म न कृतं भवतीत्यर्थः ॥ १२ ॥

आहवनीयस्योत्तरतः स्थापितानां गवां मध्ये दक्षिणतोऽश्वानां स्थापनं विधत्ते— "अथ दक्षिणानिति। यूपस्य पूर्वतो वेदेर्दक्षिणतः 'दक्षिणान्' दक्षिणदिङ्मुखानश्वान् आयच्छेत्। अथान्तःपात्यदेशे § रथस्य स्थापनं विधातु मुदग्गमनमार्गं

---

* का० श्रौ० सू० १५. ६. २२ क।

† "प्रमाणे द्वयसज्–दघ्नञ्–मात्रचः"—इति पा० सू० ५. २. ३७।

‡ पा० सू० ४. १. १५।

§ 'सोऽन्तःपातः ऐष्टिकवेदेर्महावेदेश्चान्तरालसञ्चरः' ३भा० २८१पृ० ५पं०।

माह— "सोऽग्रेणेति । अनेन मार्गेण रथं प्रदक्षिण मावर्त्त्यम् । "येनैव दक्षिणा इति । दक्षिणागमनमार्गस्तु पूर्व मेवोक्तः * । सदसः पश्चिमे, शालायाः पूर्वदेशे रथम् 'उद्यच्छति' स्थापयेत् । सूत्रितं हि— "पूर्वेण यूपं परीत्यान्तःपात्यदेशे स्थापयति मा त इन्द्र इति"-इति † ॥ १३ ॥

"मा त इति ‡ । मन्त्रस्याय मर्थः ;— हे 'वज्रहस्त !' 'यं रथम्' 'अधितिष्ठ' अधितिष्ठसि, हे 'देव !' यस्मिंश्च त्व मवस्थितः 'स्वश्वान्' शोभनाश्वान् 'रश्मीन्' 'आयमसे' नियच्छसि । हे 'तुराषाट् !' तूर्णं सहत इति तुराषाट्, तस्य सम्बुद्धिः, हे 'इन्द्र !' 'ते' तव स्वभूते 'रथे' 'अयुक्ताः' संयोगरहिता वयम् 'अब्रह्मता' अब्रह्मत्वम् 'विदसाम' । विदेर्लेटि सिचि, "लेटोऽडाटौ"-इत्यडाटौ § च, विदेम । तव रथे अयुक्ताः वयं ब्रह्मवर्चसम् न लभामहे, किन्तु युक्ताः सन्तो ब्रह्मवर्चस मेव लभेमहीत्यर्थः । रश्मिपदस्यार्थ माह— "अभीशव इति ॥

रथविमोचनीयहोमं विधत्ते— "अथ रथेति ‖ । 'रथः' होमेन 'प्रीतः' सन् 'विमुच्यातै' विमुक्तो भवत्विति ॥ १४ ॥

होम मनुद्य चतुरो मन्त्रान् सार्थवादं पृथग् विधत्ते— "स जुहोत्यग्नय इति ¶ । चतुर्णां मन्त्राणा मय मर्थः—

---

* अनुपद मेवोक्तं ( २८१ पृ० १३ पं० ) द्रष्टव्यम् ।

† का० श्रौ० सू० १५. ६. २२ ख ।

‡ वा० सं० १०. २२. १ ।

§ पा० सू० ३. ४. ७; ३. १. ३४; ३. ४. ९७; ३. ४. ९४ ।

‖ का० श्रौ० सू० १५. ६. २३ ।

¶ वा० सं० १०. २३. १—४ ।

'गृहपतये अग्नये' 'स्वाहा' सुहुत मस्तु ।
वनस्पतये वनस्पतिगुणकाय 'सोमाय स्वाहा' ।
'मरुतां' सम्बन्धिने 'ओजसे' बलाय 'स्वाहा' ।
'इन्द्रस्य' स्वभूताय 'इन्द्रियाय' वीर्याय 'स्वाहा' इति ॥

तत्र प्रथममन्त्रं प्रशंसति— "यदेवाग्नेय मिति । अग्न्येक-देशेनाग्निपदेन रथस्य आग्नेय मङ्गं प्रीणितवान् भवति । रथ-स्याग्नेय मङ्गं दर्शयति— "वहा वा इति । अश्वैर्वह्यमानस्य युगस्य प्रान्तप्रदेशा वहाः, ते आग्नेयाः ; "अग्निदग्ध मिवैषां वर्ह भवति"—इतिश्रुतेः * अग्निदग्धत्वसाम्यात् रथेऽपि वहा आग्नेयाः । प्रथमहोममन्त्रे 'अग्नये'—इत्येकदेशपाठेन रथाङ्गप्रीणनम् । 'गृह-पतये'—इति भागं प्रशंसति— "श्रीर्वा इति । 'गार्हपत्यं' गृह-पतित्वं नाम 'श्रीः' ; यतः पुरुषो 'यावतः' धनस्य पुरुषस्य वा 'ईष्टे', 'तत्' एतेन गृहपतय इति मन्त्रभागपठनेन यज-मानस्य गार्हपत्यलक्षणं राज्य मभिलक्ष्य रथो विमुक्तो भव-तीत्यर्थः ॥ एव मुत्तरेषु मन्त्रेषु एकदेशेन रथाङ्गप्रीणनम्, अपरेण यजमानफलार्थं रथ-विमोक उच्यत इति ॥ १५ ॥

"सोमायेति । "द्वयानीति । वनस्पतिनिर्मितानि 'चक्राणि' 'द्वयानि' द्विप्रकाराणि 'रथ्यानि' रथसम्बन्धीनि, 'आनसानि' अनस्सम्बन्धीनि 'च' इति । तदेतेन "सोमाय वनस्पतये"—इतिमन्त्रपाठेन उभयविधेभ्यो रथ्यानसचक्रेभ्यः, तदर्थम्, 'अरि-ष्टिम्' अहिंसां कृतवान् भवति । सोमस्य वनस्पतित्वात् ओषधिपोषकत्वात् वनस्पतिपदेन रथस्य दारुविनिर्मितान्यङ्गानि प्रीणयति । सोमस्य क्षत्ररूपत्वम्, राजत्वाद् बलसम्पादकत्वाद्वा ।

* १का० १अ० २ब्रा० ८क० (१भा० ३६ पृ० १३ प०) ।

तस्मात् सोमपदेन क्षत्रियसम्बन्धि स्वाराज्य मभिलक्ष्य रथो विमुक्तो भवतीत्यर्थः ॥ १६ ॥

"मरुता मिति। तृतीयेऽत्र मन्त्रे मरुता मिति पदेन रथस्यैव प्रीणनम्। रथस्य मारुतत्वं सम्पादयति— "चत्वारोऽश्वा इति। रथस्याश्वचतुष्टयम्, 'रथः' स्वयं पञ्चमः, 'द्वौ सव्यष्टृसारथी' सव्यदक्षिणभागयोरवस्थितौ द्वौ सारथी इति 'सप्त' सङ्ख्या अस्ति; मरुता मपि सप्तगणात्मकत्वात् सप्तसङ्ख्याकत्वम्; अतः सप्तसङ्ख्यासाम्यात् मरुता मिति पदेन रथस्यैव प्रीणनं कृतं भवतीत्यर्थः। मरुत्पद मेव यजमानस्य फलार्थं मपि प्रशंसति— "विशो वा इति ॥ १७ ॥

"इन्द्रस्येति। अत्र चतुर्थमन्त्रे इन्द्रपदेन रथस्य सारथिप्रीणनम्। सव्यभागे तिष्ठतीति 'सव्यष्ठा'। तिष्ठतेरौणादिक ऋकारप्रत्ययः किच्च, कित्त्वादालोपः, "अम्बाम्बगोभूमि"- इति सूत्रे * 'स्था-स्थिन्-स्थॄणाः'-इति वचनात् षत्वम् ॥ १८ ॥

विधत्ते— "अथ वाराह्यौ इति। 'वाराह्यौ' वराहचर्मनिर्मिते 'उपानहौ' 'उपमुञ्चते'। कात्यायनेन पशूनां रसोऽसीति मन्त्रेण वाराह्योरुपानहोरुपमोको † विहितः ‡। तत्र मन्त्रे वराहस्य पशुरसत्व मभिधीयते, तदुपपादयति— "अग्नौ ह वै देवा इति। पूर्वं देवा घृतकुम्भ मग्नौ प्रासुः, तस्माद्वराह उत्पन्नः; अतो घृतोत्पन्नत्वाद् वराहस्य 'मेदुरत्वं' मांस-

---

* पा० सू० ८. ३. ९७।

† '०रुपविमोको'—इति ख। उपविमोकशब्दार्थस्त्वैतरेयश्रुतितोऽवगन्तव्यः (ऐ० ब्रा० ६. ४. ७.)।

‡ का० श्रौ० सू० १५. ६. २४।

त्वम्। तस्मिन् 'वराहे' 'गावः' 'सञ्जानते' संवदन्ते; स्वीयरसभूतघृतोत्पन्नत्वात्। तस्माद् वाराहोपानहोरुपमोकेन पशुरस एव स्वयं प्रतिष्ठितो भवतीत्यर्थः॥ १९॥

"अथेमा मिति। 'पृथिवि मातः!' सर्वेषां निर्मातृत्वात् पृथिव्या मातृत्वम्। द्यौः पिता पृथिवी मातेति * श्रुत्यन्तरेषु श्रूयते। 'मा' मां 'मा हिंसीः' मा बाधिष्ठाः, 'अहम्' अपि 'त्वां' मैव हिंसिष मिति मन्त्रार्थः †। "वरुणाद्व्वा अभिषिषिचानादित्यादिकः, "न हि माता पुत्रं हिनस्ति, न पुत्रो मातर मित्यन्तः, वाक्यसन्दर्भो वाजपेये भूम्यवेक्षणप्रसङ्गे व्याख्यातः ‡॥ २०, २१॥

रथादवरोहणं विधत्ते— "सोऽवतिष्ठतीति §। अवरुह्य तिष्ठतीति अवशब्दस्य रुहिकर्मणा समन्वये "समवप्रविभ्यः स्थः"-इति ‖ आत्मनेपदं न भवति; तिष्ठतिक्रियायोगाभावेन प्रेत्युपसर्गसञ्ज्ञाया अभावात्, अन्यथा आत्मनेपदं दुर्निवारं स्यात्। अथ वा व्यत्ययेन परस्मैपदम्॥

"हंस इति ¶। मन्त्रस्याय मर्थः— हन्ति पृथिवी मिति 'हंसः' रथः, शुचौ देवयजने रथवाहने च सीदतीति 'शुचि-

---

* "द्यौर्मे पिता ०—० माता पृथिवी"—इति ऋ० सं० १. १६४. ३३, "द्यौष्पितः पृथिवि मातर्"—इति ६. ५२. ५। एवमादिषु द्रष्टव्यः।

† वा० सं० १०. २३. ५।

‡ इहैव पुरस्तात् २. १. १८ (१०३ पृ०) द्रष्टव्यम्।

§ का० श्रौ० सू० १५. ६. २६।

‖ पा० सू० १. ३. २२।

¶ वा० सं० १०. २४. १।

षत्', तस्योपरि यजमानं वासयतीति 'वसुः', तदगुल्माद्यनव-यवेऽन्तरिक्षे सीदतीति 'अन्तरिक्षसत्', 'होता' होतृसमानः, तदेव कथ मित्युच्यते— वेद्यां सीदतीति 'वेदिषत्', 'अतिथिः' अतिथिसदृशः, तदपि कथ मित्युच्यते— दुरोणेषु गृहेषु सीदतीति 'दुरोणसत्' यो यस्त मारोढुं नयति तस्य तस्य गृहे सीदति, नृषु मनुष्येषूपकारं कर्त्तुं सीदतीति 'नृषत्', वरे श्रेष्ठे राजादिगृहे सीदतीति 'वरसत्', ऋते यज्ञे वाज-पेयादौ सीदतीति 'ऋतसत्', सूर्यं वोढुं व्योमनि आकाशे सीदतीति 'व्योमसत्'। "अप्सुयोनिर्वा अश्वः"-इतिश्रुतेः * अश्वो जातैरश्वैरुपेतत्वात् 'अब्जाः', गोशब्दवाच्याद् वज्रात् जायत इति 'गोजाः', एतच्च "स्फ्यस्तृतीयम्ॐ रथस्तृतीयम्"-इत्याम्नातम् †, ऋतार्थं यज्ञार्थं जातत्वात् 'ऋतजाः' अद्रिभ्यो दृढकाष्ठेभ्यो जातत्वात् 'अद्रिजाः'। ईदृशो रथो 'बृहत्' प्रौढं राजसूयाख्यम्, 'ऋतं' यज्ञं सम्पादयत्विति रथपक्षेऽर्थः॥

सूर्यपक्षे त्वय मर्थः— हन्ति गच्छतीति 'हंसः' आदित्यः, शुचौ निर्मले मण्डले सीदतीति 'शुचिषत्', 'वसुः' निवास-हेतुः, प्राणात्मकवायुरूपेणान्तरिक्षे सीदतीति 'अन्तरिक्षसत्', अग्निरूपेण वेद्यां सीदतीति वेदिषत्, अप्सु सूक्ष्मभूतेषु जायत इति 'अब्जाः', गोषु पृथिवीप्रधानेषु स्थूलभूतेषु जायत इति 'गोजाः', ऋतौ सत्यभूते मण्डले जायत इति 'ऋतजाः', अद्रौ पाषाणे मेघे वा उदकरूपेण जायत इति 'अद्रिजाः', 'ऋतम्'

---

* इहैवोपरिष्टात् ( १३का० १प्र० ११ब्रा० १६क० ) द्रष्टव्यम्।

† तै० सं० ५. २. ६. ४ द्रष्टव्यम्, गत मिह पुरस्तादपि।

"ऋ गतौ" * सर्वत्र व्याप्तं ज्ञानात्मकम्, 'हृहत्' "हृहि वृद्धौ" † प्रवृद्धम्, परमानन्दलक्षण मिति ॥

मन्त्रगतं छन्दोविशेषं प्रशंसति— "एता मतिच्छन्दस मिति। इंसमन्त्रस्यातिजगतीच्छन्दः, सा च गायत्र्यादीनि छन्दांसि अतिक्रम्य वर्त्तत इति तस्या अतिच्छन्दस्त्वम्। सर्वासा मेव छन्दसां तत्रान्तर्भावात् सर्वच्छन्दोरूपत्वम्, तस्मात् सर्वच्छन्दोऽतिक्रमणात् 'एतां' जपित्वा, अवरोहन्तम् 'एनम्' यजमानम् 'अनु' 'पाप्मा' 'नावतिष्ठति' नावरोहति, पाप्मान मतिक्रामेदित्यर्थः ॥ २२ ॥

सयन्तृकस्य रथस्य रथवाहनेऽनसि स्थापनं विधातुं यन्तुरवस्थानं निषेधति— "तन्नेति ‡। सम्यक् प्रग्रहं गृह्णातीति 'सङ्ग्रहीता' सारथिः सः, 'तं' यजमानम् 'अनु' 'नावतिष्ठेत्' नावरोहेत्। तत्र कारण माह— "नेदिति। सुन्वन् यं लोकं प्राप्नोति, तं लोकं सारथिरपि न प्राप्नुयादिति। "तं सरथ मिति। 'रथवाहने' रथस्थापनसाधने 'अनसि' § 'तम्' सयन्तृकं 'रथम्' 'आदधाति' ‖ निदध्यात्। तथाच तैत्तिरीयकम्— "यदुभौ सहावतिष्ठेतां समानं लोक मियातां सह सङ्ग्रहीत्रा रथवाहने रथ मादधाति सुवर्गादेवैनं लोका-

---

* भ्वा० प० ८३६ धा०।

† भ्वा० प० ७३५ धा०।

‡ का० श्रौ० सू० १५. ६. २७। रथवाहणपाठोऽप्यनेकत्र।

§ 'रथवाहनशब्दस्याप्रसिद्धत्वात् स्वय मेव तस्यार्थ माह (कर्कः)' —"अनस्तत्कर्म"—इति का० श्रौ० सू० १५. ६. २८।

‖ मूले 'आदधति'—इति श्रूयते।

दन्तर्दधाति"-इति *। "तत इति। 'ततः' पश्चाद् यन्ता 'अवाङ्' अवाङ्मुखः सन् 'अपप्रवते' "प्रुङ् गतौ"-इति † धातुः, अवरोहतीत्यर्थः। तथाच सूत्रितम्— "शालाया दक्षिणतो ऽपप्रवते यन्ता"-इति ‡॥ २३॥

पूर्वं स्वस्य भ्रातुरर्थाय गोःस्थापनकाले पूर्वाग्निवहनस्याहवनीयस्योत्तरतः स्थापनं सूत्रकृतोक्तम्—"गवां शत मधिकं वा स्वस्याहवनीयस्योत्तरतः स्थापयति, पूर्वाग्निवहनञ्च तान्नि"-इति §, तदिदानीं विधत्ते—"उत्तरेणाहवनीय मिति। "पूर्वाग्निरिति। शान्तिपौष्टिकार्थीयोऽग्निः 'पूर्वाग्निः', 'सः' अनसा 'उद्धृतः' ऊर्ध्वं हृतः स्थापितो 'भवति'॥

अथ रथवाहनस्य दक्षिणे अंशे शतमानयोरासञ्जनम्, वर्त्मनि औदुम्बर्याः शाखाया उपगूहनञ्च विधत्ते— "स रथेति। 'दक्षिणम्' 'अनुव्यन्तं' प्रान्त मनु 'प्रवृत्तौ' वर्तुलौ 'शतमानौ' शतमानपरिमितौ द्वौ रुक्मौ 'आबध्नाति' आसजेत् ‖॥ २४॥

"औदुम्बरी मिति। तयोः शतमानयोरन्यतरस्योपस्पर्शनं समन्त्रकं विधत्ते — "तयोरिति। कात्यायनस्तु मन्त्रद्वयं कृत्वा उभयोरपि स्पर्शने विनियोग मुक्तवान्। "उपस्पृशति शतमानावियदसीत्येकं युङ्क्ष्वीत्यपरम्"-इति ¶। 'इयदसि' एतावत्परिमाणोऽसि।

---

* तै० ब्रा० १. ७. ८. ६।

† भा० धा० ६५७ धा०।

‡ का० श्रौ० सू० १५. ६. २८।

§ का० श्रौ० सू० १५. ६. १३, १४। पूर्वमोद्धृत मिदम् (२८६पृ०)।

‖ का० श्रौ० सू० १५. ६. ३०, ३१।

¶ का० श्रौ० सू० १५. ६. ३२।

अत्र तत्परिमाणं ह्रस्वेनाभिधीयते; स्वल्पपरिमितत्वात्। 'आयुरसि' आयुःस्वरूपोऽसि; "आयुर्हिरण्यम्"-इति श्रुतेः *। तस्मात् 'आयुर्मयि धेहि'; यो हि यदात्मको भवति, स एव तद् दातुमर्हति। 'युङ्ङसि' "युजिर् योगे" † यज्ञं युनक्तीति 'युङ्', तथाविधः 'असि'। 'वर्चः' तेजः 'असि'। तस्माद् 'वर्चो मयि धेहि' ‡। मन्त्रस्यार्थं सङ्कलय्याह— "तदायुर्वर्च इति ॥ २५ ॥

शाखाया उपस्पर्शनं समन्त्रं विधत्ते— "अथौदुम्बरीमिति §। 'ऊर्क्' अन्नम् 'असि'। तस्मात् 'मयि' 'ऊर्जम्' अन्नं 'धेहि' इति ‖। एतयोर्दानं विधत्ते— "तस्यैतस्येति। ब्रह्मणे दानं प्रशंसति— "ब्रह्मा हि यज्ञ मिति ¶ ॥ २६ ॥

विधत्ते— "अग्रेण मैत्रेति। मैत्रावरुणधिष्ण्यस्य पूर्वभागे व्याघ्रचर्मदेशे मित्रावरुणदेवत्या 'पयस्या' आमिक्षा 'निहिता भवति'। तस्यां यजमानबाह्वोरवहरणं विधत्ते— "ता अस्य बाहू इति **। 'अस्य' सुन्वतो 'बाहू', 'ताम्' 'अभि'-लक्ष्य 'उपावरोहति' प्रसारयति। हे 'बाहू!' 'वीर्यकृतः' वीर्यकारिणः 'इन्द्रस्य' यजमानस्य सम्बन्धिनौ 'वां' युवां ( बाहू ) 'अभ्युपा-

---

* तै० ब्रा० १. ७. ६. ३।

† रु० उ० ७ धा०।

‡ वा० सं० १०. २५. १; २।

§ का० श्रौ० सू० १५. ६. ३२ क।

‖ वा० सं० १०. २५. ६।

¶ का० श्रौ० सू० २५. ५. ३२ ख।

** का० श्रौ० सू० १५. ६. ३४।

वहरामि' 'अभि'-लक्ष्य स्थापयामि *। बाहुप्रक्षेपं प्रशंसति— "पशूनां वा इति। पयस्यायाः पशुरसात्मकत्वात् पशुरस मभि-लक्ष्य बाहू स्थापितवान् भवतीति। पयस्याया मैत्रावरुणत्वं प्रशंसति— "तद्यन्मैत्रावरुणीति ॥ २७ ॥ ५ † [ ४. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थाध्याये तृतीयं ब्राह्मणम् ॥

## ॥ इति पञ्चमकाण्डे तृतीयः प्रपाठकः ‡ ॥

---

* मन्त्र एषः— वा० सं० १०. २५. ७।

† एतद्ब्राह्मणविहितः सर्वोऽप्यर्थः तै० सं० १. ८. १५, तै० ब्रा० १. ७. ६ अनुवाके च द्रष्टव्यः।

‡ इत उत्तर मिह— 'कण्डिकाः ११६'—इति क, 'कण्डिका-सङ्ख्या ११६'—इति ख, ग, घ। तत्र १ब्रा० २८क०, २ब्रा० ३७क०, ३ब्रा० १७क०, ४ब्रा० १०क०, ५ब्रा० २७क०। एतासां सङ्कलनया पञ्चसु ब्राह्मणेषु ११६ कण्डिकाः सम्पद्यन्त इति शम् ॥

अथ

चतुर्थप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

चतुर्थाध्याये चतुर्थं ब्राह्मणम् ।

---

॥ हरिः ओँ ॥

मैत्रावरुण्या पयस्यया प्रचरति । तस्या अनिष्ट एव स्विष्टकृद् भवत्यथास्मा ऽआसन्दी माहरन्त्युपरिसद्यं वा ऽएष जयति यो जयत्यन्तरिक्षसद्यं तदेन मुपर्यासीन मधस्तादिमाः प्रजा उपासते तस्मादस्मा ऽआसन्दी माहरन्ति सैषा खादिरी व्वितृण्णा भवति येयं व्वध्रंव्यूता भरतानाम् ॥ १ ॥

ता मग्रेण । मैत्रावरुणस्य धिष्ण्यं निदधाति स्योनासि सुषदासीति शिवा मेवैतच्छग्मां करोति * ॥ २ ॥

अथाधीवास मास्तृणाति । क्षत्रस्य योनि-

---

* 'करोति'—इति क ।

रसीति तद् येव क्षत्रस्य योनिस्ता मेवैतत् करोति * ॥ ३ ॥

अथैन मासादयति। स्योना मासीद सुषदा मासीदेति शिवाꣳ शग्मा मासीदेत्येवैतदाह क्षत्रस्य योनि मासीदेति तद्यैव क्षत्रस्य योनिस्तस्या मेवैन मेतद्दधाति † ॥ ४ ॥

अथान्तराꣳसी ऽभिमृश्य जपति। निषसाद धृतव्रत इति धृतव्रतो वै राजा न वा ऽएष सर्व्वस्मा ऽइव व्वदनाय न सर्व्वस्मा ऽइव कर्मणे यदेव साधु व्वदेयात् साधु कुर्यात्तस्मै वा ऽएष च श्रोत्रियश्चैतौ ह वै द्वौ मनुष्येषु धृतव्रतौ तस्मादाह निषसाद धृतव्रत इति व्वरुणः पस्त्या-स्वेति व्विशो वै पस्त्या व्विक्ष्वित्येवैतदाह साम्रा-ज्याय सुक्रतुरिति राज्यायेत्येवैतदाह यदाह साम्रा-ज्याय सुक्रतुरिति ‡ ॥ ५ ॥

---

* 'करोति'—इति क।

† 'दधाति'—इति क।

‡ '०रिति'—इति क। '०रिति'—इति ग, घ।

अथास्मै पञ्चाक्षान् पाणावावपति। अभिभूरस्येतास्ते पञ्च दिशः कल्पन्ता मित्येष वा ऽअयानभिभूर्यत् कलिरेष हि सर्व्वानयानभिभवति तस्मादाहाभिभूरसीत्येतास्ते पञ्च दिशः कल्पन्ता मिति पञ्च वै दिशस्तदस्मै सर्व्वा एव दिशः कल्पयति * ॥ ६ ॥

अथैनं पृष्ठतस्तूष्णी मेव दण्डैर्घ्नन्ति। तं दण्डैर्घ्नन्तो दण्डवध † मतिनयन्ति तस्माद्राजादण्ड्यो यदेनं दण्डवध ‡ मतिनयन्ति § ॥ ७ ॥

अथ व्वरं वृणीते। यद्धु ह वै कं च सुषुवाणो व्वरं वृणीते सोऽस्मै सर्व्वः समृध्यते तस्माद्वरं वृणीते ॥ ८ ॥

स ब्रह्मन्नित्येव प्रथम मामन्त्रयते। ब्रह्म प्रथम मभिव्याहराणि ब्रह्मप्रसूतां व्वाचं व्वदानीति तस्मात् ब्रह्मन्नित्येव प्रथम मामन्त्रयते त्वं ब्रह्मासीतीतरः प्रत्याह सवितासि सत्यप्रसव

* 'कल्पयति'—इति क। †, ‡ 'दण्डबध'—इति ग।

§ 'मतिनयन्ति'—इति क।

इति व्वीर्यं मेवास्मिन्नेतद्दधाति सवितार मेव सत्यप्रसवं करोति ॥ ९ ॥

ब्रह्मन्नित्येव द्वितीय मामन्त्रयते। त्वं ब्रह्मासीतीतरः प्रत्याह व्वरुणोऽसि सत्यौजा इति व्वीर्यं मेवास्मिन्नेतद्दधाति व्वरुण मेव सत्यौजसं करोति ॥ १० ॥

ब्रह्मन्नित्येव तृतीय मामन्त्रयते। त्वं ब्रह्मासीतीतरः प्रत्याहेन्द्रोऽसि व्विशौजा इति व्वीर्यं मेवास्मिन्नेतद्दधातीन्द्र मेव व्विशौजसं करोति ॥ ११ ॥

ब्रह्मन्नित्येव चतुर्थं मामन्त्रयते। त्वं ब्रह्मासीतीतरः प्रत्याह रुद्रोऽसि सुशेव इति तत् वीर्याण्येवास्मिन्नेतत् पूर्व्वाणि दधात्यथैन मेतच्छमयत्येव तस्मादेष सर्व्वस्येशानो मृडयति यदेनꣳ शमयति ॥ १२ ॥

ब्रह्मन्नित्येव पञ्चम मामन्त्रयते। त्वं ब्रह्मासीतीतरोऽनिरुक्तं प्रत्याह परिमितं वै निरुक्तं तत् परिमित मेवास्मिन्नेतत् पूर्व्वं व्वीर्यं दधात्यथाऽनिरुक्तं प्रत्याहापरिमितं वाऽअनिरुक्तं

तदपरिमित मेवास्मिन्नेतत् सर्व्वं व्वीर्यं दधाति तस्मादवानिरुक्तं प्रत्याह* ॥ १३ ॥

अथ सुमङ्गलनामानꣳ ह्वयति। बहुकार श्रेयस्कर भूयस्करेति य एवन्नामा भवति कल्याण मेवैतन्मानुष्यै व्वाचो व्वदति† ॥ १४ ॥

अथास्मै ब्राह्मण स्फ्यं प्रयच्छति। अध्वर्युर्व्वा यो व्वास्य पुरोहितो भवतीन्द्रस्य व्वज्रोऽसि तेन मे रध्येति व्वज्रो वै स्फ्यः स एतेन व्वज्रेण ब्राह्मणो राजान मात्मनो ऽबलीयाꣳसं कुरुते यो वै राजा ब्राह्मणादबलीयानमित्रेभ्यो वै स बलीयान् भवति तदमित्रेभ्य एवैन मेतद् बलीयाꣳसं करोति ॥ १५ ॥

तꣳ‡ राजा राजभ्रात्रे प्रयच्छति। इन्द्रस्य व्वज्रोऽसि तेन मे रध्येति तेन राजा राजभ्रातर मात्मनो ऽबलीयाꣳसं कुरुते ॥ १६ ॥

तꣳ राजभ्राता सूताय वा स्थपतये वा

---

* 'प्रत्याह'–इति क।

† 'वदति' इति क।

‡ 'तꣳ'–इति क, ग।

प्रयच्छति। इन्द्रस्य व्वज्रो ऽसि तेन मे रध्येति तेन राजभ्राता सूतं वा स्थपतिं व्वात्मनो ऽबलीयाꣳसं कुरुते ॥ १७ ॥

तꣳ सूतो वा स्थपतिर्व्वा ग्रामण्ये प्रयच्छति। इन्द्रस्य व्वज्रो ऽसि तेन मे रध्येति तेन सूतो वा स्थपतिर्व्वा ग्रामण्य मात्मनो ऽबलीयाꣳसं कुरुते ॥ १८ ॥

तं ग्रामणीः सजाताय प्रयच्छति। इन्द्रस्य व्वज्रो ऽसि तेन मे रध्येति तेन ग्रामणीः सजात मात्मनो ऽबलीयाꣳसं कुरुते तद्यदेवꣳ सम्प्रयच्छन्ते नेत्पापवस्यस मसद्यथापूर्व्वं मसदिति तस्मादेवꣳ सम्प्रयच्छन्ते * ॥ १९ ॥

अथ सजातस्य प्रतिप्रस्थाता च। एतेन स्फ्येन पूर्व्वाग्नौ शुक्रस्य पुरोरुचाधिदेवनं कुरुतोऽत्ता वै शुक्रोऽत्तार मेवैतत् कुरुतः † ॥ २० ॥

अथ मन्थिनः पुरोरुचा व्विमितं व्विमि-

---

* 'सम्प्रयच्छन्ति'—इति क। 'सम्प्रयच्छन्ते'—इति ख।

† 'कुरुतः'—इति ग, घ।

नुतः। आग्यो वै मन्थी तद्दृत्तार मेवैतत् कृत्वा-थास्मा ऽएतदाद्यं जनयतस्तस्मान्मन्थिनः पुरोरुचा व्विमितं व्विमिनुतः * ॥ २१ ॥

अथाध्वर्युः। चतुर्गृहीत माज्यं गृहीत्वाधि-देवने हिरण्यं निधाय जुहोत्यग्निः पृथुर्द्धर्मणस्पति-र्जुषाणो ऽअग्निः पृथुर्द्धर्मणस्पतिराज्यस्य व्वेतु स्वाहेति † ॥ २२ ॥

अथाक्षान्निवपति। स्वाहाकृताः सूर्यस्य रश्मिभि-र्यतध्वꣳ सजातानां मध्यमेष्ठ्यायेत्येष वा ऽअग्निः पृथुर्यद्धिदेवनं तस्यैते ऽङ्गारा यदक्षास्त मेवै-तेन प्रीणाति तस्य ह वा ऽएषानुमता गृहेषु हन्यते यो वा राजसूयेन यजते यो वैतदेवं व्वेदैतैष्वक्षेष्वाह गां दीव्यध्व मिति पूर्वाग्निवाहौ दक्षिणा ‡ ॥ २३ ॥

*अथाहाग्नये स्विष्टकृते ऽनुब्रूहीति। तद्य-दन्तरेणाहुती ऽएतत् कर्म क्रियत ऽएष वै प्रजा-

* 'व्विमिनुतः'—इति ग, घ।

† 'स्वाहेति—इति क। 'स्वाहेति'—इति ग, घ।

‡ 'दक्षिणा'—इति ग, घ।

पतिर्य्य एष यज्ञस्तायते यस्मादिमाः प्रजाः प्रजाता एतस्वेवाप्येतर्ह्यनु प्रजायन्ते तदेनं मध्यत एवैतस्य प्रजापतेर्द्दधाति मध्यतः सुवति तस्मा-दन्तरेणाहुती ऽएतत् कर्म क्रियत ऽआश्राव्या-ह्याग्निꣳ स्विष्टकृतं यजेति व्वषट्कृते जु-होति ॥ २४ ॥

अथेडा मादधाति * । उपहूताया मिडाया मप उपस्पृश्य माहेन्द्रं ग्रहं गृह्णाति माहेन्द्रं ग्रहं गृहीत्वा स्तोत्र मुपाकरोति तꣳ स्तोत्राय प्रमी-वति स उपावरोहति सोऽन्ते स्तोत्रस्य भवत्यन्ते यस्त्वस्य ॥ २५ ॥ १ ॥

॥ इति चतुर्थप्रपाठके प्रथमं ब्राह्मणम् [४. ४.] ॥

अथ पयस्यायाः प्रचारं विधत्ते— "मैत्रावरुणेति । "तस्या अनिष्ट इति । 'तस्याः' पयस्यायाः स्विष्टकृत् 'अनिष्टः' अहुतो भवति, प्राक् स्विष्टकृत इत्यर्थः ॥

विधत्ते— "अथास्मा आसन्दी मिति । आसन्दीलक्षणं

---

* 'मादधाति'—इति क ।

पूर्वं मुक्तम्। आसन्द्याहरणं प्रशंसति— "उपरिसद्य मिति। एतद् वाक्यं वाजपेये व्याख्यातम् *। तस्याः द्रव्यविशेषगुणान्तरं वाक्यभेद मङ्गीकृत्य विधत्ते— "सैषा खादिरीति। 'विवृण्णा' सच्छिद्रा भवेत्। तस्या आसन्द्या रज्जुव्यूतत्व मस्ति, तत्र यजमानविशेषेण रज्जुविशेषं दर्शयति— "येय मिति। 'वर्ध्रव्यूता' वर्ध्राश्चर्मरज्जवः, ताभिर्व्यूता सम्बद्धा भवति 'भरतानाम्'; अन्येषान्तु रज्जुमात्रम्। कात्यायनो निर्विशेषं सूत्रयामास— "खादिरी मासन्दीं रज्जुव्यूताम्"-इति † ॥ १ ॥

तस्या निधानप्रदेशं विधत्ते— "ता मग्रेणेति। मन्त्रं विधत्ते— "स्योनेति ‡। हे आसन्दी! 'स्योना' सुखरूपा 'असि', 'सुषदा' सुषदनयोग्या 'असि'। मन्त्रं विवृणोति— "शिवा मिति। 'शग्मां' सुखकरीम् ॥ २ ॥

विधत्ते— "अथाधीवास मिति §। 'अधिवासः' आस्तरणम्, चित्रकम्बलादिकम्। "वस्त्रेति ‖। एष मन्त्रो व्याख्यातः ¶ ॥ ३ ॥

अस्यां मुन्वत उपवेशनं समन्त्रकं विधत्ते— "अथैन मिति। 'आसादयति' उपवेशयतीत्यर्थः **। हे यजमान!

---

* प्र० १. ६. २२ ( १०४ पृ० ३ पं० ) द्रष्टव्यम्।

† का० श्रौ० सू० १५. ७. १। 'रज्जूताम्'—इति तत्र मुद्रितपाठः।

‡ वा० सं० १०. २६. १।

§ का० श्रौ० सू० १५. ७. २।

‖ वा० सं० १०. २६. २।

¶ प्र० ३. २. २२. ( २४७ पृ० ४ पं० ) द्रष्टव्यम्।

** का० श्रौ० सू० १५. ७. ३।

'स्योनां' सुखरूपाम् आसन्दीम् 'आसीद' आरोह, सुखसाधनयोग्या मधितिष्ठेत्यर्थः। "चत्रस्य योनि मासीदेति, उपवेशनमन्त्रस्योत्तरभागः। अधीवासस्तरणे 'क्षत्रस्य योनिः' अधीवासः, त मारोहेत्यर्थः * ॥ ४ ॥

हृदयदेशादिस्पर्शनपूर्वकं जपं विधत्ते— "अथान्तरांस इति। 'अन्तरांसे' अंसमध्ये 'अभिमृश्य' जपेत् †।

मन्त्रस्याय मर्थः— अयं यष्टा 'धृतव्रतः' स्वीकृतयज्ञः, नियमितवचनादिव्यापारो 'वरुणः' अनिष्टनिवारको भूत्वा 'निषसाद' अस्या मासन्द्या मुपरि देशे। 'पस्त्यासु' बहुषु वैरिगृहेषु, 'विक्षु' प्रजासु चागत्य साम्राज्यं कर्त्तुं 'सुक्रतुः' शोभनसङ्कल्पो भवतु ‡ ॥

मन्त्रं प्रतिपाद मनूद्य व्याचष्टे — "धृतव्रतो वै राजेति। धृतव्रतत्वं दर्शयति— "न वा एष इति। 'एषः' सन्वन् 'सर्वस्मै' 'वदनाय' वाक्याय, असम्बद्धप्रलापायेत्यर्थः। तथा अनुपयुक्तकर्मणे वा योग्यो भवति। कस्मै योग्य इति तदाह— "यदेवेति। तस्मै साधुवदनाय साधुकर्मणे च 'एषः' सन्वन् राजा, 'श्रोत्रियश्च' ब्राह्मणः, उभावर्हौ भवतः। एतयोर्नियतव्रतत्व माह— "एतौ ह वा इति। 'मनुष्येषु' मध्ये 'एतौ' एव 'धृतव्रतौ' §। श्रोत्रियोऽपि न बहुभाषी नासाधुकर्मकारी। 'पस्त्या'-शब्दार्थ माह— "विशो वा इति ॥ ५ ॥

---

* वा० सं० १०. २६. ३। अधिवास इति पाठस्त्वसाधुः।

† का० श्रौ० सू० १५. ७. ४।

‡ वा० सं० १०. २७. १।

§ इतः किञ्चित्पाठो विलुप्त इति गम्यते।

यजमानहस्ते पञ्चाक्षावापं च विधत्ते— "अथास्मा इति *। अक्षा नाम कपर्द्दकाः सुवर्णनिर्मिताः, विभीदकफलानि सौवर्णानि वेत्येके †। ते चाक्षा द्यूतस्थाने निवपनीयाः ‡। तेषां चतुर्णां मक्षाणां 'कृत'-सञ्ज्ञा, पञ्चानां (!) 'कलि'-सञ्ज्ञा §। तथा च शाखान्तरे स्तोमसङ्ख्यायां कृतादिव्यवहारः कृतः— "ये चत्वारः स्तोमाः कृतं तत्, अथ ये पञ्च कलिः सः"-इति। यदा पञ्चाप्यक्षा उत्ताना ‖ भवन्ति, तदा देवितुर्जयो भवति, पञ्चसु त्वेकरूपासु जय एव भविष्यतीत्यन्यतोक्तम्। अतः कलेः सर्वाक्षाभिभावुकत्वात्, सुन्वतोऽपि जयापेक्षत्वात् पञ्चाक्षनिवाप इत्यर्थः। तथा च मन्त्रे कलिर्वा तत्सम्बन्धात् यजमानो वा उच्यते। हे यजमान! 'अभिभूः' इतरेषा मक्षाणा मभिभविता भवसि। तदर्थम् 'एताः पञ्च दिशः कल्पन्ताम्' स्वाधीना भवन्त्विति॥

मन्त्रं व्याचष्टे— "एष वा अयानिति ¶। अयशब्दोऽक्षवाची; 'कलिर्हि सर्वान् अयान् अभिभवति'; अधिकसङ्ख्यत्वात्। एषोऽपि यजमानस्तत्सम्बन्धादभिभावुको भवतीत्यर्थः॥

---

* का० श्रौ० सू० १५. ७. ५।

† 'सौवर्णा वा'-इति ज।

‡ तै० ब्रा० १. ७. १० द्रष्टव्यम्। आपस्तम्बश्चाह— "अक्षावापोऽधिदेवन मुद्धत्यावोक्ष्याक्षान् निवपेत् सौवर्णान् परःशतान् परःसहस्रान् वा"--इति श्रौ० सू० १८. १८, १६. १६, १।

§ का० श्रौ० सू० १५. ७. १८, १६।

‖ 'उत्पन्ना'—इति च, छ।

¶ वा० सं० १०. २८. १।

पञ्चदिग्विजयसङ्कल्पसिद्धि मेव दर्शयति— 'पञ्च वै दिश इति ॥ ६ ॥

विधत्ते अथैन मिति। 'दण्डैः' यज्ञियवृक्षकाष्ठैः 'एनं' सुन्वन्तं 'पृष्ठतः' पश्चाद्भागे 'तूष्णीम्' अमन्त्रकं 'घ्नन्ति' हन्युः। अत्र सूत्रम् कृत्स्न ममन्त्रक मवहननं शाखान्तरीयमन्त्रञ्च विकल्पेन दर्शयामास— "पश्चादेनं यज्ञियवृक्षदण्डैः शनैः स्तूष्णीं घ्नन्ति पाप्मानं तेऽपहन्मोऽति त्वा वधं नयामीति वा"-इति *। "तं दण्डैरिति। सुन्वतो दण्डवधेन अन्यकर्त्तृकस्य दण्डवधस्य प्रापण मेव कृतवन्तो भवन्ति, तस्माद् राज्ञोऽदण्ड्यभावः †। यथा राजा स्वा अपराद्धाः ‡ प्रजा दण्डयति, एवं स्वयं न दण्ड्य इत्यर्थः ॥ ७ ॥

विधत्ते— "अथ वर मिति। 'वरं' 'वृणीते' याचते, यजमानः कर्त्ता। वरवरणं प्रशंसति— "यं ह वै कञ्चेति ॥ ८ ॥

कात्यायनः— "वरं वृत्वा ब्रह्मन्नित्यामन्त्रयते पञ्चकृत्वः, प्रत्याह व्यत्यासꣳ सविता वरुण इन्द्रो रुद्र इति, त्वं ब्रह्मासीत्यादिभिः"-इति §। अस्यार्थः— यजमानो वरं वृत्वा ब्रह्मन्निति पदं पञ्चकृत्वो वदेत्। तं सुन्वन्तं सवितृवरुणेन्द्ररुद्रवाचकैस्त्वं ब्रह्मासीत्यादिभिश्चतुर्भिर्मन्त्रैरितरः प्रतिवदेत्, पञ्चमामन्त्रणे केवलं त्वं ब्रह्मासीति प्रतिवदेदिति। तदिदं क्रमेण विधत्ते— "स ब्रह्मन्निति। 'प्रथमं' पूर्वम्। "प्रथम मिति, स्पष्टोऽर्थः ॥

---

* का० श्रौ० सू० १५. ७. ५ ख, ६।

† 'राज्ञोदण्ड्यत्वाभावः'—इति क। ‡ 'अपरुद्धाः'—इति ज।

§ का० श्रौ० सू० १५. ७. ७, ८।

प्रथमप्रतिवचनमन्त्रस्याय मर्थः हे यजमान! 'त्वं ब्रह्मा असि', 'सत्यप्रसवः' यथार्थाभ्यनुज्ञः 'सविता असि' 'इति' * प्रथमामन्त्रयितारं सुन्वन्तं ब्रह्मा प्रतिब्रूयात्, सवित्रादिवाचकैः मन्त्रैः प्रतिवचनेन यजमानं तत्तद्देवतात्मकत्वेन कृतवान् भवतीत्यर्थः ॥ ( ९ )

द्वितीयादिषु मन्त्रेषु त्वं ब्रह्मासीति पूर्ववत्। 'सत्यौजाः' सत्यवीर्यः, 'वरुणः' 'असि' †। 'विक्षु' प्रजासु 'ओजः' बलं यस्य, यद्वा विश एवौजो यस्येति 'विश्वौजाः' तादृशः 'इन्द्रः' 'असि'। देवतापक्षे मरुतो विशः मदात्मकाः, राजपक्षे प्रजाः ‡। 'सुशेवः' सुमुखः 'रुद्रः' 'असि' §। रुद्रस्य सुशेवत्वं प्रशंसति— "तद्वीर्याणीति। ईशानस्य सर्वसुखकरत्वात् पूर्वमन्त्रप्रतिवचनेन यजमाने स्थापितानि वीर्याणि शमयति; वीर्यवन्तम् 'एनं' रुद्रोऽसि सुशेव इति प्रतिपादनात् ॥ ( १०, ११, १२ )

यजमानकर्तृकपञ्चमामन्त्रणस्य प्रतिवचने विशेषं दर्शयति— "ब्रह्मन्नित्येवेति ‖। "त्वं ब्रह्मासीति। ब्रह्मन्नित्यामन्त्रणे। 'त्वं ब्रह्मासि' 'इति' एतावदेव 'अनिरुक्तम्'; कस्य चिदपि देवताविशेषस्याप्रतिपादकं वाक्यं प्रतिवदेत्। तत् प्रशंसति— "अपरिमित मिति। 'निरुक्तम्' निःशेषेण वक्तुं योग्यं निरुक्तम् 'परिमितम्', तत्पूर्वमन्त्रेषु "सविताऽसि"-इत्यादिषु कृतम्;

---

* वा० सं० १०. २८. २।

†, ‡, § वा० सं० १०. २८. ३, ४, ५।

‖ "आदिनैवान्त्यम्"—इति का० श्रौ० सू० १५. ७. ६। 'त्वं ब्रह्मासीत्यस्यादिरिति सञ्ज्ञा, अन्त्यं पञ्चमं प्रतिवचनम्; 'आदिना' ब्रह्मासीत्येनावनेव मन्त्रेण ब्रह्मणा कर्त्तव्यम्'—इति तद्वृत्तिरिहालोच्या।

यत्रानिरुक्तप्रतिवचनेन यजमाने अपरिमितं वीर्यं निहितवान् भवतीति ॥ १३ ॥

विधत्ते— "अथ सुमङ्गलेति *। सुमङ्गलनामान माह्वय बहुकारेतिमन्त्रेण † यजमानं कीर्त्तयेत्। पदत्रयं सम्बुध्यन्तम्। बहु करोतीति बहुकार:। "कर्म्मण्यण्" ‡। श्रेय: करोतीति श्रेयस्कर:। "कृञो हेतुताच्छील्यानुलोम्येषु"–इति टच् §। भूयो भूयो महत्तरं करोतीति भूयस्कर:। "य एवमिति। 'य:' पुरुषो लोके प्रियङ्करनामा 'भवति', स 'मानुष्ये' मानुष्या: 'वाच:' 'कल्याणं' सर्वेषां प्रिय मेव 'वदति' ॥

अत्र कात्यायन: उत्तरतन्त्रं सङ्गृह्य दर्शितवान्— "स्फ्य मस्मै प्रयच्छति पुरोहितोऽध्वर्युर्वा इन्द्रस्य वज्र इति, राजा राजभ्राता सूतस्थपत्योरन्यतरो ग्रामणी: सजातस्तैवं पूर्व:-पूर्व उत्तरस्मै"–इति ‖ ॥ १४ ॥

तदिदं क्रमेण विधत्ते— "अथास्मा इत्यादिना। 'अस्मै' सुन्वते 'स्फ्यं' 'ब्राह्मण:' दद्यात्। हे स्फ्य! 'इन्द्रस्य वज्रोऽसि'। "स्फ्यस्तृतीयं रथस्तृतीयम्"–इतिश्रुते: ¶। तेन कारणेन 'मे' मम 'रध्या'। "रध्यतिर्वशगमने" **। मदीयाय

---

* का० श्रौ० सू० १५. ७. १०।

† वा० सं० १०. २८. ६।

‡ पा० सू० ३. २. १।

§ पा सू० ३. २. २०।

‖ का० श्रौ० सू० १५. ७. ११. १२।

¶ तै० सं ५. २. ६. ४।

** निरु० १०. ४. ३। "रध हिंसासंराध्यो:" इति दि० प० ८७ धा०।

यजमानाय सर्वं वशीकुरु। यद्वा, 'रध्या' द्यूतस्थानपरिलेखन-रूपं कार्यं साधयेति * ॥

मन्त्रस्य तात्पर्य माह— "वज्रो वा इति। अय मर्थः— ब्राह्मणो राज्ञे वज्ररूपस्फ्यप्रदानेन स्वस्मादपि राजानं बल-वत्तरं कृतवान् भवति। तदेवाह— "यो वा इति। 'यः' खलु राजन्यो 'ब्राह्मणात्' हीनबलः, 'सः' 'अमित्रेभ्यः' शत्रुभ्यो बलवत्तरः [ न ] भवति; तस्मात् ब्राह्मणः स्फ्यप्रदानेन शत्रुभ्यो-ऽधिकबलं कृतवान् भवतीत्यर्थः ॥

एव मुत्तरत्रापि योज्यम्। सूतग्रामणीसजाता व्याख्याताः† ॥

राजादिषु सजातीयेषु स्फ्यप्रदानं सम्भूय प्रशंसति— "तद्य-देव मिति। 'पापवस्यसं' पापिष्ठं कर्म 'नेदसत्' न भवेत्, किन्तु यथापूर्वं भवेदिति बुद्ध्या प्रदान मित्यर्थः ॥ १५, १६, १७, १८, १९ ॥

अथ द्यूतस्थानकरणं च सविशेषं समन्त्रकञ्च विधत्ते— "अथ सजातश्चेति। आहवनीयस्योत्तरप्रदेशे स्थापितः स पूर्वाग्निः, तस्मिन् तत्संसृष्टम् अधिदीव्यन्त्यत्रेति 'अधिदेवनम्' द्यूतभूमिः, तां शुक्रग्रहस्य पुरोरुचा "तं प्रत्नथा पूर्वथा विश्वथेमथा"-इत्यनया ‡ 'कुरुतः'। अत एव सूत्रम्— "प्रत्तेन सजातः प्रतिप्रस्थाता च पूर्वाग्निसहितां शुक्रपुरोरुचा द्यूत-भूमिं कुरुतः"-इति §।

चतुर्थकाण्डे द्वितीयेऽध्याये शुक्रामन्थिग्रहयोरत्ताद्यभावेन

* वा० सं० १०. २८. ७।

† पुरस्तात् (प्र०२ ब्रा०५) २६२-२८१ पृ० द्रष्टव्यम्।

‡ ऋ० सं० ५. ४४. १ ऋक्।

§ का० श्रौ० सू० १५. ७. १३।

स्तुतयोः पुरोरुग्द्वयं विहितम्; तदर्थस्तु तत्रैव विहित इति नेह पुनर्व्याख्यायते *। शुक्रस्यात्तृत्वात् तन्मन्त्रेण द्यूतभूमिकरणाद् यजमान मत्तारं कृतवन्तौ भवतः ॥ २० ॥

"अथ मन्थिन इति †। मन्थिग्रहपुरोरुचा "अयं वेनश्चोदयत् पृश्निगर्भाः"–इत्यनया 'विमितं' विमिन्वन्त्यत्रेति विमितं चतुर्द्वारं चतुरस्रं मण्डपं तद् 'विमिनुतः' कुरुतः। "आद्यो वा इत्यादेरय मर्थः— मन्थिन आद्यत्वात् तन्मन्त्रेण विमितकरणात् अत्तृभूताय यजमानाय आद्यं सम्पादितवन्तौ भवत इत्यर्थः ॥ २१ ॥

अथाधिदेवने हिरण्यनिधानपूर्वकं होमं समन्त्रकं विधत्ते— "अथाध्वर्युरिति ‡। यज्ञे देवानां प्रथनात् 'पृथुः', सः 'धर्मणस्पतिः' धर्मणः धारणस्य पतिः, अतो देवतोद्देशेन हूयमानं हविः 'जुषाणः' सेवमानः 'अग्निः'। 'पृथुर्धर्मणस्पतिः'– इति पुनर्वचन मादरार्थम्, विध्यनुवादाभिप्रायं वा। 'आज्यस्य' घृतस्य। कर्मणि षष्ठी। आज्यं 'वेतु' पिबतु। "वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु" §। 'स्वाहा'–इति होमार्थः ‖ ॥ २२ ॥

तत्र विमिते अक्षनिवापं समन्त्रकं विधत्ते— "अथाक्षानिति ¶। 'स्वाहाकृताः' स्वाहाकारपूर्विकया आहुत्या तर्पिताः

---

* "तयोरत्तैवान्यतरः, आद्योऽन्यतरः; अत्तैव शुक्रः, आद्यो मन्थी"–इत्यादि द्रष्टव्यम् (४ का० २ अ० १ ब्रा० ३–१०)।

†, ‡ का० श्रौ० सू० १५. ७. १५ क, ख।

§ अदा० प० ३८ धा०।

‖ वा० सं० १०. २६. १।

¶ का० श्रौ० सू० १५. ७. १६।

हे अक्षाः ! 'सजातानां' समानजन्मनां भ्रातॄणां 'मध्यमेष्ठ्याय' मध्यमप्रदेशे यजमानावस्थानाय 'सूर्यस्य रश्मिभिः' 'यतध्वम्' सङ्गता भवतेति * ॥

मन्त्रवत्कर्मकरणं प्रायेण कस्यैचिद् देवतायै भवति, अतो द्यूतभूमौ अक्षनिवापस्य देवतासम्पर्कत्वं दर्शयति— "एष वा अग्निरिति। 'अधिदेवनं' द्यूतस्थानम्। तदेवोपपादयति — "तस्येत इति। 'तस्य' अग्नेः 'अङ्गाराः' एव देवनसाधनभूताः 'अक्षाः', तस्मात् तेनाक्षनिधानेन अग्नि मेव प्रीणितवान् भवतीति ॥

अत्र यदुक्तं सूत्रे— "अक्षान् निवपति स्वाहाकृता इति, गां दीव्यध्व मित्याह"–इति, "गा मस्यानीय घ्नन्ति"–इति च †। देवनकाले गा मेव पणत्वेन कृत्वा, 'गां दीव्यध्वम्"–इति द्यूतकरणप्रैषं ब्रूयात्। ततोऽस्य पणत्वेनाङ्गीकृतां गा मानीय घ्नन्ति। "हन्तिश्च आहननमात्रो न मारणार्थः" ‡। तदिदं विधत्ते — "तस्य ह वा इति। यो राजसूयेन यजते, यो वा एतत् कर्म वेत्ति, तस्य गृहेष्वेषा' गौः 'अनुमता' अङ्गीकृता 'हन्यते'। अत्र गोप्रसक्तिं दर्शयति— "एतेष्वक्षेष्विति ॥

द्यूतकर्मणो दक्षिणां विधत्ते— "पूर्वा मिति। पूर्वाग्निम् आहवनीयं वहत इति पूर्वाग्निवाहौ तावनड्वाहौ 'दक्षिणा' §।

---

* वा० सं० १०. २८. २।

† का० श्रौ० सू० १५. ७. १६, १७, २०।

‡ इति तत्र कर्कः। 'ताडनमात्रं कुर्वन्ति न तु मारणम्'–इति तदर्थश्च प्रकाशितस्तत्रैव ( का० १५. ७. २०.)।

§ का० श्रौ० सू० १५. ७. २१।

आपस्तम्बोऽप्याह-- "पष्ठौहीं विदीव्यन्तः शौदन मुद्धवते, तदेतस्य कर्मणः पूर्वाग्निवाही दक्षिणा, तौ ब्रह्मणे देयौ" -इति * ॥

तदिदं देवनं सन्निधिबलादभिषेचनीयाख्यसोमयागमध्यगत मपि महाप्रकरणबलात् इष्टिपशुसोमयागात्मकराजसूयशेष इति गम्यते, प्रकरणेन सन्निधेर्बाध इति हि सिद्धान्तितम् † ॥ २३ ॥

अथ पयस्याखिष्टकृदिडादिकं दर्शयति— "अथाहाग्नय इति। प्रधानसौविष्टकृतहविषोर्मध्ये यद् देवनादिकं कृतम्, तत् प्रजापतिमध्यनिधानरूपेण प्रशंसति— "तद् यदन्तरेणेति। "आश्राव्याहेत्यादि, स्पष्टम् ‡ ॥ २४ ॥

"अथेडा मादधातीति, कण्डिका वाजपेये व्याख्याता ॥ २५ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम्. )

व्वरुणाद्ध वा ऽअभिषिषिचानाद्भर्गो ऽपचक्राम। व्वीर्यं वै भर्ग एष व्विष्णुर्यज्ञः सो ऽस्मादपचक्राम

---

* आप० श्रौ० सू० १८. १९. २, ३।

† "श्रुतिलिङ्गवाक्य प्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्य मर्थ विप्रकर्षात्"—इति मी० जै० सू० ३. ३. १४।

‡ सर्व मिदं तै० सं० १. ८. १६, तै० ब्रा० १. ७. १० द्रष्टव्यम् ॥

ग्रह्वद्य एषो ऽपाᳪ रसः सम्भृतो भवति * येनैन मेतदभिषिञ्चति सो ऽस्य भर्गं निर्जघान ॥ १ ॥

त मेताभिर्देवताभिरनुसमसर्पत् । सवित्रा प्रसवित्रा सरस्वत्या व्वाचा त्वष्ट्रा रूपैः पूष्णा पशुभिरिन्द्रेणास्मे बृहस्पतिना ब्रह्मणा व्वरुणेनौजसाग्निना तेजसा सोमेन राज्ञा व्विष्णुनैव दशम्या देवतयान्वविन्दत् ॥ २ ॥

तद्यदेन मेताभिर्देवताभिरनुसमसर्पत् । तस्मात् सᳪसृपो नामाथ यद्दशमे ऽहन् प्रसुतो भवति तस्माद्दशपेयोऽथो यद्दश-दशैकैकं चमस मनुप्रसृप्ता भवन्ति तस्माद्देव दशपेयः ॥ ३ ॥

तदाहुः । दश पितामहान्त्सोमपान्त्सङ्ख्याय प्रसर्पेत्तथो हास्य सोमपीथ मश्नुते दशपेयो हीति तद्वै ज्या द्वौ त्रीनित्येव पितामहान्त्सोमपान्विन्दन्ति तस्मादेता एव देवताः सङ्ख्याय प्रसर्पेत् ॥ ४ ॥

एताभिर्वै देवताभिर्व्वरुण † एतस्य सोमपीथ

* 'भवति'—इति क, ख ।

† '०र्व्वरुणः । एतस्य'—इति क, ख ।

मास्नुत । * तथो ऽएवैष एताभिरेव देवताभि-रेतस्य सोमपीथ मश्नुते तस्मादेता एव देवताः सङ्ख्याय प्रसर्पेदथ यद्दैवैषोदवसानीयेष्टिः सन्तिष्ठत ऽएतस्याभिषेचनीयस्य † ॥ ५ ॥

अथैतानि हवीꣳषि निर्व्वपति । सावित्रं द्वादशकपालं व्वाष्टाकपालं वा पुरोडाशꣳ सविता वै देवानां प्रसविता सवितृप्रसूत एव तद्वरुणो ऽनुसमसर्पत्तथो ऽएवैष एतत् सवितृप्रसूत एवानु-सꣳसर्पति तस्यैकं पुण्डरीकं प्रयच्छति ‡ ॥ ६ ॥

अथ सारस्वतं चरुं निर्व्वपति । व्वाग्वै सरस्वती व्वाचैव तद्वरुणो ऽनुसमसर्पत्तथो ऽए-वैष एतद्वाचैवानुसꣳसर्पति तस्यैकं पुण्डरीकं प्रयच्छति § ॥ ७ ॥

अथ त्वाष्ट्रं दशकपालं पुरोडाशं निर्व्वपति । त्वष्टा वै रूपाणा मीष्टे त्वष्ट्रैव तद्रूपैर्व्वरुणो ऽनु-

---

* क-ख-पुस्तकयोरिह छेदो नास्ति ।

† '०नीयस्य'—इति क ।

‡, § 'प्रयच्छति'—इति क ।

समसर्पंस्तथो ऽएवैष एतत्त्वष्ट्रैव रूपैरनुसꣳसर्पति तचैकं पुण्डरीकं प्रयच्छति * ॥ ८ ॥

अथ पौष्णं चरुं निर्व्वपति। पशवो वै पूषा पशुभिरेव तद्वरुणो ऽनुसमसर्पंस्तथो ऽएवैष एतत् पशुभिरेवानुसꣳसर्पति तचैकं पुण्डरीकं प्रयच्छति † ॥ ९ ॥

अथैन्द्र मेकादशकपालं पुरोडाशं निर्व्वपति। इन्द्रियं वै व्वीर्य मिन्द्र इन्द्रियेणैव तद्वीर्येण व्वरुणो ऽनुसमसर्पंस्तथो ऽएवैष एतदिन्द्रियेणैव व्वीर्येणानुसꣳसर्पति तचैकं पुण्डरीकं प्रयच्छति ‡ ॥ १० ॥

अथ बार्हस्पत्यं चरुं निर्व्वपति। ब्रह्म वै बृहस्पतिर्ब्रह्मणैव तद्वरुणो ऽनुसमसर्पंस्तथो ऽएवैष एतद् ब्रह्मणैवानुसꣳसर्पति तचैकं पुण्डरीकं प्रयच्छति § ॥ ११ ॥

अथ व्वारुणं यवमयं चरुं निर्व्वपति। स येनैवौजसेमाः प्रजा व्वरुणोऽगृह्णात्तेनैव तदोजसा

*, †, ‡, § 'प्रयच्छति'—इति क।

ब्रह्मणो ऽनुसमसर्पंस्तेनो ऽएवैष तदोजसानुसꣳसर्पति तत्रैकं पुण्डरीकं प्रयच्छति * ॥ १२ ॥

उपसदो दशम्यो देवताः। तत्र पञ्च पुण्डरीकाण्युपप्रयच्छति तां द्वादशपुण्डरीकाꣳस्रजं प्रतिमुञ्चते सा दीक्षा तया दीक्षया दीक्षते † ॥ १३ ॥

अथ यद् द्वादश भवन्ति। द्वादश वै मासाः संवत्सरस्य सर्व्वं वै संवत्सरः सर्व्वेणैवैन मेतद्दीक्षयति यानि पुण्डरीकाणि तानि दिवो रूपं तानि नक्षत्राणाꣳ रूपं ये व्यधकास्ते ऽन्तरिक्षस्य रूपं यानि बिसानि तान्यस्यै तदेन मेषु लोकेष्वधि दीक्षयति ‡ ॥ १४ ॥

अथ राजानं क्रीत्वा। द्वेधोपनह्य परिवहन्ति ततोऽर्द्धं मासन्द्या मासाद्य प्रचरन्त्यथ य एषो ऽर्द्धो ब्रह्मणो गृहे निहितो भवति तं मासन्द्या

---

* 'प्रयच्छति'— इति क।

† 'दीक्षते'– इति ग, घ।

‡ 'दीक्षयति'--इति ग, घ।

मासद्यातिथ्येन प्रचरति यदातिथ्येन प्रचरत्यथो-
पसद्भिः प्रचरति यदोपसद्भिः प्रचरति * ॥ १५ ॥

अथैतानि हवीꣳषि निर्व्वपति। आग्नेय मष्टाकपालं पुरोडाशꣳ सौम्यं चरुं वैष्णवं त्रिकपालं वा पुरोडाशं चरुं वा तेन यथेष्टैवं यजते ॥ १६ ॥

तदु तथा न कुर्यात्। ह्वलति वा एष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य उपसत्पथादेति तस्मादुपसत्पथादेव नेयात् ॥ १७ ॥

स यदग्निं यजति। अग्निनैवैतत्तेजसानुसꣳसर्पत्यथ यत् सोमं यजति सोमेनैवैतद्राज्ञानुसꣳसर्पत्यथ यद्विष्णुं यजति यज्ञो वै विष्णुस्तद्यज्ञं प्रत्यक्ष माप्नोति तं प्रत्यक्ष माप्त्वात्मन् कुरुते ॥ १८ ॥

स एष सप्तदशो ऽग्निष्टोमो भवति। सप्तदशो वै प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्ष माप्नोति तं प्रत्यक्ष माप्त्वात्मन् कुरुते ॥ १९ ॥

---

* 'प्रचरति'—इति क, 'प्रचरति'—इति ग।

तस्य द्वादश प्रथमगर्भाः पष्ठौह्यो दक्षिणा। द्वादश वै मासाः संवत्सरस्य संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्ष माप्नोति तं प्रत्यक्ष माप्त्वात्मन् कुरुते ॥ २० ॥

तासां द्वादश गर्भाः। ताश्चतुर्व्विꣳशति-श्चतुर्व्विꣳशतिर्वै संवत्सरस्यार्द्धमासाः संवत्सरः प्रजा-पतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्ष माप्नोति तं प्रत्यक्ष माप्त्वात्मन् कुरुते ॥ २१ ॥

ता ब्रह्मणे ददाति। ब्रह्मा हि यज्ञं दक्षि-णतोऽभिगोपायति तस्मात्ता ब्रह्मणे ददाति हिरण्मयीꣳ स्रज मुद्गात्रे रुक्मꣳ होत्रे हिरण्मयौ प्राकाशावध्वर्युभ्या मश्वं प्रस्तोत्रे वशां मैत्रावरु-णाय ऽर्षभं ब्राह्मणाच्छꣳसिने व्वाससी नेष्टा-पोतृभ्या मन्यतरतोयुक्तं यवाचित मच्छावाकाय गा मग्नीधे ॥ २२ ॥

ता वा ऽएताः *। द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा

* 'ऽएताः'—इति क, ख।

संवत्सरस्य मासाः संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तद्यज्ञं प्रत्यक्ष माप्नोति तं प्रत्यक्ष माप्त्वात्मन् कुरुते ॥ २३ ॥ २ ॥

## ॥ इति चतुर्थप्रपाठके द्वितीयं ब्राह्मणम् [४. ५.] ॥

अथ पञ्चमे ब्राह्मणे संसृपां हवींषि दशसङ्ख्याकानि *, दशपेयाख्यस्य सोमयागस्य दीक्षाः, उपसद्यागः, ऋत्विग्विशेषेण दक्षिणाश्च विधीयन्ते।

तत्र हवींषि विधातुं प्रस्तौति— "वरुणाद्ध वा इति। पूर्वं मभिषिच्यमानाद् 'वरुणात्' सकाशात् 'भर्गः' यच्छब्दपं वीर्यम् 'अपचक्राम' अपसृतम्। तदेव प्रतिपादयति— "शश्वद् य एष इति ॥ १ ॥

"त मेताभिरित्यादि। 'तम्' अपसृतम् भर्गम् 'एताभिः' वक्ष्यमाणाभिः सावित्रादिभिः 'अनुसमसर्पत्' वरुणोऽनुक्रमेण प्राप्तवान्। ताइशदेवताः क्रमेण दर्शयति— "सवित्रेति। 'प्रसवित्रा' प्रसवकारिणा 'सवित्रा' देवतया, 'अन्वविन्दत्'-इति सर्वत्रानुषङ्गः। 'वाचा' वाग्रूपया 'सरस्वत्या', 'रूपैः' उप-

* "नामधेयम्; 'तस्मात् संसृपो नाम (३ क० ३२२ पृ०)"— इति दशानाा मपि यस्याा मनुष्ठानं यथा स्यादित्येव मर्थं दशग्रहण मिति सम्प्रदायः, काण्वास्तु, यस्यां प्रवृत्तिः श्वोभूत इति मन्यन्ते"— इति कर्कः (का० १५. ८. १ सू०)। अनुपद मिहैव तृतीयकण्डीभाष्ये सर्व मिदं स्फुटतरं द्रष्टव्यम्।

लक्षितेन ‘त्वष्ट्रा’, ‘पशुभिः’ उपलक्षितेन ‘पूष्णा’, ‘यज्ञे’ यज्ञे अपसृताय वीर्याय तदधीनकरणार्थम् ‘इन्द्रेण’ ; यद्वा , विभक्ति-व्यत्ययः ; अनेन वीर्येण वीर्यवता इन्द्रेण , ‘ब्रह्मणा’ ब्राह्मण-जात्यभिमानिना ‘बृहस्पतिना’, ‘ओजसा वरुणेन’ स्त्रीयदेवता-रूपेण , अतीतकल्पगतेन वरुणेन वा, ‘तेजसा अग्निना’ तेजो-रूपेणाग्निना , ‘राज्ञा सोमेन’, ‘दशम्या’ दशसङ्ख्यापूरयित्र्या ‘विष्णुना’ ‘एव’ ‘देवतया’ ‘अन्वविन्दत्’ अपक्रान्तं वीर्य मिति ॥२॥

हविषां नाम निर्ब्रूते — “तद्यदेन मेताभिरित्यादिना । ‘तत्’ तत्र यस्मात् ‘एताभिः’ ‘अनुसमर्पत्’ सम्यक् सृप्यते प्राप्यते वीर्य माभिरग्न्यादिभिर्देवताभिरिति ‘संसृपः’ देवताः , तासां हवींष्यपि तन्नामानि * ॥

अथ दशपेयं विधातुं तच्छब्दं निर्वक्ति — “अथ यद् दशमे-ऽहन्निति । पूर्व मुक्तानि दशसंसृपां हवींषि प्रत्येक मेकैकदिने कर्तव्यानि । तथाच सूत्रम् — “दशोत्तराणि संसृपां हवींषि निर्व-पति, देवयजनान्तर मेकैकेनोत्सर्पति, शालाया मन्त्यम्”–इति † ॥

तैत्तिरीये तु स्पष्ट मुक्तम् — “अग्निना देवेन प्रथमेऽहन्ननु-प्रायुङ्क्त , सरस्वत्या वाचा द्वितीये , सवित्रा प्रसवेन तृतीये”– इत्यादिना ‡ । संसृप्शब्दवाच्याभ्यो दशभ्य इष्टिभ्य ऊर्ध्वं दश-

---

* तै० सं १. ८. १७ ; ‘सप्तदशे संसृपां हवींष्युक्तानि , अष्टा-दशे दशपेय उच्यते’—इति सप्तादशानुवाकीयसायणीयभाष्योपक्रमः । इतः पर मेतद्ब्राह्मणान्तं यावत् दशपेयप्रकरणं बोध्यम् ।

† का० श्रौ० सू० १५. ८. १ , २. ३ ।

‡ तै० ब्रा० १. ८. १. २ । तै० सं० १. ७. १७ भाष्यान्तर्गत मेतदीयं सायणव्याख्यानन्तु यत्नतोऽवलोक्यम् ।

पेयार्थं सोमाभिषवः। तथा च दशमे दिने दशपेयार्थसोमाभिषवप्रवृत्तेर्दशपेयत्वम् ॥

अथ तत्र क्रमः — दशानां संसृपां हविषां मध्ये सप्त हवींषि प्रतिदिनं क्रमेणैकैकं कृत्वा सप्तमे दिने सप्तम्या मिष्टौ अतीतायाम् (अष्टमं हविर्निर्वपेत् *) अपराह्णे दशपेयस्य द्वादशपुण्डरीकस्रक्प्रतिमोकलक्षणां दीक्षां कृत्वा तदानी मेव प्रथमा मुपसदं कृत्वा, तदन्ते संसृपा मष्टमं हविर्निर्वपेत्। अष्टमे दिने उपसदन्ते संसृपां नवमं हविर्निरुप्य, नवमे दिवसे तृतीयोपसदन्ते संसृपां दशमं हविर्निरुप्य, तस्मिन्नेवाहनि अग्नीषोमीयपशुप्रचारं कुर्यात्। दशमेऽहनि सोमोऽभिषूयते, शतशेषश्च पीयत इति दशपेयत्व मिति ॥

निर्वचनान्तरं दर्शयति— "अथ यद् दश-दशेति। एकैकस्मिन् पात्रे दशभिर्ब्राह्मणैः पातव्यः सोमरसो यस्मिन् (काले) स दशपेयो भक्षणकालः। "दशदशैकैकं चमस मनुभक्षयन्ति" —इति † हि सूत्रम् ॥ १ ॥

अत्र यदुक्तं सूत्रकृता दशपेयं प्रस्तुत्य— "पितामहदशगणं सोमपानां सङ्ख्याय सर्पेयुः सविचेति वानुवाक मुक्त्वा"—इति ‡। अस्यार्थः— भक्षणार्थं सदःप्रसर्पणकाले सोम्यानां शतसङ्ख्याकब्राह्मणानां मध्ये एकैकस्य पात्रस्य भक्षयितारो दश-दश पुरुषाः यजमानस्य दश सोमपान् 'पितामहान्' यजमानस्य पितामहः, तत्पितामह इत्येवं पितामहदशगणं सङ्ख्याय गणयित्वा प्रसर्पेयुः।

* बन्धनीचिह्नान्तर्गतपाठस्तु च-छ-पुस्तकयोरधिकः।

† का० श्रौ० सू० १५. ८. १५।

‡ श्रौ० सू० १५. ८. १६, १७।

यद्वा, "सवित्रा प्रसवित्रा सरस्वत्या वाचा"-इति * संहितोक्त-मन्त्रेण प्रसर्पणं कुर्यादिति ॥

अत्र पितामहगणनेन प्रसर्पणं पूर्वपक्षयति— "तदाहुरिति। तद् दूषयति— "तद वै ज्येति। 'ज्या' ज्यानिः, निकृष्ट इत्यर्थः। अत्रोपपत्ति माह— "द्वौ त्रीनिति। यदि पितामहान् जानीयुः, तर्हि 'द्वौ त्रीन् एव' जानीयुः, न सर्वान्; तस्मात् सवित्रादि-दशदेवताः सङ्ख्याय प्रसर्पणं कुर्यादित्यर्थः ॥ ४ ॥

तदिदं वरुणवृत्तान्तेन प्रशंसति— "एताभिर्वा इति। संसृप्शब्दवाच्यहविर्निर्वापकालं दर्शयति— "अथ यदैवैषेति। 'अभिषेचनीयस्य' एतदाख्यस्य सोमयागस्य 'उदवसानीयेष्टिः' 'यदा' 'सन्तिष्ठते' समाप्यते— ॥ ५ ॥

"अथैतानीति। 'अथ' तदनन्तरम् 'एतानि हवींषि' निर्वपेदि-त्यर्थः। तत्प्रकारः कात्यायनेन स्पष्टीकृतः— "सावित्र-सारस्वत-त्वाष्ट्र-पौष्णैन्द्र-बार्हस्पत्य-वारुणाग्नेय-सौम्य-वैष्णवानि यथोक्तं प्रतीष्टि-पुण्डरीकाणि प्रयच्छति, हिरण्मयानि वोत्तमासु तिसृषु पञ्च तेषां स्रजं प्रतिमुञ्चते तद्दीक्षो भवति"-इति †। सप्तम्यां प्राग्वंशा-गारात् सोम माहृत्यासन्द्यभिमर्शनादि करोत्युपसद्देवता हवींषि निर्वपत्युपसदं न इच्छन्निति। उक्तानां दशसङ्ख्याकानां हविषां मध्ये सप्त हवींषि पूर्व मिष्टिमन्त्रेण कृत्वा, सप्त हिरण्मय-पुण्डरीकाणि दत्त्वा, उत्तरासु तिसृषु पञ्च दत्त्वा, द्वादश पुण्डरीकस्रक्प्रतिमोकदक्षिणां दशपेयदीक्षां कृत्वा, सप्तम्यां संसृप्यागसम्बन्धिन्यां सप्तमदिने क्रियमाणायां वारुण्या मिष्टा-

* वा० सं० १०. ३०. १।

† का० श्रौ० सू० १५. ८. ४—९।

वतीतायां पूर्व मेवाभिषेचनीयदशपेययोरपि द्विधा सोमं क्रीत्वा, दशपेयार्थम् ब्रह्मागारे स्थापितं सोम माहृत्य , आसन्द्यभिमर्श-नाद्यातिथ्यान्तं कृत्वा , संसृपां हविषां मध्ये अन्यानि आग्नेय-सौम्य-वैष्णवानि त्रीणि हवींषि उपसत्प्रतिनिधित्वेन कर्त्तव्यानि । उपसदा मप्यग्निसोमविष्णुदेवता कत्वात् , तथाप्यग्नि-षोमयोरेकस्याप्यभावे दशसङ्ख्यापूरणाभावात् तयोरपि दशमत्व मुच्यते । 'तत्र' तिसृषु देवतासु तद्देवत्यहवि:षु 'पञ्च पुण्डरीकाणि' देयानि भवन्ति * ॥

अथ द्वादशपेयस्य दीक्षां विधत्ते — "तां द्वादशेति । दक्षाणि सप्त , अग्निमहविस्तये दास्यमानानि पञ्चेति द्वादश पुण्डरीकाणि भवन्ति । प्रकृतौ "अप्सु स्नात्यपो ऽश्नाति"–इत्यादिना यद् दीक्षामात्रं विहितम् , तदत्रापवदितुं दत्तदास्यमानपुण्डरीक-स्रक्प्रतिमोको विहित: । सूत्रन्तु पूर्व मुदाहृतम् । आपस्तम्बेन तु विशेष उक्त:— "अपो दीक्षाया: स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते"–इति † । प्रतिमोचयेदित्यर्थ: ॥ ६—१३ ॥

पुण्डरीकगतां सङ्ख्यां सम्भूय मासात्मकसंवत्सरात्मना प्रशं-सति— "अथ यद् द्वादशेति ‡ । अतस्तावत्सङ्ख्याविशिष्टपद्म-दीक्षाकरणेन सर्वात्मसंवत्सरेण यजमानं दीक्षायुक्तं कृतवान् भवति । प्रकारान्तरेण प्रशंसति — "यानीति । पद्मगतपत्र-नालबिसानां स्वर्गान्तरिक्षभूम्याख्यलोकत्रयात्मकत्वात् तत्प्रति-मोकलक्षणदीक्षाकरणेन ,'एनं' यजमानम् 'एषु' त्रिषु 'लोकेषु' दीक्षितवान् भवतीत्यर्थ: ॥ १४ ॥

---

* 'भवन्तीत्येतत्'—इति च , छ ।

† आप० श्रौ० सू० १८. २०. १४ । ‡ का० श्रौ० सू० १५. ६. ११ ।

"अथ राजानं क्रीत्वेत्यादेरय मर्थः— पूर्व मभिषेचनीय-दीक्षान्ते 'राजानं क्रीत्वा' *, 'उपनह्य', तमेवं दशपेयार्थं पर्युह्य ब्रह्मागारे स्थापयित्वा, एकेनाभिषेचनीये प्रचारः कृतः; अथ दशपेये ब्रह्मगृहे स्थापितं तं सोम माहृत्य, 'आसन्द्या मासाद्य', आतिथ्यया प्रचरेयुः; तदनन्तर मुपसद्यागः। तत्राग्निसोम-विष्णुदेवताकोपसत्प्रतिनिधित्वेन संसृप्यागसम्बन्धिना मुत्तमानां त्रयाणा माग्नेयसौम्यवैष्णवाना मेव निर्वापं पूर्वपक्षयति— "यदोपसद्भिः प्रचरतीति ॥ १५ ॥

"अथैतानि हवींषि निर्वपत्याग्नेय मिति। "तेन यथेष्टेऽतीति। एकैकोपसत्स्थाने 'तेन' एकेन हविषा 'यथेष्ट्या' इष्टितन्त्रेण कुर्यात्। उपसत्त्रयार्थं मेतद्धविस्त्रयं कर्त्तव्य मिति प्राथमान्त-रीयः पक्षः † ॥ १६ ॥

त मिमं निराकरोति— "तदु तथेति। 'तत्' तथा 'न कुर्यात्'। 'एषः ह्वलति वै' प्रच्युतो भवेत्। एतच्छब्दार्थ माह— "यो यज्ञपथादेतीति। 'एति' अपगच्छति। तदेव पुनर्दर्शयति— "एति वा एष इति। तस्मात् 'उपसत्पथात्' 'नेयात्' न प्रच्युतो भवेत्, तत उपसदो न पृथक् कुर्यात्। तदन्ते एतानि संसृपा मन्तिमानि हवींषि त्रीणि चेष्टितन्त्रेण पृथक् कुर्यात्। अतएव सूत्रकार उपसद्यागान्ते एतेषां निवापं विक-ल्पेन दर्शयामास— "उपसदन्त इच्छन्"-इति ‡ ॥ १७ ॥

* "दशभिर्वत्सतरैः साण्डैः सोमं क्रीणाति, न पणते न परिवहति, क्रय मेवापाकरोति"—इति आप० श्रौ० सू० १८. २०. १५, १६, १७।

† "एका दीक्षा, तिस्र उपसदः"—इति आप० श्रौ० सू० १८. २०. १८।

‡ का० श्रौ० सू० १५. ८. १५।

तदुपसद्देवताहविषा माग्नेयसौम्यवैष्णवानां संसृष्टं हविषा मनिर्वापे तद्धेतुकसर्पणस्यासिद्धि माशङ्क्य निरस्यति— "स यदग्नि मिति। उपसद्यागैरेव चाग्निसोमविष्णव इष्टाः; तदानी मेव तैः संसर्पणं जात मिति ॥ १८ ॥

दशपेयस्य सोमसंस्थारूपं विधत्ते— "स एव सप्तदश इति। 'स एषः' दशपेयः क्रतुः सप्तदशस्तोमसाध्योऽग्निष्टोमसंस्थो भवतीत्यर्थः। "सप्तदश स्तोमं भवति"–इति * हि तैत्तिरीयकम् ॥ १९ ॥

गर्भिणीनां गवां दानं विधत्ते— "तस्य द्वादशेति †। ता द्वादशसङ्ख्याका गाः ब्रह्मणे दद्यादित्युत्तरेण ( २२ का० ) सम्बन्धः। सङ्ख्यां सम्भूय संवत्सरात्मना स्तौति— "द्वादश वै मासा इति ॥ २० ॥

प्रकारान्तरेणापि प्रशंसति— "तासां द्वादश गर्भा इति। ता गावो द्वादश, तासां गर्भा अपि द्वादश, मिलित्वा चतुर्विंशतिः; संवत्सरस्यापि चतुर्विंशतिरर्द्धमासाः, तस्मात् संवत्सरात्मत्वेन ताः बालगर्भा गावः प्रशस्ता इत्यर्थः ॥ २१ ॥

"ता ब्रह्मणे ददातीति। हिरण्यस्रजो दानं विधत्ते— "हिरण्मयी मिति ‡। ददातीत्यनुवर्त्तते।

वर्त्तुलस्य स्वर्णाभरणस्य दानं विधत्ते—"रुक्मं होत्र इति §।

---

* तै० सं० १. ८. १८. १।

† "ब्रह्मणे दद्यात्मंशुवद्गर्भिण्या"—इति का० श्रौ० सू० १५. ८. २२। 'अंशुवदिति द्वादश वत्सतर्यो गर्भिण्यः'—इति तद्वृत्तिः।

‡ का० श्रौ० सू० १५. ८. २३।

§ का० श्रौ० सू० १५. ८. २४। 'रुक्मः परिमण्डलः सौवर्णआभरणविशेषः'—इति च तद्वृत्तौ द्रष्टव्यम्।

द्वाभ्यां प्रत्येकं प्राकाशदानं विधत्ते— "हिरण्मयाविति । प्राकाशौ दीपस्तम्भावित्येके, सुवर्णदर्पणावित्यपरे * । अश्वदानं विधत्ते— "अश्वं प्रस्तोत्र इति । वन्ध्याया गोर्दानं विधत्ते— "वशा मिति † । रेतस्सेचनसमर्थस्य गोर्दानं विधत्ते— "ऋषभ मिति । द्वाभ्यां प्रत्येकं वस्त्रदानं विधत्ते— "वाससी इति । एकेनानडुहा युक्तस्य यवपूर्णस्य शकटस्य दानं विधत्ते-- "अन्य-तरत इति । अनडुहो दानं विधत्ते--"गा मग्नीध इति । "अन-ड्वाह मग्नीधे"–इति हि सूत्रितम् ‡ । "अनड्वाह मग्नीधे वह्निर्वा अनड्वान्"–इति हि तैत्तिरीयकम् § ॥ २२ ॥

ता एता दक्षिणाः सम्भूय संवत्सरात्मना प्रशंसति-- "ता वा एता द्वादशेति । षष्ठौह्यादयोऽनडुहान्ता द्वादश दक्षिणाः ; वाल-गर्भिणीनां गवां दक्षिणात्वात् वालगर्भिणीना मपि दक्षिणात्वेन परिगणने त्रयोदश भवन्ति ; संवत्सरस्यापि द्वादश चैत्रादयः, अधिकमासेन सह त्रयोदश मासा भवन्ति। तस्मादेताभिर्दक्षिणाभि-र्यज्ञरूपं संवत्सर मेवाप्तवान् भवतीत्यर्थः ‖ ॥ २३ ॥ २ [४. ५.] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे चतुर्थाध्याये पञ्चमं ब्राह्मणम् ॥

---

* 'कर्णवेष्टकावित्यपरे'–इति का० श्रौ० १५. ८. २५ सू० वृ० ।

† का० श्रौ० सू० १५. ८. २६ ख । 'वशा वन्ध्या, या उपगम्य-मानापि गर्भं न गृह्णाति'–इति वृ० ।

‡ का०-वेबरमुद्रितसूत्रपुस्तके तु "गा मग्नीधे"–इत्येव पाठो विद्यते । का० श्रौ० सू० १५. ८. २७ घ । § तै० ब्रा० १. ८. २. ५ ।

‖ "सद्यो दीक्षयन्ति, सद्यः सोमं क्रीणन्ति, पुण्डरीकस्रजं प्रय-

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ४ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम् ,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणः सिङ्गणार्यौ ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः ,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणज मनृणः शार्करं चार्कतेजाः ,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पात्रसात्सिङ्गणार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

---

ऋच्छति , दशभिर्वत्सतरैः सोमं क्रीणाति , दशपेयो भवति"—इत्यादि तै० सं १. ८. १८, तै० ब्रा० १. ८. २ द्रष्टव्यम् ।

* अन्यथा टीप्पण्यो द्वितीयाध्यायान्ते ( १६१ पृ० ) द्रष्टव्याः ।

( अथ पञ्चमाध्यायस्य प्रथमं ब्राह्मणम् . )

---

आग्नेयो ऽष्टाकपालः पुरोडाशो भवति । तं पूर्व्वार्द्ध ऽआसादयत्यैन्द्र एकादशकपालः पुरोडाशो भवति सौम्यो वा चरुस्तं दक्षिणार्द्ध ऽआसादयति वैश्वदेवश्चरुर्भवति तं पश्चार्द्ध ऽआसादयति मैत्रावरुणी पयस्या भवति तामुत्तरार्द्ध ऽआसादयति बार्हस्पत्यश्चरुर्भवति तं मध्य ऽआसादयत्येष चरुः पञ्चबिलस्तद्यत् पञ्च हवीꣳषि भवन्ति तेषां पञ्च बिलानि तस्माच्चरुः पञ्चबिलो नाम ॥ १ ॥

तद्यदेतेन राजसूययाजी यजते । यदेवैनं दिशः समारोहयति यदृतून् यत्स्तोमान्यच्छन्दाꣳसि तस्मादेवैनमेतेन निष्क्रीणाति स यद्धैतेन राजसूययाजी न यजेतोद्वा ह माद्येत् प्र वा पतेत् तस्माद्वा ऽएतेन राजसूययाजी यजते ॥ २ ॥

स यदाग्नेयेनाष्टाकपालेन पुरोडाशेन प्रचरति । यदेवैनं प्राचीं दिशꣳ समारोहयति

यद्दतून् यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतेन निष्क्रीणाति सꣳस्रवं बार्हस्पत्ये चरावव-नयति * ॥ ३ ॥

अथ यदैन्द्रेणैकादशकपालेन पुरोडाशेन प्रच-रति। सौम्येन वा चरुणा यदेवैनं दक्षिणां दिशꣳ समारोहयति यद्दतून्यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतेन निष्क्रीणाति सꣳस्रवं बार्ह-स्पत्ये चराववनयति † ॥ ४ ॥

अथ यद्वैश्वदेवेन चरुणा प्रचरति। यदे-वैनं प्रतीचीं दिशꣳ समारोहयति यद्दतून् यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतेन निष्क्रीणाति सꣳस्रवं बार्हस्पत्ये चराववनयति ‡ ॥ ५ ॥

अथ यन्मैत्रावरुण्या पयस्यया प्रचरति। यदे-वैन मुदीचीं दिशꣳ समारोहयति यद्दतून् यत् स्तोमान्यच्छन्दाꣳसि तस्मादेवैन मेतेन निष्क्री-णाति सꣳस्रवं बार्हस्पत्ये चराववनयति तद्यत् सꣳस्रवान् बार्हस्पत्ये चराववनयति सर्व्वत एवा-

---

*, †, ‡ '०ववनयति'—इति क।

स्मिन्नेतदन्नाद्यं दधाति तस्मादु दिशो दिश एव राज्ञे ऽन्नाद्य मभिह्रियते * ॥ ६ ॥

अथ यद् बार्हस्पत्येन चरुणा प्रचरति। यदेवैन मूर्द्धा दिशऽ समारोहयति यद्दतून् यत् स्तोमान्यच्छन्दाऽसि तस्मादेवैन मेतेन निष्क्रीणाति ॥ ७ ॥

स य एष आग्नेयो ऽष्टाकपालः पुरोडाशो भवति। तस्य हिरण्यं दक्षिणाग्नेयो वा ऽएष यज्ञो भवत्यग्ने रेतो हिरण्यं तस्माद्धिरण्यं दक्षिणा तदग्नीधे ददात्यग्निर्व्वा ऽएष निदानेन यदाग्नीध्रस्तस्मात्तदग्नीधे ददाति † ॥ ८ ॥

अथ य एष ऐन्द्र ‡ एकादशकपालः पुरोडाशो भवति। तस्य ऽर्षभो दक्षिणा स हैन्द्रो यदृषभो यद्यु सौम्यश्चरुर्भवति तस्य बभ्रुर्गौर्दक्षिणा स हि सौम्यो यद्बभ्रुस्तं ब्रह्मणे ददाति

---

* '०ह्रियते'—इति क।

† 'ददाति'—इति क।

‡ "ऐन्द्रः। एका०'—इति क, ख

ब्रह्मा हि यज्ञं दक्षिणतो ऽभिगोपायति तस्मात्तं ब्रह्मणे ददाति * ॥ ९ ॥

अथ य एष वैश्वदेवश्चरुर्भवति। तस्य पृषन् गौर्द्दक्षिणा भूमा वा ऽएतद्रूपाणां यत् पृषतो गोर्व्विशो वै व्विश्वे देवा भूमा वै व्विट् तस्मात् पृषन् गौर्द्दक्षिणा तꣳ होत्रे ददाति होता हि भूमा तस्मात्तꣳ होत्रे ददाति † ॥ १० ॥

अथ यैषा मैत्रावरुणी पयस्या भवति। तस्यै व्वशा दक्षिणा सा हि मैत्रावरुणी यद्वशा यदि व्वशां न व्विन्देदपि यैव का चाप्रवीता स्यात् सर्व्वा ह्येव व्वशाप्रवीता तामध्वर्युभ्यां ददाति प्राणोदानौ वा ऽअध्वर्यू प्राणोदानौ मित्रावरुणौ तस्मात्तामध्वर्युभ्यां ददाति ‡ ॥ ११ ॥

अथ य एष बार्हस्पत्यश्चरुर्भवति। तस्य शितिपृष्ठो गौर्द्दक्षिणैषा वा ऽऊर्द्ध्वा बृहस्पतेर्द्दिक् तदेष उपरिष्टादर्य्यम्णः पन्थास्तस्माच्छितिपृष्ठो बार्हस्पत्यस्य दक्षिणा तं ब्रह्मणे ददाति बृहस्पतिर्वै

---

*, †, ‡ 'ददाति'—इति क।

देवानां ब्रह्मैष वा एतस्य ब्रह्मा भवति तस्मात्तं ब्रह्मणे ददाति स हैतेनापि विष्ठाव्राज्यन्नाद्यकामो यजेत तदस्मिन्त्सर्व्वतो ऽन्नाद्यं दधाति* स ह्यन्नाद एव भवति ॥ १२ ॥ ३ ॥

॥ इति चतुर्थप्रपाठके तृतीयं ब्राह्मणम् [५. १.] ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

अथ पञ्चमाध्याये पञ्चबिलसञ्ज्ञकश्चरुः †, द्वादश प्रयुजां हवींषि, पशुद्वयम्, केशवपनीयातिरात्रः, सौत्रामणीप्रयोगः, राजसूयसमाप्त्युदवसानीयेष्टिश्च विधीयते ।

अत्र कात्यायनः— "उत्तरे शुक्ले पञ्चबिल आग्नेय ऐन्द्रः सौम्यो वा वैश्वदेवश्चरुः पयस्या मैत्रावरुणी बार्हस्पत्यश्चरुः प्रतिदिश मासादन माग्नेयं पुरस्तात् प्रदक्षिण मितराणि मध्येऽन्त्यम्"—इति ‡। आग्नेयादीनि पञ्च हवींषि पूर्वादिक्रमेण मध्ये च स्थापयेत् । सोऽयं पञ्चबिलसञ्ज्ञकश्चरुरित्यर्थः ॥

* 'ददाति'—इति ख ।

† एषैव दिशा मवेष्टिरुच्यते । तथाहि तै० ब्रा० १. ८. ३— "दिशा मवेष्टयो भवन्ति"—इत्यादि द्रष्टव्यम् ।

‡ का० श्रौ० सू० १५. ६. १, २, ३ । 'आगामिनि वैशाखशुक्ले' —इति, 'सर्वासु दिक्षु विभज्यैकैकस्यासादनं भवति'—इति च तत्र वृ० ।

तदिदं विधत्ते— "आग्नेय मिति। वेदिमध्ये 'पूर्वार्द्धे' पूर्वभागे आसादयेत्। एव मुत्तरत्र 'दक्षिणार्द्धे' इति योज्यम्। 'पयस्या' आमिक्षा॥

हविःपञ्चकस्य पञ्चबिलसञ्ज्ञां निर्वक्ति— "तद्यदिति। तेषां हविषा मासादनार्थानि एकस्यां पात्र्यां प्रागादिक्रमेण यतः पञ्च बिलानि, तस्मादेषा यागपञ्चकस्य पञ्चबिलस्वरूपिति सञ्ज्ञा॥ १॥

एतेषां हविषां करणे प्रयोजन माह— "तद्यदेतेनेति। 'एतेन' हविः-पञ्चकेन राजसूययाजिना यष्टव्यम्। कुतः? यतः पूर्वम् 'एनं' यजमानं प्राची मारोहेत्यादिभिर्मन्त्रैः प्राच्याद्याः पञ्च दिशः, वसन्ताद्यृतून्, त्रिवृदादींस्तोमान्, गायत्र्यादीनि छन्दांसि चाध्वर्युरारोहितवान्; 'तस्माद्' 'एतेन' हविःपञ्चकेन 'एनं' यजमानं दिगादिभ्यः सकाशात् पुनः 'निष्क्रीणाति' स्वाधीनं कृतवान् भवति।

अकरणे प्रत्यवाय माह— "स यद्येति। यदि न यजेत तर्हि यजमानः 'उन्माद्येत्' उन्मत्तो भवेत्, 'प्रपतेत्' प्रच्युतो भवेत्। 'वा'-शब्दद्वय मन्योन्यविकल्पार्थम्॥ २॥

हविषां क्रमेण निष्क्रयणसाधनत्वं विवृणोति—"स यदाग्नेयेनेत्यादि। प्रत्येकहविःप्रचारादनन्तरम् बार्हस्पत्ये चरौ संस्रवानयनं विधत्ते— "संस्रव मिति। सूत्रञ्च भवति— "पूर्वैः-पूर्वैश्चरित्वा-चरित्वा मध्यमे संस्रवासेचनम्"–इति *। 'मध्ये' मध्यमप्रदेशे स्थापिते बार्हस्पत्ये चरावित्यर्थः॥ ३॥ ॥ ४, ५॥

---

* का० श्रौ० सू० १५. ६. ४।

"अथ यश्चैतावहुत्वेति । चतुर्णां हविषां संस्रवस्य बार्हस्पत्ये चरौ अवनयनं सम्भूयाबाध्यसम्पादनरूपेण प्रशंसति— "तद् यत् संस्रवानिति । यतो 'बार्हस्पत्ये चरौ' सर्वेषां हविषां हुत-शिष्टस्यावनयनम्, 'तस्मात्' 'राज्ञे' 'दिशो दिशः' सर्वस्या अपि दिशः सकाशात् 'अबाध्यम्' 'अभिह्रियते' आनीयत इत्यर्थः ॥ ६ ॥

"अथ यद् बार्हस्पत्येनेत्यादि । पूर्ववत् । अत्र संस्रवा-नयनाभावो विशेषः ॥ ७ ॥

आग्नेयादिहविषा ऋत्विग्विशेषेभ्यो हिरण्यादि-दक्षिणादानं विधत्ते— "स य एष इति । आग्नेयहविषः, तद्दक्षिणात्वेन विहितस्य हिरण्यस्य च अग्निसम्बन्धित्वं समानो धर्मः । हिरण्य-स्याग्निरेतस्त्वं श्रूयते—"तस्य रेतः परापतत्, तद्धिरण्य मिति *। अग्नेरेवाग्नीध्रत्वं प्रथमकाण्डे स्तम्बयजुर्हरणब्राह्मणे स्पष्ट माम्ना-तम् †। 'निदानेन' कारणेन, निरूपणे सतीत्यर्थः । हविष आग्नेयत्वात्, हिरण्यस्याग्निरेतस्त्वात्, अग्नेरेवाग्नीध्रत्वात्, आग्नीध्रसम्प्रदानकत्वं हिरण्यस्य युक्त मित्यर्थः ‡ ॥ एव मुत्तर-त्रापि यथायोग्यं साम्यं द्रष्टव्यम् ॥ ८ ॥

"अथ य एष ऐन्द्र इति § । "तस्यर्षभ इत्यादि । ऋषभ-

---

* तै० ब्रा० १. १. ३. ८ ।

† "स योऽसावग्नीदुत्तरतः पर्येति, अग्निरेवैष निदानेन"–इति २. २. १३. (१भा० पृ०१३६) द्रष्टव्यम् ।

‡ का० श्रौ० सू० १५. ६. ५ ।

§ का० श्रौ० सू० १५. ६. ६ । "बभ्रुर्धूम्रवर्णः"– इति वृ० ।

स्यैन्द्रत्वम्, श्वेतत्वसाम्यात्। बभ्रोः सोमसम्बन्धित्वम्, "सौम्यं बभ्रु मालभेत"—इतिश्रुतेरवगतम् * ॥ ९ ॥

"अथ य एष वैश्वदेव इति। 'पृषन्' विन्दुयुक्तः, चित्रवर्ण इत्यर्थः। तस्य वैश्वदेवत्व मुपपादयति— "भूमा वा इति। भूमरूपत्वम्, नानाच्छन्दस्के बहुविधमन्त्रे प्रशंसनादवगम्यते † ॥ १० ॥

"अथ यैषा मैत्रावरुणीति। 'वशा' वन्ध्या। तदभावे 'अप्रवीता' वेतेः प्रजननार्थात् निष्ठा। 'अप्रजाता' अगृहीतगर्भेत्यर्थः ‡ ॥ ११ ॥

"अथ य एष बार्हस्पत्य इति। 'शितिपृष्ठः' श्वेतपृष्ठः। बार्हस्पत्यचरोः श्वेतपृष्ठस्य गोर्दक्षिणात्व मुपपादयति— "एषा वा ऊर्ध्वेति। "ऊर्ध्वा दिक् बृहस्पतिर्देवता"—इति श्रुतेः ऊर्ध्वा दिक् बार्हस्पत्या। 'उपरिष्टात्' उपरिभागे 'अर्यम्णः' सूर्यस्य 'पन्थाः' मार्गः; 'तस्मात्' उपरिभागे श्वेतत्वसाम्यात्, तादृशो गौर्दक्षिणात्वेन युज्यत इत्यर्थः § ॥

अथैतस्य हविःपञ्चकस्य फलान्तराय राजसूयाद् बहिः प्रयोगं दर्शयति – "स हैतेनापीति। 'विष्ठाव्राज्यन्' एकत्र सन्निविष्टः इतस्ततः पर्यटन मकुर्वन् अन्नाद्यकामः एकत्र स्थित्वैव सर्वतो मेऽन्नं स्यादिति कामयमान इत्यर्थः ‖। पुरुषो-

---

* तै० सं० २. १. ३. १०।

† का० श्रौ० सू० १५. ६. ७।

‡ का० श्रौ० सू० १५. ६. ८। 'अप्रवीता अक्षतयोनिः'—इति इ०।

§ का० श्रौ० सू० १५. ६. ६।

‖ सूत्रेऽप्येव मेव— का० श्रौ० सू० १५. ६. १० ॥

ऽपि एतेन हविःपञ्चकेन यजनं कुर्यात्। तत् प्रशंसति—"तदग्निमिति * ॥ १२ ॥ ३ [ ५. १. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्याये प्रथमं ब्राह्मणम् ॥

---

( अथ द्वितीयं ब्राह्मणम् . )

स वै प्रयुजाᳩं हविर्भिर्यजते। तद्यत् प्रयुजाᳩं हविर्भिर्यजत ऽऋतून् वा ऽएतत् सुषुवाणो युङ्क्ते त ऽएन मृतवो युक्ता व्वहन्त्यृतून् वा प्रयुक्ताननुचरति तस्मात् प्रयुजाᳩं हविर्भिर्यजते ॥ १ ॥

तानि वै द्वादश भवन्ति। द्वादश वै मासाः संवत्सरस्य तस्माद्द्वादश भवन्ति मासि मासि यजेतेत्याहुः को व्वेद मनुष्यस्य तस्मान्न मासि मासि यजेत शम्यापराव्याधे शम्यापराव्याध ऽएव षड्भिर्यजते प्राङ् यानथ पुनरावृत्तः शम्यापराव्याधे शम्यापराव्याध ऽएव षड्भिर्यजते ॥ २ ॥

---

* एष पञ्चबिलः; तै० सं० १. ८. १६, तै० ब्रा० १. ८. ३ द्रष्टव्यः।

तद् तथा न कुर्यात् । षडेवैतानि पूर्व्वाणि हवीꣳषि निर्व्वपति समानबर्हीꣳषि तासां देवतानाꣳ रूपं यथा शिशिरे युक्त्वा प्राञ्च आप्रावृषं यायुस्तत् षडृतून्युङ्क्ते त ऽएनꣳ षडृतवो युक्ताः प्राञ्च आप्रावृषं व्वहन्ति षडृतून् प्रयुक्तानाप्रावृष मनुचरति पूर्व्वाग्निवाहौ द्वौ दक्षिणा ॥ ३ ॥

षडेवोत्तराणि हवीꣳषि निर्व्वपति । समानबर्हीꣳषि तासां देवतानाꣳ रूपं यथा पुनरावर्त्तेरन्वार्षिक मभि तत् षडृतून्युङ्क्ते त ऽएनꣳ षडृतवो युक्ता व्वार्षिक मभि वहन्ति षड्वऽर्तून् प्रयुक्तान्वार्षिक मनुचरति पूर्व्वाग्निव्वाहौ द्वौ दक्षिणा तद्यत् पूर्वाग्निवाहौ दक्षिणाऽर्तून्वा ऽएतत् सुषुवाणो युङ्क्ते व्वहन्ति वा ऽअनड्वाहस्तस्मात् पूर्व्वाग्निवाहौ दक्षिणा ॥ ४ ॥

तद्ध स्मैतत् पुरा कुरुपञ्चाला आहुः । ऋतवो वा ऽअस्मान् युक्ता व्वहन्त्यृतून्वा प्रयुक्ताननुचराम इति यदेषाꣳ राजानो राजसूययाजिन आसुस्तद्ध स्म तदभ्याहुः ॥ ५ ॥

आग्नेयो ऽष्टाकपालः पुरोडाशो भवति। सौम्यश्चरुः सावित्रो द्वादशकपालो ऽष्टाकपालो वा पुरोडाशो बार्हस्पत्यश्चरुस्त्वाष्ट्रो दशकपालः पुरोडाशो वैश्वानरो द्वादशकपाल एतानि षट् पूर्व्वाणि हवींषि भवन्ति ॥ ६ ॥

षडेवोत्तरे चरवः। सारस्वतश्चरुः पौष्णश्चरु-र्मैत्रश्चरुः क्षैत्रपत्यश्चरुर्व्वारुणश्चरुरादित्यश्चरुरेत ऽउ षडुत्तरे चरवः* ॥ ७ ॥

अथ श्येनीं व्विचित्रगर्भां मदित्या ऽआलभते। तस्या एषैवावृद्याष्टापदी व्वशाया ऽइयं वा ऽअ-दितिरस्या एवैन मेतद् गर्भं करोति तस्या एता-दृश्येव श्येनी व्विचित्रगर्भा दक्षिणा † ॥ ८ ॥

अथ पृषतीं व्विचित्रगर्भां मरुद्भ्य आलभते। तस्या एषैवावृद्विशो वै मरुतो व्विशा मेवैन मेतद् गर्भं करोति तस्या एतादृश्येव पृषती व्विचित्र-गर्भा दक्षिणा ॥ ९ ॥

---

* 'चरवः'—इति क।

† 'दक्षिणा'—इति ग, घ।

एतौ पशुबन्धौ *। तद्वेतावेव सन्तावन्यथेवालभन्ते या मदित्या ऽआलभन्त ऽआदित्येभ्यस्ता मालभन्ते सर्व्वं वा ऽआदित्याः सर्व्वस्यैवैन मेतद् गर्भं करोति यां मरुद्भ्य आलभन्ते व्विश्वेभ्यस्तां देवेभ्य आलभन्ते सर्व्वं वै व्विश्वे देवाः सर्व्वस्यैवैन मेतद् गर्भं करोति ॥ १० ॥ ४ ॥

॥ इति चतुर्थप्रपाठके चतुर्थं ब्राह्मणम् [५. २.] ॥

द्वितीयं प्रयुजां हवींषि विधीयन्ते। कात्यायनः— "द्वादशोत्तराणि प्रयुग्घवींषि मासान्तराण्याहवनीयाद्वा पुरस्ताच्छम्याप्रासे-शम्याप्रास आग्नेय-सौम्य-सावित्र-बार्हस्पत्य-त्वाष्ट्र-वैश्वानरा यथोक्तमेव मेव प्रत्याहृत्तस्य चरवः सारस्वत-पौष्ण-मैत्र-क्षैत्रपत्य-वारुणादित्याः षट्-षट्कैकतन्त्रे पूर्वाग्निवाहौ द्वौ-द्वौ षष्ठां-षष्ठां दक्षिणा"—इति †। अय मर्थः— द्वादशाग्नेयादीनि प्रयुजां हवींषि आहवनीयात् पूर्वदेशे एकैकशम्याव्याधप्रदेशे एकैकस्मिन् मासि एकैकं हविरिति क्रमेण षट् यष्टव्यानि; तथा प्रत्याहृत्य तेष्वेव स्थानेषु क्रमेण षट् यष्टव्यानि। यद्वा, षट्कं-षट्क मेकीकृत्य एकतन्त्रेण कुर्यात्। तेषां पूर्वाग्निवाहकौ द्वौ-द्वौ अनड्वाहौ दक्षिणेति ॥

* 'पशुबन्धौ'—इति ग।

† का० श्रौ० सू० १५. ६. ११–१६।

तदिदं विधत्ते— "स वै प्रयुजा मिति । विविधं प्रशंसति— "ऋतून् वा इति । एषः 'सुषुवाणः' यष्टा 'ऋतून्' मासानेव 'प्रयुङ्क्ते' कर्मणे योजयति । 'ऋतवः' अपि 'एनं' 'युक्ताः' सन्तो 'वहन्ति' प्रापयन्तीष्टं फलम् । इदानी मनुष्ठातापि प्रयुक्तान् 'ऋतून्' 'अनु'-लक्ष्य 'चरति' अनुसरति, तत्तदनु-[ सरण ]-जनित-फलं प्राप्तुकामः । तस्मात् प्रयुजां हविर्योगः कर्त्तव्यः । तथाच तैत्तिरीयके — "मासि-मासि एतानि हवींषि निरुप्याणीत्याहुः, तेनैवर्त्तून् प्रयुङ्क्त इति"–इति * ॥ १ ॥

तेषां सङ्ख्यां विधत्ते— "तानि वै द्वादशेति । तेषां प्रति-मासं यजनं पूर्वपक्षत्वेनोपन्यस्यति— "मासि-मासीति । तं पक्षं निराकरोति— "को वेदेति । मनुष्यस्यायुःपरिमाणस्या-वगन्तु मशक्यत्वात् मासि-मासि यजनं न कर्त्तव्य मित्यर्थः ॥

हविःषट्कस्यैकीकृत्य यागकरणेऽपि कञ्चिद् विशेषं पूर्व-पक्षत्वेनोपन्यस्यति— "शम्यापराव्याध इति । शम्यापरास्ता विध्यति निपतति यत्रेति स शम्यापराव्याधो देशः । तत्र देशे पूर्वैः 'षड्भिः' 'प्राङ्' प्राङ्मुखो 'यान्' गच्छन् यजेत । आहवनीयात् पूर्वदेशे एकैकशम्याप्रासे षट् कर्त्तव्यानीत्यर्थः । "अथ पुन रिति । पुनरावृत्तेन एकैकशम्याप्रासप्रदेशे अपराणि षट् कर्त्तव्यानीति ॥ २ ॥

तम् पक्षं निराकृत्य पक्षान्तरं विधत्ते— "तदु तथेति । 'पूर्वाणि षट् हवींषि' 'समान बर्हींषि' ; बर्हिःशब्दस्तन्त्रोप-लक्षकः , एकतन्त्राणि कर्त्तव्यानीत्यर्थः । पूर्वहविःषट्कदेवताः प्रशंसति— "तासां देवताना मिति । 'तासां' पूर्वहविःषट्कस्य

---

* तै० ब्रा० १. ८. ४. ३ ।

देवतानाम् अग्निषोमादीनां षण्णां रूप मेतत् । 'यथा' 'शिशिरे' ऋतौ 'युक्ता' युक्ताश्वा: राजान: 'प्राञ्च:' सन्त: 'आप्रावृषं' प्रावृट्कालपर्य्यन्तं 'यायु:' गच्छेयु: । तदिदं प्राङ्मुखं यानं पूर्वपूर्वशम्याप्रासेषु यष्टव्याना मग्न्यादिदेवतानां सम्बन्धि रूप मित्यर्थ: । प्रयुजां पूर्वाणि षड्‌वींषि प्रस्तुत्य तैत्तिरीयके शिशिरादिषु षट्सु मासेषु राजभेदेन प्राङ्मुखा यात्रा प्रतिमासं व्यापारभेदश्च स्पष्ट माम्नात:— "आग्नेय मष्टाकपालं निर्वपति , तस्माच्छिशिरे कुरुपञ्चाला: प्राञ्चो यान्ति । सौम्यं चरुं, तस्माद् वसन्तं व्यवसायादयन्ति । सावित्रं द्वादशकपालं, तस्मात् पुरस्ताद् यवानां सविता विरुन्धते । बार्हस्पत्यं चरुं, सवित्रैव विरुध्य ब्राह्मणा यवानादधते । त्वाष्ट्र मष्टाकपालं रूपाण्येव तेन कुर्वते । वैश्वानरं द्वादशकपालं , तस्माज्जघन्ये नैदाघे प्रत्यञ्चं कुरुपञ्चाला यान्ति"—इति * । तदनेन पूर्वहवि:-षट्केन षड्ऋतुमासानेव युङ्क्ते । 'ऋतु'—शब्दो मासपर: ; "वासन्तिकावृतू"—इतिव्यवहारात् † । यद्वा , "पञ्च वै मासा:" —इति पञ्चानां मासत्वव्यवहारात् पञ्चद्वयात्मक ऋतुरित्यर्थ: ॥

पूर्वषट्कस्य दक्षिणां विधत्ते— "पूर्वाग्नीति । पूर्वाग्नि माहवनीयं वहन्तीति पूर्वाग्निवाहोऽनड्वाह: । तेषां मध्ये द्वौ दक्षिणात्वेन देयावित्यर्थ: ॥ ३ ॥

उत्तरहवि:षट्कस्यापि समानतन्त्रत्वं दर्शयति— "षडेवोत्तराणीति । तानि प्रशंसति— "तासां देवताना मिति । 'वार्षिक मभि' वर्षर्तुसम्बन्धिनं प्रथमं मास मभिलक्ष्य पुन:

---

* तै० ब्रा० १. ८. ४. १, २ ।

† "मधुश्च माधवश्च वासन्तिकावृतू"—इति वा० सं० १३.२५. १ ।

रावर्त्तेरन्। शिशिरे दिग्विजयाय प्राञ्चः प्रयाताः कुरुपञ्चालादयो निदाघर्त्तुद्वितीयमासे परकीयं राष्ट्रं सर्वात्मना विनाश्य स्वदेशं प्रति प्रत्यङ्मुखा निवर्त्तन्ते। तत् 'एतत्' सरस्वत्यादिदेवतानां प्रतिनिवृत्त्या यष्टव्यानां रूप मित्यर्थः। "तत् षड्तूनिति। 'तत्' तेन उत्तरहविःषट्कयागेन प्रावृडादीन् षण्मासान् योजितवान् भवति। तेषा मनडुद्द्वयं दक्षिणां विधत्ते— "पूर्वाग्नीति। पूर्वाग्निवाह्यं दक्षिणात्वम्। सम्भूय प्रशंसति — "तद् यत् पूर्वाग्नीति ॥ ४ ॥

उक्तं द्वादशप्रयुग्घविःकरणेन ऋतुप्रयोगं कुरुपञ्चालवृत्तान्त-मुखेन दृढयति — "तद्ध स्मैतदिति। पूर्वं 'कुरुपञ्चालाः' 'आहुः' वदन्ति, विचारयन्ति,— 'अस्मान् ऋतवो युक्ताः' सन्तो 'वहन्ति', 'प्रयुक्तान् ऋतून्' 'अनु'-लक्ष्य 'चरामः' अनुसराम इति। आशंसमानानाम् 'एषां' राज्ञां मध्ये ये 'राजानः राजसूय-याजिनः आसुः', ते प्रयुग्घविःकरण मृतुप्रयोगरूप मिति प्रत्यूचु-रिति तस्यार्थः ॥ ५ ॥

तानि द्वादश हवींषि उद्दिशति— "आग्नेयोऽष्टाकपाल इति। तत्र पूर्वाणि षड्वींषि पुरोडाशात्मकानि, उत्तराणि तु चर्वात्मकान्येवेत्यर्थः * ॥ ६, ७ ॥

अथ पशुद्वयं विधीयते। तत्र कात्यायनः— "अष्टापदी-वत्यशुबन्धौ गर्भिणीभ्यां स्वगुणदक्षिणौ, श्येन्यादित्येभ्योऽदित्यै वा, वैश्वदेवी पृषती मारुती वा"–इति †। श्वेतां गर्भिणी

---

* तै० सं १. ८. १६ ('सात्यदूतानां हवींषि'), तै० ब्रा० १. ८. ३ द्रष्टव्यम्।

† का० श्रौ० सू० १५. ६. १७, १८।

मादित्येभ्योऽदित्यै वा आलभेत, पृषतीं गर्भिणीं विश्वदेवेभ्यो मरुद्भ्यो वेति तदर्थः *।

तत्र स्वमतानुसारेणादितिदेवत्यं पशुबन्धं विधत्ते— "अथ श्येनी मिति। 'श्येनीं' श्वेतवर्णां 'विचित्रगर्भां' प्रज्ञातगर्भाम् 'अदित्यै' आलभेत। प्रयोग मतिदिशति— "तस्या एषेति। 'आहृत्' क्रिया 'या' 'अष्टापद्यै' वशायै गर्भिण्या वशाया अनुबन्ध्याया: प्रयोगक्रमः, स एवास्या इत्यर्थः। तत्प्रयोगस्तु चतुर्थकाण्डे पञ्चमेऽध्याये द्वितीये ब्राह्मणे— "उत्खिद्य वपा मनुमर्श गर्भ मेष्टवै ब्रूयात्"-इत्यादिना स्पष्ट मीरितः †। एतद्देवतां प्रशंसति— "इयं वा इति। 'अदितिः' नाम 'इयं' पृथिवी ; तस्माददितिदेवत्यगर्भिणीयागेन 'एनं' यजमानं भूमिरेव गर्भत्वेन कृतवान् भवति ॥

एतस्य कर्मणो दक्षिणां विधत्ते— "तस्या एतादृश्येवेति। 'एतादृशी' एतद्वर्णा प्रज्ञातगर्भा 'दक्षिणा' ॥ ८ ॥

पशुबन्धान्तरं विधत्ते— "अथ पृषती मिति। 'पृषतीं' विन्दुयुक्तां, 'विचित्रगर्भां' विचित्रवर्णां गर्भिणीम् 'मरुद्भ्यः' देवेभ्यः आलभेत। तस्यापि प्रयोगप्रकारं पूर्ववदतिदिशति। "तस्या एषेति। मरुतां विट्त्वात् मरुद्देवत्यपशुयागेन 'एनं' सुन्वन्तं 'विशां' प्रजानां 'गर्भम्', तदुपजीव्य कृतवान् भवति ॥

तस्यापि दक्षिणां विधत्ते— "तस्या एतादृशीति। एवकारेणान्यवर्णदक्षिणानिवृत्तिः। दक्षिणाभेदेनानयोः कर्मभेदः ॥ ९ ॥

"एतौ पशुबन्धाविति। उक्तस्य पशुबन्धद्वयस्य शाखाभेदेन

---

* 'अष्टापदीशब्देन अनूबन्ध्योच्यते लक्षणया तद्वती'—इति कर्कः।

† तत्र प्रथमा कण्डी द्रष्टव्या।

देवतान्तरसम्बन्धं दर्शयति-- "तद्देतावेवेति । एवकारेणादिति-मरुत्सम्बन्धो विवक्षितः । 'अन्यथैव'-इति यदुक्तम्, तदेव स्पष्टयति --"या मदित्या इत्यादिना * ॥ १० ॥ ४ [ ५. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥

---

( अथ तृतीयं ब्राह्मणम् . )

अभिषेचनीयेनेष्ट्वा † । केशान्न वपते तद्यत् केशान्न वपते वीर्यं वा ऽएतदपाᳬ रसः सम्भृतो भवति येनैन मेतदभिषिञ्चति तस्याभि-षिक्तस्य केशान् प्रथमान् प्राप्नोति स यत् केशान् वपेतैताᳬ श्रियं जिह्मां व्विनाशयेद् व्युदुह्यात्तस्मात् केशान्न वपते ॥ १ ॥

संवत्सरं न वपते । संवत्सरसम्मिता वै व्रत-

---

* अष्टम्यादिषु तिसृषु कण्डीषु पशुद्वयविधिः । स एषोऽपि तै० सं० १. ८. १६, तै० ब्रा० १. ८. ३ द्रष्टव्यः ।

† 'अभिषेचनीयेनेष्ट्वा'-इति ग, घ ।

चर्या तस्मात् संवत्सरं न वपते स एष व्रतविसर्जनीयोपपयोगो नाम स्तोमो भवति केशवपनीयः ॥ २ ॥

तस्यैकविꣳशं प्रातस्सवनꣳ। सप्तदशं माध्यन्दिनꣳ सवनं पञ्चदशं तृतीयसवनꣳ सहोक्थैः सह षोडशिना सह रात्र्या ॥ ३ ॥

त्रिवृद्राथन्तरः सन्धिर्भवति। एष एवैकविꣳशो य एष तपति स एतस्मादेकविꣳशाद्पयुङ्क्ते स सप्तदश मभिप्रत्यवैति सप्तदशात् पञ्चदशं पञ्चदशादस्या मेव त्रिवृति प्रतिष्ठायां प्रतितिष्ठति ॥ ४ ॥

तस्य रथन्तरं पृष्ठं भवति। इयं वै रथन्तर मस्या मेवैतत् प्रतिष्ठायां प्रतितिष्ठत्यतिरात्रो भवति प्रतिष्ठा वा ऽअतिरात्रस्तस्मादतिरात्रो भवति ॥ ५ ॥

स वै न्येव वर्त्तयते। केशान्न वपते * वीर्यं वा ऽएतदपाꣳ रसः सम्भृतो भवति येनैन

---

* 'केशान्न वपते'—इति ग, घ।

मेतदभिषिञ्चति तस्याभिषिक्तस्य केशान् प्रथमान् प्राप्नोति स यत् केशान् वपेतैताᳫ श्रियं जिह्मां व्विनाशयेद्व्युदुह्यादथ यन्निवर्त्तयते तदात्मन्येवैताᳫ श्रियं नियुनक्ति तस्मान्नैव वर्त्तयते केशान्न वपते तस्यैषैव व्रतचर्य्या भवति यावज्जीवं नास्यां प्रतितिष्ठति ॥ ६ ॥

आसन्द्या उपानहा ऽउपमुञ्चते । उपानड्भ्या मधि यदस्य यानं भवति रथो वा किञ्चिद्वा सर्व्वं वा ऽएष इद मुपर्य्युपरि भवत्यर्व्वागेवास्मादिदᳫ सर्व्वं भवति यो राजसूयेन यजते तस्मादस्यैषैव व्रतचर्य्या भवति यावज्जीवं नास्यां प्रतितिष्ठति ॥ ७ ॥ ५ ॥

॥ इति चतुर्थप्रपाठके पञ्चमं ब्राह्मणम् [५. ३.] ॥

तृतीये केशवपनीयातिरात्रस्य वैशेषिका धर्मा उच्यन्ते । सूत्रम्— "अभिषेचनीयाद्वा संवत्सरात् केशवपनीयोऽतिरात्रः सोमापवर्गः"–इति *। पशुबन्धद्वयानन्तरं केशवपनीयातिरात्रयागः कर्त्तव्यः। अभिषेचनीयसोमयागं कृत्वा संवत्सरपर्यन्तं केशवपनाकरणलक्षणं व्रत माचर्यम् , ततस्तद्व्रतविसर्जनार्थं मेकः

* का० श्रौ० सू० १५. ६. २६ ।

सोमयाग: पौर्णमासीसुत्य: कार्य:, स एव केशवपनीयातिरात्र उच्यते। रात्रि मतीत्य वर्त्तत इत्यतिरात्र:; अतिरात्रसंस्थया कार्य इत्यर्थ: * ॥

त मिमं विधत्ते— "अभिषेचनीयेनेष्ट्वेति। अभिषेचनीययागादनन्तरं केशवपनीयकरणे कारण माह— "वीर्यं वा एतदपा मिति। पूर्व मभिषेककाले वीर्यरूपोऽपां रस: प्रथमं केशानेव प्राप्तवान्, तेषां केशानां वपने अभिषेकेणागच्छन्तीं 'श्रियम्' एव 'जिह्मां' कुटिलां विनाशितवान् भवति। किञ्च 'व्युदुह्यात्' गतसारोऽपि भवेत्। तस्मात् केशवापो न कर्त्तव्य इत्यर्थ: † ॥ १ ॥

तस्यावधिकालं दर्शयति -- "संवत्सरं न वपत इति। केशवपनीयशब्दं निर्वक्ति— "स एष व्रतेति। संवत्सरसम्मितव्रतविसर्जनद्वारा केशवपनार्थम् उपयुज्यमान: क्रियमाण: 'स्तोम:' एकविंशादिस्तोमवान् याग: केशवपनीय इत्यर्थ: ॥ २ ॥

तत्र सामगैर्गीयमानेषु स्तोत्रेषु चोदकेन प्रातस्सवनादिषु त्रिवृदादिस्तोमप्राप्तौ तानपवदितुं विशेषं दर्शयति— "तस्यैकविंश मिति। प्रातस्सवन मेकविंशस्तोमयुक्तं कर्त्तव्यम्, माध्य-

---

* "तदन्ते केशवपनीयोऽतिरात्र: पौर्णमासीसुत्य:"—इति सूत्रञ्चात्र विचार्यम् (१५. ६. २०)। 'तदन्तग्रहणाच्चानन्तरपौर्णमास्यां भवति'—इतीह कर्क:। 'तयो: पशुबन्धयोरन्ते केशवपनीयसञ्ज्ञ: अतिरात्रसंस्थ: सोमयागो भवति, स च पौर्णमासीसुत्य: ज्यैष्ठ्यां पौर्णमास्यां तस्य सुत्या भवतीत्यर्थ:'—इति तत्र वृत्ति:।

† "संवत्सरादूर्ध्वं केशवपनीयाय दीक्षेत यस्मिन् कालेऽभिषेचनीयेन यजेत, तस्य पौर्णमास्या मतिरात्र:"—इति चात्र लाट्या० श्रौ० सू० ६. ३. १, २।

न्दिनं सप्तदशस्तोमकम्; अस्य सोमयागस्य अतिरात्रसंस्थास्त्वात् *। तृतीयसवने अग्निष्टोमवत् द्वादश स्तोत्राणि, तत उत्तरं त्रीण्युक्थस्तोत्राणि, एकं षोडशिस्तोत्रम्, रात्रिपर्यायस्तोत्राणि द्वादश; तानि सर्वाण्यपि पञ्चदशस्तोमकानि कर्त्तव्यानीत्यर्थः। स्तोमक्लृप्तिप्रकारस्तु "प्राची मारोह"-इत्यत्र दिक्समारोहणमन्त्रव्याख्यावसरे दर्शितः † ॥ ३ ॥

"त्रिवृद्राथन्तर इति। पूर्वदिवसरात्रिशेषे उत्तरदिवसस्योषःकाले यज्ञस्थापक मेकं चरमं स्तोत्रं तृतीयपर्यायस्यान्ते रथन्तरसाम्ना गातव्यम्, तत् सन्धिस्तोत्र मित्युच्यते। तत् स्तोत्रं त्रिवृत्स्तोमयुक्तं कार्यम्। एकविंशादवरोहणक्रमेण ‡ त्रिवृत्पर्यन्तं यत् स्तोमकरण मुक्तम्, तत् सूर्यलोकादिक्रमाद् भूम्यवस्थानात्मना प्रशंसति— "एष एवैकविंश इति। 'य एष तपति', 'सः' 'एकविंशः' सूर्य इत्यर्थः; तस्मात् 'अपयुङ्क्ते' अवरोहतीत्यर्थः। सोऽवरुह्यावरुह्य त्रिवृद्रूपाया मस्यां भूमिलक्षणायां 'प्रतिष्ठायां' प्रतिष्ठितवान् भवति ॥ ४ ॥

माध्यन्दिने सवने रथन्तरं बृहत्साम वा पृष्ठस्तोत्रं प्रकृतौ विकल्पितम्, अत्र त्वेकं नियमयति— "तस्य रथन्तर मिति। 'अस्य सोमयागस्यातिरात्रसंस्थात्वं प्रतिष्ठात्मना प्रशंसति— "अतिरात्र इति। अतिरात्रसंस्थात्मना क्लृप्त एष क्रतुः प्रतिष्ठारूपः ॥ ५ ॥

अस्य क्रतोः केशवापव्रतविसर्जनार्थं क्रियमाणत्वात् तदन्ते

---

* '०संस्थात्'--इति च, क; '०संस्था[ त्वा ]त्'—इति ज।

† इहैव पुरस्तात् (४. १. ३.) २६२ पृष्ठतो द्रष्टव्यम्।

‡ '०दवरोहणेन'—इति च, '०दवरोहणं'- इति ज।

केशवापः कार्यः ; तत्र कश्चिद् विशेषं विधत्ते— "स वै न्येव वर्त्तयत इति । 'सः' यजमानो 'निवर्त्तयते' केशान् निकृन्तेदेव, न वपेत ; वपनं नाम मुण्डनं तन्न कुर्यात्, निवर्त्तनं कर्त्तनम्, तत् कुर्यादित्यर्थः । "वीर्यं वा इत्यादेरर्थः पूर्वं व्याख्यातः * । निकर्त्तनपक्षे केशाङ्कुराणां विद्यमानत्वात् 'आत्मन्येव' 'एतां श्रियं' नियोजितवान् भवतीत्यर्थः ॥

सुन्वतः कांश्चिन्नियमान् दर्शयति— "तस्यैषैवेति । 'एषा' केशकर्त्तनलक्षणा 'व्रतचर्या' यावज्जीवनं कर्त्तव्या ; न केशमुण्डनं कार्यम् । कदाचिदपि † 'अस्यां' भूमौ 'न प्रतितिष्ठति' अवस्थानं न कुर्य्यात् ॥ ६ ॥

कुत्रावतिष्ठेतेति तद्दर्शयति— "आसन्द्या मिति । आसन्द्या अवरोहणसमयेऽपि 'उपानहौ' पादुके उपमुञ्चेत । इतस्ततः सञ्चरणसमये रथं वा यानं वारोहेत् । एतादृशं व्रतं राजसूययाजिनो 'यावज्जीवं' कर्त्तव्य मित्यर्थः ‡ ॥ ७ ॥ ५ [ ५. ३. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे

माध्यन्दिनशतपथब्राह्मणभाष्ये

पञ्चमकाण्डे पञ्चमाध्याये तृतीयं ब्राह्मणम् ॥

---

* अनुपद मेव गतं ३५६ पृष्ठायां द्रष्टव्यम् ।

† इतोऽनन्तरं ज-पुस्तके 'अनुपानत्कोऽपादुकः'—इत्यधिकः पाठः ।

‡ तै० ब्रा० १. ८. ८ द्रष्टव्यम् । किञ्च "संवत्सर मग्निहोत्रं हुत्वा केशवपनीयेनातिरात्रेण यजते"—इति आप० श्रौ० सू० १८. २२. ६ । एव मन्यत्रान्यत्र च,– लाट्या० श्रौ० सू० ६. ३. १—१४ ॥

( अथ चतुर्थं ब्राह्मणम् . )

श्येत आश्विनो भवति। श्येताविव ह्यश्विनावविर्मल्हा सारस्वती भवत्यृषभ मिन्द्राय सुत्रास्णा* ऽआलभते दुर्व्विदा एवꣳ समृद्धाः पशवो यद्येवꣳ समृद्धान्न व्विन्देदप्यजानेवालभेरंस्ते हि सुश्रपतरा भवन्ति स यद्यजानालभेरंल्लोहित आश्विनो भवति तद्यदेतया यजते ॥ १ ॥

त्वष्टुर्ह वै पुत्रः †। त्रिशीर्षा षडक्ष आस तस्य त्रीण्येव मुखान्यासुस्तद्यदेवꣳरूप आस तस्माद् विश्वरूपो नाम ॥ २ ॥

तस्य सोमपान मेवैकं मुख मास। सुरापाण मेक मन्यस्मा ऽअशनायैकं त मिन्द्रो दिद्वेष तस्य तानि शीर्षाणि प्रचिच्छेद ॥ ३ ॥

स यत् सोमपान मास। ततः कपिञ्जलः समभवत्तस्मात् स बभ्रुक इव बभ्रुरिव हि सोमो राजा ‡ ॥ ४ ॥

---

* 'सुत्रास्णा'—इति ग, घ। † 'पुत्रः'—इति ग।

‡ 'राजा'—इति ग, 'राजा'—इति घ।

अथ यत् सुरापाण मास। ततः कलविङ्कः समभवत्तस्मात् सो ऽभिमाद्यत्क इव व्वदत्यभिमाद्यन्निव हि सुरां पीत्वा व्वदति * ॥ ५ ॥

अथ यदन्यस्मा ऽअशनायास। ततस्तित्तिरिः समभवत्तस्मात् स व्विश्वरूपतम इव सन्त्येव घृतस्तोका इव त्वत् मधुस्तोका इव त्वत् पर्णेष्वाश्चुतिता एवꣳरूप मिव हि स तेनाशन मावयत् ॥ ६ ॥

स त्वष्टा चुक्रोध। कुविन्मे पुत्र मवधीद्दिति सो ऽपेन्द्र मेव सोम माजह्रे स यथायꣳ सोमः प्रसुत एव मपेन्द्र एवास † ॥ ७ ॥

इन्द्रो ह वा ऽईक्षाञ्चक्रे। इदं वै मा सोमादन्तर्यन्तीति स यथा बलीयानबलीयस एव मनुपहूत एव यो द्रोणकलशे शुक्र आस तं भक्षयाञ्चकार स हैनं जिहिꣳस सोऽस्य व्विष्वङ्ङेव ‡ प्राणेभ्यो दुद्राव मुखाद्धैवास्य न दुद्राव

* 'व्वदति'—इति क।

† एवास'—इति क।

‡ 'विष्वङ्ङेव'—इति क। 'श्विष्वंगेव'—इति ख।

तस्मात् प्रायश्चित्तिरास स यद्वापि मुखादद्रोष्यन्नु हैव प्रायश्चित्तिरभविष्यत् ॥ ८ ॥

चत्वारो वै वर्णाः । ब्राह्मणो राजन्यो वैश्यः शूद्रो न हैतेषा मेकश्चन भवति यः सोमं वमति स यद्धैतेषा मेकश्चित् स्यात् स्याद्धैव प्रायश्चित्तिः ॥ ९ ॥

स यन्नस्तोऽद्रवत् । ततः सिꣳहः समभवदथ यत् कर्णाभ्या मद्रवत्ततो वृकः समभवदथ यद्वाचः प्राणादद्रवत्ततः शार्दूलज्येष्ठाः श्वापदाः समभवन्नथ यदुत्तरात् प्राणादद्रवत्सा परिस्रुदथ त्रिर्निरष्ठीवत्ततः कुवलं कर्कन्धु बदरमिति समभवत्स सर्व्वेणैव व्यार्ध्यत सर्व्वꣳ हि सोमः ॥ १० ॥

स सोमातिपूतो मन्दुरिव चचार । त मेतयाश्विनावभिषज्यतां तꣳ सर्व्वेणैव समर्द्धयताꣳ सर्व्वꣳ हि सोमः स वसीयानेवेष्ट्वाभवत् ॥ ११ ॥

ते देवा अब्रुवन् । सुत्रातं बतैन मत्रासता* मिति तस्मात् सौत्रामणी नाम ॥ १२ ॥

---

* 'मत्रासाता' — इति क, ख ।

स हैतयापि सोमातिपूतं भिषज्येत्। सर्वेण वा ऽएष व्यृध्यते यꣳ सोमो ऽतिपवते सर्व्वꣳ हि सोमस्तꣳ सर्व्वेणैव समर्द्धयति सर्व्वꣳ हि सोमः स व्वसीयानेवेष्ट्वा भवति तस्माद हैतयापि सोमातिपूतं भिषज्येत् ॥ १३ ॥

तद्यदेतया राजसूययाजी यजते। सर्व्वान्वा ऽएष यज्ञक्रतूनवरुन्धे सर्व्वा इष्टीरपि दर्व्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्यत्सौत्रामण्यनया मे ऽपीष्टमसदनयापि सूया ऽइति तस्माद्वा ऽएतया राजसूययाजी यजते* ॥१४॥

अथ यदाश्विनो भवति। अश्विनौ वा ऽएनमभिषज्यतां तथो ऽएवैनमेष एतदश्विभ्यामेव भिषज्यति तस्मादाश्विनो भवति † ॥ १५ ॥

अथ यत् सारस्वतो भवति। व्वाग्वै सरस्वती व्वाचा वा ऽएनमश्विनावभिषज्यतां तथो ऽएवैनमेष एतद्वाचैव भिषज्यति तस्मात् सारस्वतो भवति ‡ ॥ १६ ॥

---

* 'यजते'—इति ग, घ।

†, ‡ 'भवति'—इति क।

अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता* तयैवैन मेतद्भिषज्यति तस्मादैन्द्रो भवति ॥ १७ ॥

एतेषु पशुषु । सिꣳहलोमानि वृकलोमानि शार्दूललोमानीत्यावपत्येतद्वै ततः समभवद्यदेनꣳ सोमोऽत्यपवत तेनैवैन मेतत् समर्द्धयति कृत्स्नं करोति तस्मादेतान्यावपति ॥ १८ ॥

तदु तथा न कुर्यात् । उल्कया ह स नखिन्या पशूननुषुवति य एतानि पशुष्वावपति तस्मादु परिस्रुत्येवावपेत्तथा होल्कया नखिन्या पशून्नानुषुवति तथो ऽएवैनꣳ समर्द्धयति कृत्स्नं करोति तस्मादु परिस्रुत्येवावपेत् † ॥ १९ ॥

अथ पूर्वेद्युः परिस्रुतꣳ सन्दधात्यश्विभ्यां पच्यस्व सरस्वत्यै पच्यस्वेन्द्राय सुत्राम्णे पच्यस्वेति सा यदा परिस्रुद्भवत्यथैनया प्रचरति ॥ २० ॥

द्वावग्नी ऽउद्धरन्ति । उत्तरवेदावेवोत्तर मुद्धरते दक्षिणं मेत् सोमाहुतीश्च सुराहुतीश्च सह जुहवा-

---

* इतोऽनन्तरम् "सा यैव यज्ञस्य देवता"—इत्यधिकः पाठः ख-पुस्तके।

† '०वावपेत'—इति क।

मेति तस्माद् द्वावग्नी ऽउद्धरन्त्युत्तरवेदावेवोत्तर मुद्धते दक्षिण मथ यदा वपाभिः प्रचरत्यथैतया * परिस्रुता प्रचरति ॥ २१ ॥

तां दर्भैः पावयति । पूतासदिति व्वायुः पूतः पवित्रेण प्रत्यङ् सोमो ऽअतिस्रुतः । इन्द्रस्य युज्यः सखेति तत् कुवलसक्तून् कर्कन्धुसक्तून् बदरसक्तूनित्यावपत्येतद्वै ततः समभवद्यत् त्रिनिरष्ठीवत् तेनैवैन मेतत् समर्द्धयति कृत्स्नं करोति तस्मादेतानावपति † ॥ २२ ॥

अथ ग्रहान् गृह्णाति । एकं वा त्रीन्वैकस्त्वेव ग्रहीतव्य एका हि पुरोरुग्भवत्येकानुवाक्यैका याज्या तस्मादेक एव ग्रहीतव्यः ॥ २३ ॥

स गृह्णाति । कुविदङ्ग यवमन्तो यवं चिद्यथा दान्त्यनुपूर्वं वियूय । इहेहैषां कृणुहि भोजनानि ये बर्हिषो नम उक्तिं यजन्ति । उपयामगृहीतोऽस्यश्विभ्यां त्वा सरस्वत्यै त्वेन्द्राय त्वा

---

* 'प्रचरन्त्यथैतया'—इति क, ख ।

† '०वपति'—इति क ।

सुत्रामणा ऽइति यद्यु त्रीन् गृह्णीयादेतयैव गृह्णीयादुपयामैस्तु तर्हि नाना गृह्णीयादथाहा-श्विभ्याᳬं सरस्वत्या ऽइन्द्राय सुत्राम्णे ऽनु-ब्रूहीति ॥ २४ ॥

सो ऽन्वाह । युवᳬं सुराम मश्विना न-मुचावासुरे सचा । विपिपाना शुभस्पती ऽइन्द्रं कर्मस्वावत मित्याश्राव्याहाश्विनौ सरस्वती मिन्द्रᳬं सुत्रामाणं यजेति ॥ २५ ॥

स यजति । पुत्र मिव पितरावश्विनोभेन्द्रा-वथुः काव्यैर्दᳬंसनाभिः । यत् सुरामं व्यपिबः शचीभिः सरस्वती त्वा मघवन्नभिष्णगिति हिर्होता वषट्करोति हिरध्वर्युर्जुहोत्याहरति भक्षं यद्यु त्रीन् गृह्णीयादेतयैवानुहोम मितरौ हूयेते ॥ २६ ॥

अथ कुम्भः । शतवितृण्णो वा भवति नव-वितृण्णो वा स यदि शतवितृण्णः शतायुर्वा ऽअयं पुरुषः शततेजाः शतवीर्यस्तस्माच्छतवितृण्णो यद्यु नववितृण्णो नवेमे पुरुषे प्राणास्तस्मान्नव-वितृण्णः ॥ २७ ॥

तꣳ शिक्योद्धृतम्। उपर्य्युपर्य्याहवनीयं धारयन्ति सा या परिशिष्टा परिस्रुद् भवति ता मासिञ्चति तां विच्चरन्ती मुपतिष्ठते पितॄणाꣳ सोमवतां तिसृभिर्ऋग्भिः पितॄणां बर्हिषदां तिसृभिर्ऋग्भिः पितॄणा मग्निष्वात्तानां तिसृभिर्ऋग्भिस्तद्यदेव मुपतिष्ठते यत्र वै सोम इन्द्र मत्यपवत स यत् पितॄनगच्छत् तथा वै पितरस्तेनैवैन मेतत् समर्द्धयति कृत्स्नं करोति तस्मादेव मुपतिष्ठते * ॥ २८ ॥

अथैतानि हवीꣳषि निर्व्वपति। सावित्रं द्वादशकपालं वाष्टाकपालं वा पुरोडाशं व्वारुणं यवमयं चरु मैन्द्र मेकादशकपालं पुरोडाशम् † ॥ २९ ॥

स यत् सावित्रो भवति। सविता वै देवानां प्रसविता सवितृप्रसूत ऽएवैतद्भिषज्यति तस्मात् सावित्रो भवति ‡ ॥ ३० ॥

अथ यद्वारुणो भवति। व्वरुणो वा ऽआर्प-

* 'सुपतिष्ठते'—इति ग, घ।

† 'पुरोडाश९'—इति ख।

‡ 'भवति'—इति क।

यिता तद्य एवार्पयिता तेनैवैतद्भिषज्यति तस्मा-द्वारुणो भवति * ॥ ३१ ॥

अथ यदैन्द्रो भवति । इन्द्रो वै यज्ञस्य देवता सा यैव यज्ञस्य देवता तयैवैतद्भिषज्यति तस्मादैन्द्रो भवति † ॥ ३२ ॥

स यदि हैतयापि सोमातिपूतं भिषज्येत् । इष्टा अनुयाजा भवन्त्यव्यूढे स्रुचावथैतैर्हविर्भिः प्रचरति पश्चाद्वै सोमोऽतिपवते पश्चादेवैन मेतेन मेधेनापिदधात्याश्विन मु तर्हि द्विकपालं पुरोडाशं निर्व्वपेदथ यदा व्वपाभिः प्रचरत्यथैतेनाश्विनेन ‡ द्विकपालेन पुरोडाशेन प्रचरति ॥ ३३ ॥

तदु तथा न कुर्यात् । ह्वलति वा ऽएष यो यज्ञपथादेत्येति वा ऽएष यज्ञपथाद्य एवं करोति तस्माद्यचैवैतेषां पशूनां व्वपाभिः प्रचरन्ति तदेवैतैर्हविर्भिः प्रचरेयुर्नो तर्ह्याश्विनं द्विकपालं पुरोडाशं निर्व्वपेत् ॥ ३४ ॥

---

*, † 'भवति'—इति क ।

‡ '०त्यथ०'—इति क, ख ।

तस्य नपुꣳसको गौर्द्दक्षिणा। न वा ऽएष स्त्री न पुमान् यन्नपुꣳसको गौर्यदह पुमांस्तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मान्नपुꣳसको गौर्द्दक्षिणाश्वा वा रथवाही सा हि न स्त्री न पुमान् यदश्वा रथवाही यदह रथं वहति तेन न स्त्री यदु स्त्री तेनो न पुमांस्तस्मादश्वा रथवाही दक्षिणा ॥ ३५ ॥ ६ ॥

॥ इति चतुर्थप्रपाठके षष्ठं ब्राह्मणम् [५. ४.] ॥

सोमप्रधाने * राजसूये सप्त सोमयागाः। तत्र, पवित्राख्य-सोमयागे विशेषाभावात् † स नोक्तः; अभिषेचनीय-दशपेय-केशवपनीयातिरात्रेषु केचिद् ‡ वैशेषिका धर्मा उक्ताः; व्युष्टि-द्विरात्रोऽग्निष्टोमातिरात्रो चत्रधृतिरिति सोमयागत्रयं केशवपनीयादनन्तरं कर्त्तव्यम्। तेषां सोमयागविकृतित्वादग्निष्टोमवत् सर्वं मन्त्रजातं कर्तव्यम्, तत्र विशेषाभावादत्र नोक्ताः; तदनन्तरकर्त्तव्या सौत्रामण्यभिधीयते §।

---

* 'समप्रधाने'—इति क, ज।

† 'विशेषभावात्'—इति च, क; 'विशेषाभावे'—इति ज।

‡ 'केषुचिद्'—इति क, ज।

§ "सन्तिष्ठते राजसूयः, तेनेष्ट्वा सौत्रामण्या यजेत"—इति आप० श्रौ० सू० १८. २२. २०, २१।

तत्र पशुत्रयं * देवतासम्बन्धविशिष्टं विधत्ते—"श्येत आश्विन इति। अश्विदेवत्यः 'श्येतः' पशुरालभ्यः। 'मलहा' गलस्तनयुतेत्यर्थः। ताम् 'अविम्' मेषीम् 'सरस्वत्यै' आलभेत। 'सुत्राम्णे' सुष्ठु त्रात्रे, एतद्गुणकाय 'इन्द्राय' 'ऋषभं' सेचनसमर्थं मालभेत। उक्तपशुषु श्येतगलस्तनयुक्तत्वरूपं गुण मसम्भाविनं मत्वा श्रुतिः स्वय मेव पक्षान्तर माह — "दुर्वेदा इति। 'एवम्' उक्तरीत्या 'समृद्धाः' गुणवत्त्वेन सम्पूर्णाः पशवो 'दुर्वेदाः' दुर्लभाः, तेषा मलाभे तत्तद्देवत्यान् 'त्रीन् अजान् एव' आलभेत। 'सुश्रपतराः' सुखेन श्रपयितु मर्हाः। अजत्रयपक्षे आश्विनपशोः कश्चिद् गुणं विधत्ते—"लोहित आश्विन इति। अत एव कात्यायनः— "आश्विनोऽजः श्येतः, मल्हाविः सारस्वती, ऋषभ मिन्द्राय सुत्राम्णे, तद्गुणाभावेऽजाः प्रथमो लोहितः" —इति †। एतेषां पशूनां सौत्रामणीसम्बन्धं दर्शयति— "तयैतयेति। पशुत्रयवत्या 'एतया' सौत्रामण्या यष्टव्य मित्यर्थः ॥ १ ॥

अथ सौत्रामण्याः सुत्रामेन्द्रसम्बन्ध मश्विसरस्वतीसम्बन्धम्, तत्रोपयुक्तद्रव्यादिकञ्चाख्यायिकामुखेन दर्शयति— "त्वष्टुर्ह वै पुत्र इति। पूर्वं त्वष्टुः पुत्रस्य विश्वरूपस्य 'त्रिशीर्षः' त्रीणि मुखान्यासुः। तत्र 'एकं मुखं सोमपानम्', द्वितीयं 'सुरापाणम्', तृतीयम् 'अन्यस्मै अशनाय' बभूव। एवम्भूतस्य विश्वरूपस्य त्रीणि शिरांसि 'इन्द्रः' 'द्विषन्' चिच्छेद। तत-श्छिन्नेभ्यो मुखेभ्यः कपिञ्जलकलविङ्कतित्तिरयस्त्रयः पक्षिणः

---

* "त्रिपशुः पशुबन्धः स्वः"—इति का० श्रौ० सू० १५. १०. १।

† का० श्रौ० सू० १५. १०. ४—७।

समभवन्। कपिञ्जलस्य सोमपानमुखजातत्वात् तत्समानो बभ्रु-वर्णो जातः, कलविङ्कस्य सुरापानमुखजातत्वात् सुरापायि-वदभिमादवचनम्, तित्तिरस्याशनभाजकमुखजत्वात् नानारूप-त्वम्। अशने हि घृतमधुविन्दुसद्भावादस्मिन्नपि पक्षिणि तदा-काररूपसद्भावः। 'अवयत्'-इति वेतेः खादनार्थात् छान्दसः शप् ॥ २—६ ॥

"स त्वष्टेति। ततस्तस्य छिन्नशीर्ष्णो विश्वरूपस्य पिता 'त्वष्टा' 'कुवित्' व्यर्थम् 'मे' मम 'पुत्रम्' 'अवधीत्' 'इति' क्रुद्धः सन् 'अपेन्द्रम्' इन्द्रवर्जितम् 'एव' 'सोमं' सोमयागम् 'आजह्रे' अनु-ष्ठितवान्;— यथा सोमः इन्द्रवर्जितः 'प्रसुतः' अभिषुतः स्यात् तथेत्यर्थः (॥ ७ ॥)

अथ 'इन्द्रः' त्वष्ट्रादयः मां सोमव्यवहितं कुर्वन्तीति निश्चित्य 'अनुपहूतः' सन् द्रोणकलशस्थितं सोम मपहृत्य भक्षयाञ्च-कार। यथा बलवान् पुरुषो बलरहितस्य अन्नादिक * मपहरति, तद्वत्। स पीतः सोमः 'एनं' 'जिहिंस' बाधितवान्। अस्य 'प्राणेभ्यः' नासिकादिस्थानेभ्यः 'एव' 'विष्वङ्' सर्वतः 'दुद्राव' स्रुतः; 'न मुखात् दुद्राव'। 'तस्मात्' 'सः' इन्द्रः 'प्राय-श्चित्तिः' प्रायश्चित्तयोग्यः 'आस'। प्रायो विनाशः, तस्य चित्तिः सन्धानं यस्येति तथाविधो बभूव। यदि मुखात् स्रुतः स्यात्, तर्हि प्रायश्चित्तियोग्य एव न स्यात्; उत्तरत्र सोमरसव्यृद्धस्येन्द्रस्याश्विभ्यां समर्द्धनं वक्ष्यते † ॥ ८ ॥

मुखवमनपक्षे प्रायश्चित्तिर्नास्तीति दर्शयति— "चत्वारो वा इति। लोके हि वर्णचतुष्टयस्यैव प्रायश्चित्तविधानम्, नान्यस्य;

---

* 'धनादिक'—इति क। † १२ क० ३७२ पृ०।

अतः सोमवामी एषां चतुर्णां मध्ये एकोऽपि न भवति। यथा पुल्कसादेः केवलपापशरीराणि * स्युः, प्रायश्चित्तविधिर्नास्ति, एवं सोमवामिनोऽपीति। यद्यपि तस्य "यः सोमवामी स्यात् तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत्"–इत्यादिना तैत्तिरीये † प्रायश्चित्तिरुक्ता, तथापि अत्यन्तसन्निकर्षं वक्तुं वर्णचतुष्टयानर्थक्य मुक्तम्; तस्मात् इन्द्रस्य मुखवमनाभावात् प्रायश्चित्तियोग्यत्वं जात मित्यर्थः ॥ ९ ॥

इन्द्रियेभ्यः सोमद्रवणकाले नासिकादिस्रुतस्य सिंहाद्यात्मनोत्पत्तिं दर्शयति— "स यन्नस्त इति। 'नस्तः' नासिकायाः स्रुतः सोमः 'सिंहः' अभवत्। 'अवाचः' अधोमुखादपानद्वारात् निर्गतः सोमः 'शार्दूलमुख्याः श्वापदाः' क्रूरकर्माणः, पशवः 'समभवन्'। उत्तरात् प्राणात् गुह्यच्छिद्रात् स्रुतः 'परिस्रुत्' सुरा अभूत्। "यावाची सा सुरा"–इति हि तैत्तिरीयकम् ‡। स चेन्द्रो वक्त्रेण त्रिवारं निष्ठीवनं कृतवान्। तेन द्रव्यत्रय मभूत्,—'कुवलकर्कन्धुबदराणि' सूक्ष्मतरस्थूलमध्यपरिमाणानि बदरजातिफलानि §। एवं सर्वेन्द्रियेभ्यः सोमस्रवणात् इन्द्रो 'व्यार्ध्यत' वृद्धिविहीनो बभूव ॥ १० ॥

---

* 'केवलपापशरीराः'—इति च, क।

† तै० सं० २. ३. २. १४।

‡ तै० ब्रा० १. ८. ५. २।

§ 'कुवलं मध्यबदरम्, कर्कन्धु सूक्ष्म मतिमधुरं यदुत्तरापथे प्रायेण जायते, बदरं तु निर्विशेषणम्'—इति हरिस्वामिनः। 'कुवलान्यामलकतुल्यानि बदराणि, कर्कन्धूनि उपजीव्यान्यारण्यकबदराणि, बदराणि निरुपपदबदराणि चणकबदराणि'—इति याज्ञिकाः। 'कर्क

"स सोमातिपूत इति। 'सोमातिपूतः' अपानद्वारादिभ्यः स्रुतः सोमः *, 'सः' इन्द्रः 'मङ्कुः' "मकि प्रतिबन्धे" † विकलगतिः ‡ पङ्गुः 'इव' 'चचार'। तथाविध मिन्द्रम् 'एतया' सौत्रामण्या 'अश्विनौ' 'अभिषज्यताम्' समाहित मकुरुताम्। "भिषक् चिकित्सायाम्"–इति § धातुः। तदेवाह— "सर्वेणेति। 'सर्वेण' सोमेन एनं समृद्धं कृतवन्तौ। तत इन्द्रः एतया 'इष्ट्वा' 'वसीयान्' वसुमत्तरः 'अभवत्' ॥ ११ ॥

सौत्रामणीशब्दं निर्वक्ति— "ते देवा इति। एव मश्विभ्यां सोमरसेन समर्द्धित मिन्द्रं प्रति 'देवा अब्रुवन्',— 'एनम्' सोमातिपूतं 'सुत्रातं' सुष्ठु रक्षितवन्तौ अश्विनाविति। 'वत' –इति हर्षे ; अतः सुत्राणसम्बन्धात् 'सौत्रामणी'–नामेष्टिः ॥ १२ ॥

प्रसङ्गादन्यस्य सोमातिपूतस्यापीमा मेवेष्टिं दर्शयति— "स हैतयापीति। इयं राजसूयाद् बहिरपि प्रयोक्तव्येत्यर्थः ॥ १३ ॥

"तद्यदेतया राजसूयेत्यादेरय मर्थः— राजसूययाजिना सर्वेऽपि इष्टि-पशु-सोम-दर्विहोमा इष्टाः, अत एषापि इष्टित्वात् तेन कार्येति पूर्व मुक्तम् ॥ १४ ॥

आश्विनसारस्वतैन्द्रपशुविधिं पृथक्-पृथगनूद्य प्रशंसति— "अथ यदाश्विनो भवतीति ॥ ( १५ ) ॥ "वाचेति। 'वाचा'

---

( कुवलं ) बालखर्जूरफलम्, बदरं क्रमुकपरिमितं सूक्ष्मं बदरीफलम्, कर्कन्धु हरीतकीपरिमितं स्थूलं बदरीफलम्'–इति तै० ब्रा० १. ८. ५ भाष्ये सायणः।

* 'सुतसोमः'–इति क, ज।

† "मकि मण्डने"–इति भ्वा० आ० १५ धा०।

‡ 'सबलगतिः–इति च, 'मस्खलद्गति"–इति ज।

§ कण्ड्वादिः। 'भिषज्यति'।

वायूपया याज्यापुरोनुवाक्यया, जुह्वावमन्त्रवत्या सरस्वत्ये-त्यर्थः ॥ ( १६ ) ॥ "इन्द्रो वा इति। 'यज्ञस्य' सर्वस्य 'देवता' ॥ ( १७ ) ॥

अथ परिस्रुत्सन्धानं वक्ष्यते *, तत्र सिंहवृकव्याघ्र-लोमसंसर्जनं सिद्धान्तयितुं विधित्सुः शाखान्तरीयं पक्षं सोप-पत्तिक मनुवदति— "एतेषु पशुष्विति। अत एव सूत्रकारो द्वेधा सूत्रयामास परिस्रुतं † प्रस्तुत्य— "संसृजति, सिंहव्याघ्र-लोमानि चावपति, पशुषु वा"—इति ‡। 'एतेषु' उक्तेषु त्रिषु 'पशुषु' सिंहादीनां त्रीणि लोमानि 'इत्यावपति'। 'इति'—शब्द एतच्छब्दार्थः; 'इति' एतानि संसृजेत्। तस्मात् इन्द्रस्येन्द्रिय-द्वारेभ्योऽपसृतात् सोमादेते त्रयः सिंहाद्या उत्पन्नाः। तस्मात् तल्लोमावापेन इन्द्र मेव कृत्स्नं समृद्धं कृतवान् भवतीति ॥ १८ ॥

तं पक्षं निराकृत्य स्वमतं विधत्ते— "तदु तथेति। यदि पशुषु लोमावापं कुर्यात्, तर्हि 'नखिन्या' कण्टकवत्या 'उल्कया' एव पशून् प्रेरितवान् भवति। तस्मात् 'तथा न कुर्यात्'; किन्तु 'परिस्रुत्येव' संसृजेत्। तत्रावापेन पशूना मुल्कया प्रेरणं कृतं न भवति। इन्द्रस्य कृत्स्नकरण मत्रापि कृतं भवेत् ॥ १९ ॥

---

* इहैवानुपदं विंशकण्डिकायाम् ( ३७४ पृ० १ पं० )।

† अपयित्वाग्रेण गार्हपत्य मवटं खात्वा तस्मिन् सुरायाः कल्केन सुरां सन्दधाति, परिसुद् भवति। स्वाद्वीं त्वा स्वादुनेति ग्रघ्यैः सुरां संसृजति, तिस्रो रात्रीः संसृष्टा वसति"—इति आप० श्रौ० सू० १९. १. ७–१०।

‡ का० श्रौ० सू० १५. ९. ३०, ३१।

अथ परिस्रुत्सन्धानं समन्त्रकं विधत्ते— "अथ पूर्वेद्यु-रिति। 'सन्दधाति' सम्पादयेदित्यर्थः। तत्प्रकारः कात्यायनेन स्पष्ट मीरितः— "व्रीहीन् विरूढाविरूढान् चौम उपनह्य क्रीणाति क्लीवात् सीसेन, पक्वौदनं विरूढांश्चूर्णीकृत्याश्विभ्यां पच्यस्वेति * संसृजति"–इति †। हे परिस्रुत! 'अश्विभ्यां' 'पच्यस्व' पक्वा भव। एव मुत्तरत्रापि ॥ २० ॥

परिस्रुत्प्रचरणे कश्चिद् विशेष माह— "द्वावग्नी इति। उत्तरवेद्या मेक मग्निम्, तद्दक्षिणभागे 'उद्धते' प्रदेशे एक मग्नि मुद्धरेत्। अग्निद्वयोद्धारे कारण माह— "नेदिति। एक-स्मिन्नेवाग्नौ सोमसुराहुतयः सह होतु मयोग्याः, अतस्तत्सं-सर्गहोमनिवृत्त्यर्थं मग्निद्वयं कार्यं मित्यर्थः। तस्याः प्रचरणकाल माह— "यदा वपाभिरिति। पशुवपाभिर्यदा प्रचरेयुः, तदै-तयेत्यर्थः ॥ २१ ॥

विधत्ते— "तां दर्भैरिति। सा परिस्रुत् 'पूता' 'असत्' 'इति' 'तां दर्भैः' पावयेत्। मन्त्रस्याय मर्थः— 'पवित्रेण' पूतः 'सोमः' सोमात्मना निष्पादितः ‡। तथा च तैत्तिरीयकम्— "स्वाद्वीं त्वा स्वादुनेत्याह सोम मेवैनां करोति"–इति §। वायुः पात्राणि गच्छन्, वायुवच्छीघ्रगामी वा भूत्वा 'प्रत्यङ्' अधोवर्त्तिपात्राभिमुखः सन् 'अतिस्रुतः' अतिक्रम्योन्नतः 'इन्द्रस्य' 'युज्यः' योग्यः 'सखा' समानख्यानः 'इति' ॥

---

* वा० सं० १०. ३१. १।

† का० श्रौ० सू० १५. ६. २८, २९।

‡ का० श्रौ० सू० १५. १०. ११।

§ तै० ब्रा० १. ८. ५. ४।

विधत्ते— "तत्कुवलेति। तस्यां परिस्रुति कुवल-कर्कन्धु-बदर-सक्तुत्रयं निवपेदित्यर्थः। अत्र सूत्रम्— "वपामार्जनान्ते कुम्भैः परिस्रुतं पुनाति वायुः पूत इति, कुवल-कर्कन्धु-बदर-चूर्णानि चावपति" * ॥ २२ ॥

ग्रहग्रहणं विधत्ते— "अथ ग्रहानिति। एको वा ग्रहः, त्रयो वा ग्रहीतव्याः। तत्रैकं सिद्धान्तयति— "एकस्त्वेवेति। एकस्यैव ग्रहण मुपपादयति— "एका हीति। पुरोरुक्-पुरोनुवाक्यायाज्याना मेकत्वादेक एव ग्रहीतव्यः † ॥ २३ ॥

ग्रहण मनूद्य मन्त्रं विधत्ते— "स गृह्णातिकुविदङ्गेति ‡। 'अङ्ग'-शब्दः सम्बोधनवाची। हे सोम! कुविच्छब्दो बह्वर्थवाची। चिच्छब्दः समुच्चये। यथा लोके 'यवमन्तः' यवादिधान्योपेताः कृषिकाः 'कुविद्' यवबहुलं, यव मन्यानि च गोधूमप्रियङ्ग्वादिधान्यानि 'अनुपूर्वं' तत्परिपाकानुक्रमेण इदं पक्व मिद मपक्व मिति 'वियूय' विशेषेण पृथक्कृत्य 'दान्ति' "दाप् लवने" § लुनन्ति, तथा 'एषां' यज्वनां 'भोजनानि' अन्नानि 'इह' च 'कृणुहि' कुरुत 'ये' यजमानाः 'बर्हिषः' यागस्य 'नम उक्तिं' नम इत्यन्ननाम ‖, नमस्कारो वा, तस्योक्तिं 'यजन्ति' कुर्वन्तीत्यर्थः। "उपयामगृहीतः"–इत्यादिर्मन्त्रशेषः स्पष्टः ॥

ग्रहत्रयग्रहणपक्षेऽपीम मेव मन्त्र मुपयामेत्यत्र विशेषश्च

---

* का० श्रौ० सू० १५. १०. ११, १२।

† का० श्रौ० सू० १५. १०. १३।

‡ वा० सं० १०. ३२. १।

§ अदा० प० ४६ धा०। ‖ निघ० २. ७. २२।

दर्शयति— "यद्यु व्रीनिति। 'नाना' पृथक् पृथक् उपयामेन तिसृभ्यो देवताभ्यो गृह्णीयात् ॥

अनुवचनप्रैषे विशेषं दर्शयति – "अथाहेति ॥ २४ ॥

होता मनूच्य मश्विसरस्वतीन्द्रप्रतिपादकं मन्त्र माह— "सोऽन्वाह युव मिति *। हे अश्विनौ ! 'युवं' युवां 'सुरामं' सुरमणीयम्, 'आसुरे नमुचौ' स्थितं सोमं 'सचा' सहभूतौ एकीभूय 'विपिपाना' विविधं पिबन्तौ हे 'शुभस्पती' शुभस्य पालकौ स्वामिनौ ! 'कर्मसु' निमित्तभूतेषु कर्मकरणार्थम् 'इन्द्रम्' 'आवतं' रक्षतम् 'इति' ॥

'यज'–इतिप्रैषे देवताशंसनं † विधत्ते—"आश्राव्याहेति ‡। देवतात्रयप्रतिपादिकां याज्यां पठतीति ॥ २५ ॥

"स यजति पुत्र मिवेति §। 'पितरौ पुत्र मिव' यथा पालयतः, तथा उभौ अश्विनौ हे इन्द्र ! 'त्वा' त्वाम् 'आवथुः' "अव रक्षणे" ‖, पुरुषव्यत्ययः, रक्षितवन्तौ। 'काव्यैः' कविकर्मभिः स्तोत्रैः, 'दंसनाभिः', 'दंस'–इति कर्मनाम ¶, कर्मभिश्च इन्द्रं पालितवन्तौ कथ मवगम्यते ? 'यद्' यस्मात् 'सुरामं' सुरमणीयं सोमं 'व्यपिबः' विशेषेण पीतवानसि। 'शचीभिः' कर्मभिः हे 'मघवन्' इन्द्र ! त्वां सोमातिपूतं 'सरस्वती' 'अभिष्णक्' भेषजसन्धानं कृतवती। 'भिषक्'–इति कण्ड्वादिषु पठ्यते ॥

---

* वा० सं० १०. ३३. १।

† 'देवतासमसनं'—इति क, ख, छ।

‡ का० श्रौ० सू० १५. १०. १४, १५।

§ वा० सं० १०. ३४. १।

‖ भ्वा० प० ६०० धा०।

¶ निघ० २. १. ३।

विधेयं विधत्ते— "द्विर्होतेति। होत्रा द्विवारं वषट्कारः कर्त्तव्यः। 'द्विरध्वर्युः' अध्वर्युणापि द्विवारं हवनं कार्यम् *। 'आहरति भक्षम्' हवनानन्तरं भक्षार्थं माहरेयुः †। षड्-वयपक्षे हवने कञ्चिद् विशेष माह— "यद्यु त्रीणिति। एतस्य होम मनु इतरौ द्वौ परिस्रुद्धोमौ होतव्यौ। एषः परिस्रुद्धोमो दक्षिणेऽग्नाविति प्रागुक्तः ‡ ॥ २६ ॥

कात्यायनः— "परिस्रुच्छेष मासिच्य शतमवच्छिद्रं कुम्भं शिक्ये कृत्वोपरि दक्षिणस्य धारयन् स्रवन्त मुपतिष्ठते ऋग्भिः सोमवतां बर्हिषदा मग्निष्वात्तानाम्"–इति §। हुतायाः सुरायाः शेषं शतमवति शतच्छिद्रे नवच्छिद्रे वा कुम्भे आसिच्य, तं कुम्भं दक्षिणस्याहवनीयस्योपरि शिक्ये कृत्वा स्रवन्तं सोम-वदादिपितॄणां त्रिभिरृचैरुपतिष्ठेतेति तदर्थः। तदिदं विधत्ते— "अथ कुम्भ इति। चरकब्राह्मणे व्याख्यातम् ‖ ॥ २७ ॥

"तं शिक्योद्युत मिति। आहवनीयस्योपरि उन्नते प्रदेशे परिस्रुत्प्रचारार्थं दक्षिणतः स्थापितस्याग्नेरुपरीत्यर्थः। तथा सूत्र मुदाहृतम् ¶। 'विक्षरन्तीं' कुम्भात् स्रवन्तीम् परिस्रुतम् 'उपतिष्ठते' ॥

उपस्थाने मन्त्रान् दर्शयति— "पितॄणा मिति। 'सोम-

---

* का० श्रौ० सू० १५. १०. १६।

† का० श्रौ०।सू० १५. १०. १८क।

‡ २१ कण्डी द्रष्टव्या। का० श्रौ० सू० १५. १०. १७।

§ का० श्रौ० सू० १५. १०. १८।

‖ ३प्र० ३ब्रा० १३कण्डी–भाष्यं ३६७ पृ० १७ पं० द्रष्टव्यम्।

¶ का० श्रौ० सू० १५. १०. १६ द्रष्टव्यम।

वतां' सोमदेवतायुतानां 'पितॄणां' याज्यापुरोनुवाक्यारूपाः "उदीरता मवर उत्परासः"-इत्याद्यास्तिस्र ऋचः *, 'बर्हिषदां' बर्हिषि सीदताम् एतद्गुणकानां 'पितॄणां' "बर्हिषदः पितर ऊत्यर्वाग्" -इत्याद्यास्तिस्र ऋचः †, 'अग्निष्वात्तानां पितॄणां' "आयन्तु नः पितरः सोम्यासः"-इत्याद्यास्तिस्र ऋचः ‡ इति नवर्चः संहितायां क्रमेणाम्नाताः §; ताभिरुपस्थानं कर्त्तव्य मित्यर्थः ॥

पितृमन्त्रैरुपस्थानं प्रशंसति— "यत्र वै सोम इति। पूर्व मिन्द्रेण पीतः सोमः, अतिपूतः सन् पितॄनेव प्राप्नोत्, अतस्तन्मन्त्रोपस्थानेनेन्द्र मेव सम्पूर्णं कृतवान् भवतीति ॥ २८ ॥

अथ पशुपुरोडाशार्थं सावित्रवारुणेन्द्राख्यं हविस्त्रयं विधत्ते —"अथैतानि हवींषीति ॥ २९ ॥

पुरोडाशदेवताः प्रशंसति— "अथ यत् सावित्र इति। कात्यायनः— "सोमातिपूतस्याप्येषा, अनुयाजान्ते पशुपुरोडाशार्थैश्चरत्याश्विनेन प्रागवदानेभ्यः, हविर्भिर्वाश्विनाभावस्तु"-इति ‖। अय मर्थः— एषा सौत्रामणी सोमातिपूतस्यापि भैषज्यार्थं कर्त्तव्येति राजसूयाद् बहिःप्रयोगः। तत्र पशुपुरोडाशार्थं विहितान्येतानि सावित्रादिहवींषि अनुयाजान्ते यष्टव्यानि, तदा छिद्रपिधानार्थं पशुवपाचरणानन्तर मवदानात् पुरा आश्विनेन पुरोडाशेन यागः कर्त्तव्य इत्येकः शाखान्तरीयः पक्षः। पशुवपाप्रचरणानन्तर मेवैतैः सावित्रादिभिर्हविर्भिः यागः कर-

---

*, †, ‡ वा० सं० १९. ३९—५१, ५५—५७, ५८—६०।

§ भ्रमभाषण मिदं सायणाचार्यस्य; आसु नवर्क्षु संहितिकप्रथम-तृतीय-चतुर्थीनां त्र्यृचां दर्शनात्।

‖ का० श्रौ० सू० १५. १०. २१, २२, २३।

णीयः, तदा यज्ञपतिच्छिद्रपिधानार्थ मेतेषा मिष्टत्वादाश्विन-हविर्निर्वापो न कर्त्तव्य इत्यपरः पक्षः ॥ ३० ॥ ३१ ॥ ३२ ॥

तत्र पूर्वपक्ष माह— "स यदि हैतयापि सोमातिपूत मिति। 'यदि' 'एतया' सौत्रामण्या 'सोमातिपूतं' 'भिषज्येत्' समादध्यात्, तर्हि अनुयाजयागान्ते स्रुग्व्यूहनात् पुरस्तात् 'एतैः' साविन्नादिभिः 'हविभिः' प्रचरणं कर्त्तव्यम्। "पश्चाद्वा इति। 'सोमः' पश्चाद्भागे अतिपूतः, अत एतस्मिन् काले यज्ञस्य पश्चाद्भागे एतद्धविःप्रचरणेन तं सोमातिपूतं पुरुष मपिहितवान् भवतीति ॥

तत्पक्षे हविरन्तरं विधत्ते— "आश्विन मु तर्हीति ॥

तस्य प्रचारकाल माह— "अथ यदेति ॥ ३३ ॥

तं पक्षं निराकृत्य स्वमतं दर्शयति— "तदु तथेति। स्पष्टोऽर्थः ॥ ३४ ॥

तस्य दक्षिणां विधत्ते— "तस्य नपुंसक इति *। नपुंसकस्य स्त्रीपुंसेतरत्वप्रतिपादकं वाक्यं स्यात्। विकल्पेन दक्षिणान्तरं विधत्ते— "अश्वा वेति †। रथं वहतीति 'रथवाही'। "कर्मण्यण्" ‡। 'सा' वडवा वा दक्षिणेत्यर्थः। तस्या अपि नपुंसकत्व मुपपादयति— "यदह रथं वहतीति। रथवहनात् स्त्रीत्वाभावः, स्त्रीव्यञ्जनसद्भावात् पुंस्त्वाभावः; सौत्रामण्यपि न इष्टिः §,

---

*, † "नपुंसको दक्षिणा, रथवाही वा वडवा"—इति का० श्रौ० सू० १५. १०. २०, २१। ‡ पा० सू० ३. २. १।

§ सौत्रामणीष्टिप्रकरणन्तु तै० सं १. ८. २१; तै० ब्रा० १. ८. ५—६; आप० श्रौ० सू० १६. १. १—२०; "योऽग्निं चिनुतेऽग्निं चित्वा सौत्रामण्या यजेत"—इत्यादि च तै० सं० ५. ६. ३. १०; "न सोमो

न पशुरस्य इत्यभिप्रायः। "तस्मात् अश्वा रथवाही दक्षिणेति, निगमनवाक्यम् * ॥ १५ ॥ ६ [ ५. ४. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्याये चतुर्थं ब्राह्मणम् ॥

---

( अथ पञ्चमं ब्राह्मणम्. )

ऐन्द्रावैष्णवं द्वादशकपालं पुरोडाशं निर्व्वपति। तद्यदेतया यजते व्वृत्रे ह वा ऽइद मग्रे सर्व्वं मास यदृचो यद्यजूꣳषि यत् सामानि तस्मा ऽइन्द्रो व्वज्रं प्राजिहीर्षत् ॥ १ ॥

स ह व्विष्णु मुवाच। व्वृत्राय वै व्वज्रं प्रहरिष्याम्यनु मा तिष्ठस्वेति तथेति ह व्विष्णुरुवाचानु त्वा स्थास्ये प्रहरेति तस्मा ऽइन्द्रो व्वज्र मुद्ययाम स उद्यताद् वज्राद् वृत्रो बिभयाञ्चकार ॥ २ ॥

---

न सुरा यत् सौत्रामणी"—इति च तत्रैव १. ६. ५. ४। "एतावद्रूपं यज्ञस्य यद् देवैर्ब्रह्मणा कृतम्। तदेतत् सर्वं माप्नोति यज्ञे सौत्रामणी सुते"—इति सौत्रामणी-प्रशंसा च वा० सं० १९अ० ३१क० श्रुतेति प्राग्॥

स होवाच । अस्ति वा ऽइदं व्वीर्यं तन्नु ते प्रयच्छानि मा नु * मे प्रहार्षीरिति तस्मै यजूꣳषि प्रायच्छत्तस्मै द्वितीय मुद्ययाम ॥ ३ ॥

स होवाच । अस्ति वा ऽइदं व्वीर्यं तन्नु ते प्रयच्छानि मा नु मे प्रहार्षीरिति तस्मा ऽऋचः प्रायच्छत्तस्मै तृतीय मुद्ययाम ॥ ४ ॥

स होवाच † । अस्ति वा ऽइदं व्वीर्यं तन्नु ते प्रयच्छानि मा नु मे प्रहार्षीरिति तस्मै सामानि प्रायच्छत्तस्मादप्येतर्ह्येव मेवैतैर्व्वेदैर्यज्ञं तन्वते यजुर्भिरेवाग्रे ऽथऽर्ग्भिरथ सामभिरेवꣳ ह्यस्मा ऽएतत् प्रायच्छत् ॥ ५ ॥

तस्य यो योनिराशय ‡ आस । त मनुपरा मृश्य संलुप्याच्छिनत् § सैषेष्टिरभवत्तद्यदेतस्मिन्नाशये त्रिधातुरिवैषा व्विद्याशेत तस्मात् त्रैधातवी नाम ‖ ॥ ६ ॥

---

* 'मा तु'—इति ग, घ । 'मा नु'—इति च इष्टं डा०-वेबरेण ।

† नास्त्येतत्पदद्वयं ग-घ-पुस्तकयोः ।

‡ 'योनिराश्रय'—इति च इष्टं डा०-वेबरेण ।

§ 'संलुप्याच्छिनत्'—इति डा०-वेबरः ।

‖ 'नाम'—इति क, 'नाम'—इति ग ।

अथ यदैन्द्रावैष्णवꣳ हविर्भवति। इन्द्रो हि व्वृत्र मुद्यच्छद्विष्णुरन्वतिष्ठत् ॥ ७ ॥

अथ यद् द्वादशकपालो भवति। द्वादश वै मासाः संवत्सरस्य संवत्सरसम्मितैषेष्टिस्तस्माद् द्वादशकपालो भवति ॥ ८ ॥

त मुभयेषां व्रीहियवाणां गृह्णाति। व्रीहिमय मेवाग्रे पिण्ड मधिश्रयति तद्यजुषाꣳ रूप मथ यवमयं तदृचाꣳ रूप मथ व्रीहिमयं तत् साम्नाꣳ रूपं तदेतत् त्रय्यै व्विद्यायै रूपं क्रियते सैषा राजसूययाजिन उदवसानीयेष्टिर्भवति ॥ ९ ॥

सर्व्वान् वा ऽएष यज्ञक्रतूनवरुन्धे। सर्व्वा इष्टीरपि दर्व्विहोमान्यो राजसूयेन यजते तस्य यातयामेव यज्ञो भवति सो ऽस्मात् पराङिव भवत्येतावान् वै सर्व्वो यज्ञो यावानेष त्रयो व्वेदस्तस्यै* तद्रूपं क्रियत ऽएष योनिराशयस्तदेतेन त्रयेण व्वेदेन पुनर्यज्ञ मारभते तथास्यायातयामा यज्ञो भवति तथो ऽअस्मान्न पराङ् भवति ॥ १० ॥

---

* '०स्तस्मै'—इति च इष्ट' डा०-वेरेबरा।

सर्व्वान्वा ऽएष यज्ञक्रतूनवरुन्धे । सर्व्वा इष्टीरपि दर्व्विहोमान्यो राजसूयेन यजते देवसृष्टो वा ऽएषेष्टिर्यत् त्रैधातव्यनया मे ऽपीष्टमसदनयापि सूया* ऽइति तस्माद्वा ऽएषा राजसूययाजिन उदवसानीयेष्टिर्भवति † ॥ ११ ॥

अथो यः सहस्रं वा भूयो वा दद्यात् ‡ । तस्य हाप्युदवसानीया स्याद्रिरिचान इव वा ऽएष भवति यः सहस्रं वा भूयो वा ददात्येतद्वै सहस्रं वाचः प्रजातं यदेष त्रयो व्वेदस्तत् सहस्रेण रिरिचानं पुनराप्याययति तस्मादु ह तस्याप्युदवसानीया स्यात् ॥ १२ ॥

अथो ये दीर्घसत्त्रमासीरन् । संवत्सरं वा भूयो वा तेषाꣳ हाप्युदवसानीया स्यात् सर्व्वं वै तेषामाप्तं भवति सर्व्वं जितं ये दीर्घसत्त्रमासते संवत्सरं वा भूयो वा सर्व्वमेषां तस्मादु ह तेषामप्युदवसानीया स्यात् ॥ १३ ॥

---

* 'स्तुया'—इति च दृष्टं डा०-वेबरेण ।

† '०र्भवति'—इति क ।

‡ 'दद्यात्'—इति ग ।

अथो हैनयाप्यभिचरेत्। एतया वै भद्रसेन माजातशत्रव मारुणिरभिचचार क्षिप्रं किला-स्तृणुतेति ह स्माह याज्ञवल्क्योऽपि ह वा ऽएनयेन्द्रो वृत्रस्यास्थान मच्छिनदपि ह वा ऽएनया-स्थानं छिनत्ति य एनयाभिचरति तस्मादु हैन-याप्यभिचरेत् ॥ १४ ॥

अथो हैनयापि भिषज्येत्। यं न्वेवैकयऽर्चा भिषज्येदेकेन यजुषैकेन साम्ना तं न्वेवागदं कुर्यात् किमु यं त्रयेण वेदेन तस्मादु हैनयापि भिषज्येत् ॥ १५ ॥

तस्यै त्रीणि शतमानानि हिरण्यानि दक्षि-णा। तानि ब्रह्मणे ददाति न वै ब्रह्मा प्रचरति न स्तुतेन शऽंसत्यथ स यशो न वै हिरण्येन किञ्चन कुर्वन्त्यथ तद्यशस्तस्मात्त्रीणि शतमानानि ब्रह्मणे ददाति ॥ १६ ॥

तिस्रो धेनूर्होत्रे। भूमा वै तिस्रो धेनवो भूमा होता तस्मात्तिस्रो धेनूर्होत्रे ॥ १७ ॥

त्रीणि वासाऽंस्यध्वर्यवे। तनुते वा ऽअध्वर्यु-

यज्ञं तन्वते त्वासाᳬसि तस्माग्नीधं त्वासाᳬ-
ध्वर्यवे गा अग्नीधे ॥ १८ ॥

ता वा ऽएताः *। द्वादश वा त्रयोदश वा दक्षिणा भवन्ति द्वादश वा वै त्रयोदश वा संवत्सरस्य मासाः संवत्सरसम्मितैवेष्टिस्तस्माद् द्वादश वा त्रयोदश वा दक्षिणा भवन्ति ॥ १९ ॥ ७ ॥

॥ इति चतुर्थप्रपाठके सप्तमं ब्राह्मणम् [५. ५.] ॥

राजसूयान्ते कर्त्तव्यायास्त्रैधातव्युदवसानीयायाः † देवतासम्बद्धं हविर्विधत्ते— "ऐन्द्रावैष्णव मिति ‡। द्वादशसु कपालेषु संस्कृत मिन्द्राविष्णुदेवताकं पुरोडाशं निर्वपेत् § ॥

एतदिष्टिविधायककारणानुवादपूर्वकं देवतासम्बन्धस्तावक

---

* 'ऽएताः',—इति ग, घ।

† "राजसूययाजिनः कर्मापवर्गे वा सौत्रामणी"—इति का० श्रौ० सू० १५. १०. २६। 'सौत्रामण्यां त्रैधातवीञ्च प्रकृत्य श्रूयते "सैषा राजसूययाजिन उदवसानीयेष्टिर्भवतीति (५. ५. ५. ६.—पृ० ३८२)" —इतीह कर्काचार्याः।

‡ का० श्रौ० सू० १५. ७. ३०।

§ "द्वादशकपालः पुरोडाशो भवति, ते त्रयश्चतुष्कपालाः"—इत्यादि तै० सं० २. ४. ११. ११।

मितिहास मवतारयति— "तद्यदेतयेत्यादिना *। यत्कारणा-देतयेष्ट्या यजते, तत्कारण मुच्यत इति वाक्यशेषः। "वृत्रे ह वा इति। पुरा किल वृत्रासुरे इदं सर्वं मभूत्। तदेव विशदयति— "यदृच इति। ऋग्यजुस्सामवेदाधिष्ठात्री देवताः वृत्रे विशद्वत्य एव बभूवुरित्यर्थः। 'तस्मै' वृत्राय 'इन्द्रः' वज्रं प्रहर्तुं मैच्छत्। ( १ )। प्रजिहीर्षुः 'सः' इन्द्रः 'विष्णु' प्रत्यवोचत्। किं मुवाचेत्याह— "वृत्राय वा इति। 'वृत्राय' वृत्रहननार्थ मित्यर्थः। वज्रप्रहारं करिष्याम्यहम्, तत्र 'मा' मां त्वम् 'अनुतिष्ठस्व' मत्समीपे आत्मानं प्रदर्शयेत्यर्थः। "अनुर्लक्षणे" कर्मप्रवचनीयः †, तद्युक्ते द्वितीया ‡; तिष्ठतेः "प्रकाशनस्थेयाख्ययोश्च"–इत्यात्मनेपदम् §। 'तथा इति', अङ्गी-कृत्याब्रवीद् 'विष्णुः'। किं मित्यत आह— "अनु त्वेति। 'त्वा' त्वाम् अहम् 'अनु स्थास्ये' त्वत्समीपे आत्मानं प्रदर्शयि-ष्यामीत्यर्थः। त्वं 'प्रहर' निर्भयः प्रहारं कुर्वित्यभिप्रायः। तथा सति इन्द्रस्य वीर्यं वर्द्धते, वृत्रस्यापचीयते 'इति'। 'तस्मै' वृत्राय 'वज्रम्' 'उद्ययाम' उत्क्षिप्तवान् 'इन्द्रः'। तस्माद् 'उद्यताद् वज्राद्' 'वृत्रः' असुरः 'बिभयाञ्चकार'। "भीत्रा-र्थानां भयहेतुः"–इत्यपादाने पञ्चमी ‖। बिभयाञ्चकारेति "भीह्रीत्यादिना आम् ¶ ॥ १, २ ॥

---

* इतिहासोऽयं तै० सं० २. ४. १२ अनुवाकेऽपि श्रुतः।

† पा० सू० १. ४. ८४। ‡ पा० सू० २. ३. ८।

§ पा० सू० १. ३. २३। ‖ पा० सू० १. ४. २५।

¶ "भीह्रीभृहुवां श्लुवच्च"—इति पा० सू० ३. १. ३९।

"स होवाचेति। 'सः' उद्यतवज्राद् भीतो वृत्रोऽवोचत्। किमित्यत आह— "अस्ति वा इति। 'इदं वीर्यम्' अस्मादिलक्षणम् 'अस्ति' खलु। वीरयति नानाप्रकारकार्यारम्भाय ईरयति तद् वीर्यम्; विक्रियतेऽनेनेति वा वीर्यम्। 'तत् नु' तदेव वीर्यम् 'ते' इन्द्राय 'प्रयच्छानि' अहं वृत्रो ददानीत्यर्थः। तेन च 'मे' वृत्राय त्वं 'मा प्रहार्षीः' प्रहारं मा कार्षीः 'इति' संवदन् वृत्रः 'तस्मै' इन्द्राय 'यजूंषि' यजुर्वेदं प्रादात्।

इत्थमेकेन वज्रोद्यमनेन यजुर्विद्यामादाय, ऋक्सामविद्ये अपि आदित्सोरिन्द्रस्यापरं द्विर्वज्रोद्यमनमाह— "तस्मै द्वितीयमिति। तमेव वज्रं पुनरप्युद्यतवानित्यर्थः॥ ३॥

"स होवाचेत्यादि, व्याख्यातचरम्। 'ऋचः' ऋग्वेदमित्यर्थः। "तस्मै तृतीयमित्यादि, स्पष्टम्॥ ४॥

"स होवाचेति। एवं वेदप्रदानानुकरणेन यागविधानं सिद्धमिति दर्शयति— "तस्मादिति। एवं कथमित्यत आह— "यजुर्भिरेवाग्रे इति॥ ५॥

इष्टेर्नामनिर्वचनं प्रतिपादयति— "तस्य य इति। तस्य यजुर्वेदादेर्वीर्यस्य 'यः' 'योनिः' स्थानम्, 'आशयः' हृदयप्रदेशरूपं बभूव। आशेतेऽस्मिन्नित्याशयः। 'तं' योनिमाशयम् 'अनुपरामृश्य' हृदयप्रदेशे किं धारकमङ्गमिति विचार्य, 'संलुप्य' हस्तेनावेष्ट्य 'अच्छिनत्' छिन्नवान्; इन्द्र इति शेषः। 'सा एषा इष्टिः' त्रैधातवी जाता *। तस्याधिदैविकस्य भावस्य इदमाधियज्ञिकं रूपं प्रवृत्तमित्यर्थः। "तद्यदेतस्मिन्निति।

* त्रिधा दक्षिणा भवति त्रैधातवी'—इति कर्कः।

यस्मात् 'एतस्मिन्नाशये' हृदयप्रदेशे 'त्रिधातुः' त्र्यवयवः 'इव' 'एषा' त्रयी विद्या 'आशेत' अवस्थिता, 'तस्मात्' स आशयस्त्रिधातुः; त्रिधातोरिय मिति विद्यात्रयात्मिका इष्टिः 'त्रैधातवी नाम' * ॥ ६ ॥

"अथ यदिति। उभयोरिन्द्राविष्णोर्व्यापृतत्वात् उभयदेवत्या सा भवेदित्यभिप्रायः ॥ ७ ॥

"अथ यद् द्वादशकपाल इति। एषा त्रैधातवीष्टिः संवत्सरव्यापिनी ॥ ८ ॥

त्रयीविद्यारूपतां सम्पादयितुं हविषो व्रीहियवमयत्वं विधत्ते — "त मुभयेषा मिति। 'तं' व्रीह्यादिपिण्डम् 'उभयेषाम्' 'इति' ब्रुवन्। अन्यत्र विकल्पं दर्शयति — अत एव कात्यायनः— "व्रीहीन् यवान् वा हविषाम्"-इति †। व्रीहिमय मेवाग्रे इति व्यवस्थावचनाद् ग्रहणवदेवासङ्कीर्णाना मवहननं पेषणञ्चेति द्रष्टव्यम्। अत एव सूत्रम्— "तृतीयं यवानां मध्ये"-इति ‡। मध्ये तृतीयं भागं यवानां गृह्णीयात्, भागद्वयं तु

---

* "यत् त्रिः प्रायच्छत्, त्रिः प्रत्यगृह्णात्, तत् त्रिधातोस्त्रिधातुत्वम्"—इति तै० ब्रा० २. ४. १२. १२।

† का० श्रौ० सू० १५. ७. ३०। अस्यैव मुद्रितपुस्तकेऽपपाठः।

‡ 'अस्मिन् पुरोडाशे तृतीयं भागं यवानां मध्ये गृह्णीयात्। तत्रैवं कर्त्तव्यम्.—प्रथमे मुष्टौ व्रीहय एव ग्राह्याः; द्वितीये मुष्टौ प्रथम एको भागो व्रीहीणाम्, ततो भागद्वयं यवानाम्, एवं द्वितीयो मुष्टिः; तृतीये मुष्टौ प्रथमं भागद्वयं यवानाम्, तत एको भागो व्रीहीणाम्, एवं तृतीयो मुष्टिः; चतुर्थे व्रीहय एव'--इति तद्वृत्तिः।

व्रीहीणा मेव। न केवलं यवानां तृतीयभागस्य मध्ये ग्रहणं किन्तु अधिश्रयण मपि तथैवेत्याह – "व्रीहिमय मेवाग्र इति * ॥

इत्थं त्रैधातव्यास्त्रयीरूपत्वं प्रतिपाद्य राजसूययज्वनो विधेयता माह— "सैषा राजसूययाजिन इति। उत्तरेषु विनियोगेषु × × राजसूयेनोदयनीयाया अग्रहण माशङ्क्य राजसूयान्तर्भाव मापादयति आग्रयणादिवत्। ततश्च सैषा राजसूययाजिन उदवसानीयेष्टिर्भवतीत्येतावदेवात्र विधीयते— "उदवसानीयेति †। एतत्तु क्रमादेव प्राप्त मनूद्यते। उत्तमं कर्मावस्यति विमुञ्चत्यनयेति 'उदवसानीया' यौगिकोऽयं शब्दः ॥ ९ ॥

यज्ञस्यायातयामत्वसम्पादनाय त्रैधातवीष्टिः कर्त्तव्येत्याह – "सर्वान् वा इत्यादिना। इष्टिपशुसोमदर्विहोमात्मकत्वाद् राजसूयस्य तदनुष्ठानेन यज्ञक्रत्वित्यादयः सर्वेऽनुष्ठिता भवन्तीति। 'तस्य' यजमानस्य अपेक्षितकर्मणः कृतत्वादवशिष्टः 'यज्ञो' 'यातायामा' गतसारः 'इव' 'भवति'। 'सः' 'यज्ञः 'अस्माद्' यजमानात् कृतावशिष्टत्वेन 'पराङ्' पराचीनः 'इव' 'भवति'। यातयामत्वपरिहार मुपपादयति— "एतावानिति। 'एष त्रयः' ऋग्यजुस्सामात्मक-त्र्यवयवो 'वेदः' यत्परिमाणः सर्वो यज्ञः एतत्परिमाणः खलु। 'तस्य' त्र्यवयवस्य वेदस्य 'एतत्' स्वरूपं 'क्रियते', 'य एष आग्रयो योनिः'; 'तत्' तेन 'एतेन' त्र्यवयवेन 'वेदेन' 'पुनः' 'यज्ञम्' आरब्धवान् भवति, तथा सति 'अस्य' 'यज्ञः' अगतसारः स्यात्, यजमानाच्च न पराचीनः स्यात् ॥ १० ॥

* का० श्रौ० सू० १५. ७. ३२।

† "त्रैधातव्युदवसानीया"—इति का० श्रौ० सू० १५. ७. २६।

"सर्वान् वा इत्यादि। व्याख्यातचरम्। त्रैधातवी 'इष्टिरपि' देवसृष्टत्वेन प्रशस्तत्वादवावरोद्धव्या, अतः 'अनया' त्रैधातव्यापि मम 'इष्ट मसत्' यागः कृतो भवतु। 'अनयापि' इष्ट्वा 'सूये' अभिषिक्तो भूयासम् 'इति' अभिप्रायेण त्रैधातवी कार्येत्यर्थः। "तस्माद्वा एषेति, निगमनम् ॥ ११ ॥

एतस्या विनियोगान्तर मप्याह— "अथो य इति। 'सहस्रं' बहुतरं 'वा' दक्षिणां 'दद्यात्'। तस्यापि तस्मिन्नपि कर्मणि एषाङ्गभूता भवेत्। सा च भवन्ती आगन्तुकत्वादन्ते एव भवतीत्युदवसानीयेति व्यपदिश्यते। 'रिरिचानः' अतिरिक्तः। 'एतत्' खलु 'सहस्रं' बहु 'वाचः' वागायतनात् मुखादुत्पन्नं योऽयं अवयवी वेदः 'तत्' तेन व्रीह्यादिपिण्डात्मकेनाधियाज्ञिकेन त्रयेण वेदेन 'पुनराप्याययति' आपूरयति। "तस्मादिति, निगमनम् ॥ १२ ॥

"अथो ये दीर्घसत्र मित्यादि। प्रसन्नम्। "संवत्सरं वा भूयो वेति, दीर्घसत्रेण सम्बध्यते। "सर्वं मेषेति। वेदत्रयस्य पौरोडाशिकधातुत्रयीत्वेनेह कल्पनादित्यभिप्रायः ॥ १३ ॥

"अथो हैनयेति। अजातशत्रोरपत्यम् 'आजातशत्रवः' तम्, भद्रसेननामानं राजन्यम्, अरुणस्यापत्यम् 'आरुणिः' ऋषिरुद्दालकः 'अभिचचार' अभिचरितवान्। "क्षिप्रं किलेति। 'क्षिप्रं किल' शीघ्र मेव 'अस्तृणुत' अभिचारेण तं हिंसितवानेवेत्यर्थः। एतस्मिन्नर्थे श्रुतिर्याज्ञवल्क्यं प्रमाणयति— "इति ह स्माहेति। 'इन्द्रः अपि' 'एनया' इष्ट्वा 'वृत्रस्य' स्थानं त्रयीविद्याश्रयम् 'अच्छिनत्'। 'तस्मात्' परस्य स्थाननाशार्थम् 'एतया' अभिचारः कर्त्तव्य इत्यर्थः ॥ १४ ॥

"अथो हैनयापि भिषज्येदिति *। अनया इष्ट्या कथं परकृताभिचारपरिहार इत्याशङ्का तं कैमुतिकन्यायेन समर्थयते — "यद्वेवैकयर्चेति। एकेनैव यद्गुणादिमन्त्रेण नाम भैषज्यं क्रियते, तेन परकृतबाधा परिह्रियते, 'किमु' किमुत वेदत्रय-रूपयानया त्रैधातव्या अभिचारपरिहार इति † ॥ १५ ॥

कात्यायनेन राजसूयान्तःपातिनी मिष्टिं प्रस्तुत्य यद् दक्षिणा-दान मुक्तम्— "तिस्रस्तिस्रो दक्षिणा ददाति शतमानानि ब्रह्मणे धेनूर्होत्रे वासांस्यध्वर्यवे गा अग्नीधे"-इति ‡। तदिद मिदानीं विधत्ते— "तस्यै त्रीणीति। शतमानलक्षण मुक्तं पुरस्तात् §। "न वै ब्रह्मेति। अस्याय मर्थः— 'ब्रह्मा हि न प्रचरति' हवनादिक मध्वर्युवर्गवत् न करोति, 'न स्तुते' उद्गाता इव न स्तोत्रं प्रयुङ्क्ते, 'न शंसति' होतृवच्छस्त्रं न पठति। तस्मात् 'सः' ब्रह्मा यशोरूपः। 'हिरण्येन' अपि 'किञ्चन' किञ्चित् 'न कुर्वन्ति'; हिरण्यं साधनं कृत्वा यदन्नादिक मुपभुञ्जते, न तु हिरण्य मेव भुञ्जन्ति। अतो व्यवहारादिषु सुवर्णे दत्तेऽपि तस्य स्वरूपहानिर्नास्ति, अत-स्तदपि यशोरूपम्। तस्मात् हिरण्यस्य तत्सम्प्रदानकत्वं युक्त मित्यर्थः ॥ १६ ॥

"तिस्रो धेनूरिति। पयस्विनीः सवत्सा गाः होत्रे दद्यात्। उभयोः परस्परं योग्यता माह— "भूमा वै तिस्र इति।

---

* "भैषज्याभिचारयोरप्येषा"—इति का० श्रौ० सू० १५. ७. ३४।

† "एतयैव यजेताभिचर्यमाणः; सर्वो वा एष यज्ञो यत् त्रैधातवीयः सर्वेणैव यज्ञेन यजते नैन मभिचरन्स्तृणुते"—तै० सं० २. ४. ११. ७।

‡ का० श्रौ० सू० १५. ७. ३३। § ४. ३. २४.—पृ० ३०१।

त्विक्षणां सवत्सानां भूयस्त्वम्, होतुरपि नानामन्त्रपठनात्; अतस्तासां होतृसम्प्रदानकत्वं युक्तम् ॥ १७ ॥

"त्रीणि वासांस्यध्वर्यव इति। दद्यादिति शेषः। वस्त्राणां सर्वशरीराच्छादकत्वात् वासस्त्वम्; अध्वर्योरपि यज्ञशरीरस्य विस्तारकत्व मस्ति; "यज्ञस्य मात्रां विमिमीत उ त्वः"-इति-मन्त्रवर्णात् *। तत्र "त्व एकोऽध्वर्युः"-इति यास्कवचनम् †। यज्ञस्य मात्रां शरीर मित्यर्थः। गोदानं विधत्ते— "गा मग्नीध इति ‡ ॥ १८ ॥

एता दक्षिणाः सम्भूय संवत्सरात्मना प्रशंसति— "ता वा एता द्वादशेति। त्रीणि शतमानानि, तिस्रो धेनवः, त्रीणि वासांसि, इति नव श्रुत्युक्तानि; वत्ससहितानां पयस्विनीनां दानस्य सिद्धत्वात् तासां वत्सा अपि त्रय इति द्वादश। आग्नीध्रस्य ब्रह्मणा सह परिगणनाभावात् तद्दक्षिणां विहाय द्वादश दक्षिणा इत्युक्तम्। "गा मग्नीधे"-इति पृथक् दक्षिणाविधानात् तेन सह परिगणनपक्षे त्रयोदश भवन्ति; संवत्सर-

---

* ऋ० सं० १० ७१. ११ चतुर्थ-पादः।

† निरु० १. ३. ३ द्रष्टव्यम्।

‡ "त्रैधातव्यानुपूर्व्ययोगात्"—इति का० श्रौ० सू० १५. १०. २५। अत्राहुरेवं कर्कोपाध्यायाः— "त्रैधातव्येवान्ते भवति; आनुपूर्व्ययोगात्। त्रैधातव्येवान्ते पठ्यत इति न चानयोर्विकल्पः; आम्नानसामर्थ्यात्। तेन सौत्रामण्या मुदवसानीयत्व मुच्यते; उदवसानीयासन्निधौ पाठात् उदवसानीयेवोदवसानीयेति उपचारहृत्त्या। तथा च पाठः— 'अनया मेऽपीष्ट मसदनयापि स्वया'—इति। इह हि ब्राह्मणेऽस्य सवकाण्डस्योपान्त्यं ब्राह्मणं सौत्रामणीनाम, अन्त्यं तु त्रैधातवीति स्पष्टम् ॥

स्यापि यथोक्ताः * चैत्रादिमासाः † द्वादश, यदा मलिम्लुचो भवति तदा त्रयोदश। अतोऽस्या इष्टेर्द्वादशकपालसंस्कृतहविर्युक्तत्वात् संवत्सरसम्मितत्वम्, अतः संवत्सररूपाया इष्टेः द्वादश त्रयोदश वा दक्षिणा युक्ता इत्यर्थः ‡ ॥ १८ ॥ ७ [ ५. ५. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्याये पञ्चमं ब्राह्मणम् ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ ४ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम्,
सप्ताब्धीन् पञ्चसीरींस्त्रिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यौ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥
धान्याद्रिं धन्यजन्मा तिलभवमतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृतमजडो राजतं राजपूज्यः ।
आज्योत्थं प्राज्यजन्मा लवणजमनृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरिमकृत मुदा पात्रसात्सिङ्गणार्यः § ॥

---

* 'यथोक्तं'—इति ज ।

† 'सौरादिमासाः'—इति च, ङ ।

‡ एष त्रैधातवीयः तै० सं० २. ४. ११—१४ अनुवाकेषु द्रष्टव्यः ।

§ अतत्याष्टीप्यन्यो द्वितीयाध्यायान्ते (१६२ पृ०) द्रष्टव्याः ।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
पञ्चमकाण्डे पञ्चमाध्यायः समाप्तः ॥ ५ ॥

---

॥ इति पञ्चमकाण्डे चतुर्थः प्रपाठकश्च समाप्तः * ॥

॥ इति सवं नाम पञ्चमं काण्डं † समाप्तम् ॥

---

* इत उत्तरं मिह 'कण्डिका'—इत्येव क, 'कण्डिकासङ्ख्या १३१' —इति ख, ग, घ। तत्र १ ब्रा० २५ क, २ ब्रा० २३ क०, ३ ब्रा० १२ क०, ४ ब्रा० १० क०, ५ ब्रा० ७ क०, ६ ब्रा० ३५ क०, ७ ब्रा० १९ क०। तदासां सङ्कलनयास्मिन् प्रपाठके १३१ कण्डिकाः सम्पद्यन्ते।

† अत्र पञ्चमे काण्डे ब्राह्मणानां सङ्ख्या,— प्रथमे प्रपाठके ६, द्वितीये ७, तृतीये ५, चतुर्थे ७; सङ्कलनया २५। तत्र कण्डिकाः ४७१। प्रथमे प्रपाठके ११७, द्वितीये १०४, तृतीये ११९, चतुर्थे १३१; तदेतत्सर्वसङ्कलनयात्र ४७१ कण्डिकाः श्रुता इति सिद्धम्॥

# ॥ अथ मूलशुद्धिपत्रम् ॥

| अशुद्धम् | शुद्धम् | प्र० | अ० | क० | पृष्ठे |
| --- | --- | --- | --- | --- | --- |
| प्रसुच | प्रसुव | १. | १. | ४. | २ |
| सुरा | सुराग्रहं | १. | २. | १६. | १८ |
| प्रजा | प्रजापति | १. | ३. | ७. | ३३ |
| वे | वै | १. | ३. | ११. | ३४ |
| दधिक्राव्ण | दधिक्राव्णः | १. | ५. | २०. | ६६ |
| सुष | मूष | १. | ६. | १६. | ८१ |
| पुत्रा | पुत्रो | १. | ६. | १८. | ८२ |
| सर्व्वे | सर्व्वं | २. | २. | १. | १२१ |
| ०ह्यर्य० | ०ह्यार्य० | २. | २. | २. | १२२ |
| वै रिणं | वेरिणं | २. | २. | २. | १२२ |
| ऽतिसुच्यते | ऽतिमुच्यते | २. | २. | ५. | १२३ |
| साकमेधि | साकमेधै | २. | ३. | ६. | १३७ |
| नाष्ट्रया | नाष्ट्रा | २. | ३. | १४. | १४० |
| तद्वर्च्च | तद्दर्चं | २. | ४. | १२. | १५५ |
| ऋंषभो | ऋषभो | २. | ४. | १७. | १५७ |
| यच्छामाका | यच्च्छामाका | २. | ७. | ४. | १८१ |
| सोम राजा | सोमराजा | २. | ७. | १२. | १८४ |
| दुत | हुत | ३. | ४. | १०. | २७४ |
| तत् | तद् | ४. | १. | १२. | ३०७ |
| सुतेन | सुते न | ४. | ७. | १६. | ३८५ |

| | | |
|---|---|---|
| | Rs. | |
| Nyāyavārtika (Text) Fasc. 1-6 @ /10/ ... ... | 3 | 12 |
| *Nirukta, (Text) Vol. IV, Fasc. 1-8 @ /10/ each ... ... | 5 | 0 |
| *Nītisāra, Fasc. 2-5, @ /10/ each ... ... ... | 2 | 8 |
| Nityacārapaddhati Fasc. 1-7 (Text) @ /10/ each ... ... | 4 | 6 |
| Nityacraāpradipḥ, Fasc. 1-8 @ /10/- ... ... ... | 5 | 0 |
| Nyāyabinduṭikā, Fasc 1 ... ... ... ... | 0 | 10 |
| Nyāya Kusumāñjali Prakaraṇa (Text) Vol. I, Fasc. 1-6, Vol. II, Fasc. 1-3 @ /10/ each ... ... ... ... | 5 | 10 |
| Padumawati, Face. 1-4 @ 2/ ... ... ... ... | 8 | 0 |
| Pariciṣta Parvan, Fasc. 1-5 @ /10/ each ... ... ... | 3 | 2 |
| Prāk ta-Paingalam, Fasc. 1-7 @ /10/ each ... ... | 4 | 6 |
| Prithivirāj Rāsa, Part II, Fasc. 1-5 @ /10/ each ... ... | 3 | 2 |
| Ditto (English) Part II Fasc 1, @ 1/- ... ... | 1 | 0 |
| Prāk ta Lakṣaṇam, Fasc. 1 @ 1/8/- ... ... ... | 1 | 8 |
| Parācara Smriti, Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-6; Vol. III, Fasc. 1-6 @ /10/ each ... ... ... ... | 12 | 8 |
| Parācara, Institutes of (English) @ 1/ ... ... ... | 1 | 0 |
| Prabandhacintāmaṇi (English) Fasc. 1-3 @ 1/4/ each ... ... | 3 | 12 |
| *Sāma Vēda Saṁhitā, Vols. I, Fasc. 5-10; II, 1-6; III, 1-7; IV, 1-6; V, 1-8; @ /10/ each ... ... ... | 20 | 10 |
| Sānkhya Sūtra V ttī, Fasc. 1-4 @ /10/ ... ... | 2 | 8 |
| Ditto (English) Fasc. 1-3 @ 1/- each ... ... | 3 | 0 |
| *Sankara Vejay, Fasc. 2-3 @ /10/ ... ... ... | 1 | 4 |
| Shaddarsana-Samuccaya, Fasc. 1 @ /10/ ... ... ... | 0 | 10 |
| Sraddha Kriya Kaumudi, Fasc. 1-6 ... ... ... | 3 | 12 |
| Sucruta Saṁhitá, (Eng.) Fasc. 1 @ 1/- ... ... ... | 1 | 0 |
| Suddhi Kaumudi, Fasc. 1-4 ... ... ... ... | 2 | 8 |
| *Taittereya Saṁhitā, Fasc. 22-45 @ /10/ each ... ... | 15 | 0 |
| * Ditto Brāhman, Fasc. 3-25 @ /10/- ... ... | 14 | 6 |
| Ditto Prātisākhya, Fasc. I 3 @ /10/- ... ... | 1 | 14 |
| Tāṇdya Brāhmaṇ, (Text) Fasc. 1-19 @ /10/ each ... ... | 11 | 14 |
| Tantra Vārtika (English) Fasc. 1-6 @ 1/4/ ... ... ... | 7 | 8 |
| Tattva Cintāmaṇī, Vol. I, Fasc. 1-9: Vol. II, Fasc. 2-10, ; Vol. III, Fasc. 1-2, Vol. IV, Fasc. 1, Vol. V. Fasc. 1-5, Part IV, Vol. II, Fasc. 1-12 @ /10/ each ... ... ... ... | 23 | 12 |
| Tattvārthādhigama Sutrom, Fasc. 1-3 ... ... ... | 1 | 14 |
| Trīkāṇda-Maṇdanom, Fasc. 1-3 @ /10/ ... ... | 1 | 14 |
| Tul'si Satsai Fasc. 1-5 @ /10/ ... ... ... | 3 | 2 |
| Upamita-bhava-prapañcha-kathā Fasc. 1-11 @ /10/ each ... | 6 | 14 |
| Uvāsagadasāo, (Text and English) Fasc. 1-6 @ 1/ ... ... | 6 | 0 |
| Vallāla Carita, Fasc. 1 ... ... ... ... | 0 | 10 |
| Varsa K yā Kaumudi, Fasc 1-6 @ /10/ ... ... ... | 3 | 12 |
| *Vāyu Purāṇa, Vol. I, Fasc. 2-6; Vol. II, Fasc. 1-7, @ /10/ each | 7 | 8 |
| Vidhāno Pārigāt, Fasc. 1-8 ... ... ... ... | 5 | 0 |
| Vivādaratnākara, Fasc. 1-7 @ /10/ each ... ... ... | 4 | 6 |
| V hat Sayambhū Purāṇa, Fasc. 1-6 ... ... ... | 3 | 12 |
| *Yoga Aphorisms of Patanjali, Fasc. 2-5 @ /10/ each ... | 2 | 8 |

*Tibetan Series.*

| | | |
|---|---|---|
| Pag-Sam Thi Śiñ, Fasc. 1-4 @ 1/ each ... ... ... | 4 | 0 |
| Sher-Phyin, Vol. I, Fasc. 2-5; Vol. II, Fasc. 1-3; Vol. III, Fasc. 1-6 @ 1/ each ... ... ... ... ... ... | 14 | 0 |
| Rtogs *brjod dpag hkhri* Śiñ (*Tib.* & *Sans.* Abadān Kalpalatā,) Vol. I, Fasc. 1-6; Vol. II. Fasc. 1-5 @ 1/ each ... ... ... | 11 | 0 |

*Arabic and Persian Series.*

| | | |
|---|---|---|
| Ālamgīrnamah, with Index, (Text) Fasc. 1-13 @ /10/ each ... | 8 | 2 |
| Āl-Muquaddasi (English) Vol. I, Fasc. 1-3 @ 1/ ... ... | 3 | 0 |
| Āin-i-Akbarī, Fasc. 1-22 @ 1/8/ each ... ... ... | 33 | 0 |
| Ditto (English) Vol. I, Fasc. 1-7, Vol. II, Fasc. 1-5, Vol. III, Fasc. 1-5, @ 2/ each ... ... ... ... | 34 | 0 |
| Akbarnāmah, with Index, (Text) Fasc. 1-37 @ 1/8/ ... ... | 55 | 8 |
| Ditto (English) Vol. I, Fasc. 1-8; Vol. II, Fasc. 1-3 @ 1/4/ ... | 13 | 12 |
| Arabic Bibliography, by Dr. A. Sprenger ... ... ... | 0 | 10 |
| *Bādshāhnāmah, with Index, (Text) Fasc. 1-19 @ /10/ ... ... | 11 | 14 |
| Catalogue of Arabic Books and Manuscripts 1-2 ... ... | 2 | 0 |
| Catalogue of the Persian Books and Manuscripts in the Library of the Asiatic Society of Bengal. Fasc. 1-3 @ 1/ each ... ... | 3 | 0 |
| Conquest of Syria, Fasc. 1-9 @ /10/ ... ... ... | 5 | 10 |
| Dictionary of Arabic Technical Terms, & Appendix Fasc 1-21 @ 1/8/ ... | 31 | 8 |

The other Fasciculi of these works are out of stock, and complete copies cannot [be s]upplied.

Farhang-i-Rashīdī, (Text) Fasc. 1-14 @ 1/8/ each ... Rs 21
Fihrist-i-Ṭūsī, or Ṭūsy's list of Shy'ah Books Fasc. 1-4 @ 1/ each ... 4
Futūḥ-ush-Shām of Wāqidī, Fasc. 1-9 @ /10/ each ... 5
Ditto of Azādī (Text) Fasc. 1-4 @ /10/ each ... 2
Haft Āsmān, History of the Persian Masnawi, Fasc. 1. @ /12/ ... 0
History of the Caliphs, (English) Fasc. 1-6 @ 1/4/ each ... 7
Iqbālnāmah-i-Jahāngīrī, (Text) Fasc. 1-3 @ /10/ each ... 1
Iṣābah, with Supplement, (Text) 51 Fasc. @ 1/ each ...
Maāṣir-ul-Umarā, Vol. I, Fasc. 1-9; Vol. II, Fasc. 1-9; Vol. I I. Fasc. 1-10
Index to Vol. I, Fasc. 10-11; Index to Vol. II, Fasc. 10-12;
Index to Vol. III, Fasc. 11-12; @ 1/- each ... 35
Maghāzi of Wāqidī, (Text) Fasc. 1-5 @ /10/ each ... 3 2
Muntakhabu-t-Tawārikh, Fasc. 1-15 @ /10/ each ... 9 6
Muntakhabu-t-Tawārikh, (English) Vol. I, Fasc. 1-7; Vol. II, Fasc.
1-5 and 3 Indexes; Vol. III, Fasc. 1 @ 1/ each ... 15 0
Muntakhabu-l-Lubāb, Fasc. 1-19 @ /10/ each ... 11 14
Ma'āṣir-i-'Ālamgīrī, Fasc. 1-6 @ /10/ each ... 3 12
Nukhbatu-l-Fikr, Fasc. 1 ... 0 10
Niẓāmī's Khiradnāmah-i-Iskandari, Fasc. 1-2 @ /12/ each ... 1 8
Riyāẓu-s-Salātīn Fasc. 1-5 @ /10/ each ... 3 2
Ditto Ditto (English) Fasc. 1-5 @ 1/ ... 5 0
Tabaqāt-i-Nāṣirī, Fasc. 1-5 @ /10/ each ... 3 2
Ditto (English) Fasc. 1-14 @ 1/ each ... 14 0
Ditto Index ... 1 0
Tārīkh-i-Fīrūz Shāhi of Ziyāu-d-dīn Barni Fasc 1-7 @ /10/ each ... 4 6
Tārīkh-i-Fīrūshāhi, of Shams-i-Sirāj Alīf, Fasc 1-6 @ /10/ each ... 3 12
Ten Ancient Arabic Poems, Fasc. 1-2 @ 1/8/ each ... 3 0
Tuzuk-i-Jahāngīrī, (English) Fasc. 1 ... 1 0
Wīs o Rāmīn, (Text) Fasc. 1-5 @ /10/ each ... 3 2
Ẓafarnāmah, Vol. I, Fasc. 1-9 Vol. II, Fasc. 1-8 @ /10/ each ... 10 10

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. ASIATIC RESEARCHES, Vols. XIX and XX @ 10/ each ... 20 0
2. PROCEEDINGS of the Asiatic Society from 1870 to 1904 @ /8/ per No.
3. JOURNAL of the Asiatic Society for 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), 1885 (6), 1886 (8), 1887 (7), 1888 (7), 1889 (10), 1890 (11), 1891 (7), 1892 (8), 1893 (11), 1894 (8), 1895 (, 1896 (8), 1897 (8), 1898 (8), 1899 (8), 1900 (7) 1901 (7), 1902 (9), 1903 (8), 1904 (16), @ 1/8 per No. to Members and @ 2/ per No. to Non-Members.
*N. B.—The figures enclosed in brackets give the number of Nos. in each Volume.*
4. Journal and Proceedings, N. S., 1905, to date, @ 1-8 per No. to members and Rs. 2/ per No. to Non-members.
5. Memoirs 1905 to date. Price varies from No. to No. Discount of 25% to Members.
6. Centenary Review of the Researches of the Society from 1784-1883 ... 3 0
A sketch of the Turki language as spoken in Eastern Turkistan, by R. B. Shaw (Extra No., *J. A. S. B.*, 1878) ... 4 0
Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., *J. A. S. B.*, 1875) ... 4 0
7. Catalogue of the Library of the Asiatic Society, Bengal ... 3 8
8. Mahābhārata, Vols. III and IV, @ 20/ each ... 40 0
9. Moore and Hewitson's Descriptions of New Indian Lepidopters, Parts I—III with 8 colored plates, 4to. @ 6/ each ... 18 0
10. Tibetan Dictionary, by Csoma de Körös ... 10 0
11. Ditto Grammar ,, ,, ... 8 0
12. Kacmīracabdāmṛta, parts I and II @ 1/8/ ... 3 0
13. A descriptive catalogue of the paintings, statues, &c., in the rooms of the Asiatic Society of Bengal, by C. R. Wilson... ... 1 0
14. Memoir on maps illustrating the Ancient Geography of Kacmīr, by M. A. Stein, Ph.D., Jl. Extra No. 2 of 1899 ... 4 0
15. Persian Translation of Hāji Bābā of Ispāhān, by Hāji Shaikh Ahmad-i-Kirmāsi and edited with notes by Major D. C. Phillott. ... 10 0

---

Notices of Sanskrit Manuscripts, Fasc. 1-33 @ 1/ each ... 33 0
Nepalese Buddhist Sanskrit Literature, by *Dr.* R. L. Mitra ... 5 0

*N. B.*—All Cheques, Money Orders, &c., must be made payable to the "Treasu[rer] Asiatic Society," only.
30 7-07

BOOKS ARE SUPPLIED BY V.-P.-P